श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ हरिः ॐ ॥ नारायणाभिधंज्योतिःप्रत्यूहध्वांतशांतिकृत् । कमलाकमलानंदमंतःस्वांतमुपास्महे ॥ १ ॥ ऋचांपदान्युपादायतेषांभाष्यपदैःसह । कुर्मःसंवादितामात्रंयथाधीतंयथामति ॥ २ ॥ इहखलुसंसाराकूपारपारंजिगमिषतांप्रार्थनीयस्यभगवत्प्रसादस्यतज्ज्ञानमंतरेणासंभवात्तदर्थंप्रवृत्ताअपिवेदाअप्रतिपत्तिविप्रतिपत्तिभ्यांनतत्करणतामश्नुवते । अतस्तेषांभगवत्परत्वप्रकारप्रदर्शनार्थंकासांचिदृचांभाष्यंकरिष्यन्नाचार्यःप्रारिप्सितस्याविघ्नेनपरिसमाप्तयेप्रचयायचनारायणप्रणामस्तवनेकुर्वन्प्रयोजनंचदर्शयति ॥ [१।१] **नारायणमिति** ॥ अनवधारितस्वरूपस्यप्रणामायोगात्स्वरूपावधारणस्यचलक्षणेनविनाऽसंभवान्नारायणस्यलक्षणमाह ॥ [१।१] **निखिलेति** ॥ निखिलाः निःशेषाः । पूर्णाः प्रत्येकं । तेचतेगुणाश्च । अर्णइत्युदकनाम ततोमत्वर्थेतद्धिताइतिडप्रत्ययः । निखिलपूर्णगुणैरर्णःसमुद्रइवनिखिलपूर्णगुणार्णस्तं । केतेगुणाइत्यतोलेशेनदर्शयति ॥ [१।२] **उच्चेति** ॥ अमिताश्चतेसूर्याश्चसूर्यामिताः कडाराःकर्मधारयइतिविशेषणस्यपरनिपातः । उच्चाःसामस्त्येनाविर्भूतप्रकाशाश्चतेसूर्यामिताश्चतेषांद्युतिरिवद्युतिर्यस्यासौतथोक्तः । यद्वोच्चाश्चतेसूर्याश्चतैरमिताऽपरिच्छिन्नाद्युतिर्यस्येतिव्याख्येयं । लक्षणांतरमाह ॥ [१।२] **अशेषेति** ॥ अशेषेणनिरस्तादोषायस्मात्सोशेषनिरस्तदोषः तं । लक्षणद्वयंकेवलव्यतिरेकिणासाधनीयमितिभावेनाह ॥ [१।२] **सर्वेश्वरमिति** ॥ अस्वतंत्रस्यप्रपंचस्येश्वरेणभाव्यमितिप्रसिद्धमेव । ऋक्प्रतिपाद्यतयानतंगुरुत्वेनापिनमति ॥ [१।२] **गुरुमिति** ॥ तदुपपादयति ॥ [१।२] **अजेति** ॥ ऋगर्थंवक्ष्यामीत्यनेनसन्निधापितमृगर्थस्यवचनंश्रवणंज्ञानंचतदितिपरामृशति । यस्मात्तदृगर्थवचनादिकमस्यनारायणस्या



च्यतेपंचविधंनिरुक्तमिति । सु शोभनं । वः सुखं । यस्य शोभनताचसुखस्यानंततयेत्यनंतसुखत्वात्सुवः । स्वरितिपक्षेनिरुक्तत्वादुकारलोपः । शब्दस्वाभाव्यादव्ययत्वं । किंतथापीत्यतआह ॥ [१।३] **गुणैरिति** ॥ यस्माद्व्याहृतीरितस्तस्मात्सएवगायत्र्यर्थईरितः । व्याहृत्यर्थत्वाद्गायत्र्याः । केननिमित्तेन । गुणैस्ततइतितत् त्यजियजितनिभ्योडिदितितनातेरदिप्रत्ययः । योग्यतयागुणानांसंबंधः । प्रसविता जगतोजनकइतिसविता । षूङ्प्राणिप्रसवइत्यस्मात्तृच् । वरणीयोभजनीयइतिवरेण्यः । वृञएण्यइतिवृणोतेःकर्मण्येण्यः । गुणोन्नतेर्हेतोर्वरणीयइतितद्वरेण्यशब्दार्थयोर्हेतुहेतुमद्भावोदर्शितः । भा दीप्तिः । रतिः क्रीडा । गत्यर्थानांज्ञानार्थत्वाद्गमेर्ज्ञानार्थता । भादीप्तौ रमुक्रीडायां गम्लृगतौ धातुसमुदायादसुन् । उणादयोबहुलमित्युक्तत्वात् । अदिभूभ्यांडुतजितियथा । असुन्प्रत्ययसंयोगेनभातेर्ह्रस्वता रमेर्गमेश्चटिलोपः । देवशब्दस्तूत्तरत्रव्याख्यास्यते । धीमहीत्यस्यतात्पर्यंध्येयइति । ध्यायतेःसंप्रसारणंविकरणलोपआत्मनेपदंचच्छांदसं । व्यत्ययोबहुलमितिवचनात् । अखिलैर्जनैरितिबहुवचनार्थः । तृतीयपादतात्पर्यंप्रेरकइति । नइतिबहुवचनप्रयोगादशेषेत्युक्तं । चुदप्रेरणइत्यस्माल्लेट् । एवंयोजनीयं । योनोस्माकमशेषजीवानांधियोबुद्धीःप्रचोदयात्प्रेरयेत् । तस्यसवितुर्देवस्यनारायणस्यतद्गुणैस्ततंतस्मादेववरेण्यंभर्गोरूपंधीमहिचिंतयामइति । गायत्र्यर्थत्वेपिभगवतःकिमायातंप्रकृते अतआह ॥ [१।४] **सईति** ॥ यतोगायत्र्यर्थस्तस्मात्सहरिरेवपौरुषेसूक्तईरितःप्रतिपादितः । गायत्र्यर्थत्वात्तस्य । नचपुरुषसूक्तेपुरुषःप्रतिपाद्योनविष्णुरितिवाच्यं । यतःपूर्णत्वात्पुमान्पुरुषोनामसएव । पॄपालनपूरणयोःअस्मात्पुरःकुषन्नितिकुषन्प्रत्ययः । तथापिकिमित्यतआह ॥ [१।५] **सएवेति** ॥ यतः

तितुष्टिकरंतस्मात् । तदस्येत्येकंवापदं । तस्योक्तलक्षणस्यास्यप्रतिपिपादयिषिततयाबुद्धिसन्निहितस्येति । नन्वेवंचेत्कथंकृ
तनारायणनुतिप्रणामस्यापिभाष्यकारस्यवक्ष्याम्यृगर्थमितिप्रतिज्ञानपारंगतेति । मैवंभोः । उक्तमेतत् कासांचिदृचामेवव्या
ख्याप्रतिज्ञातेति । अतएवह्युपक्षत्रमितिपरमेश्वरस्यभयादिदोषराहित्यंतत्प्रसादाद्भयाभावलक्षणंमोक्षंचप्रतिपादयंतींसर्वशा
स्त्रार्थोपसंहाररूपामृचंव्याख्यायसमापितोग्रंथः । प्रसिद्धंधनमेवहीत्यंतेमांगलिकंपदंचोपनिबद्धं । असमस्तव्याख्यानप्रति
ज्ञासूचनायमध्यएवैकोवर्गोनव्याख्यातः । नकिर्मांकिरित्यादिव्याख्यानप्रकारशिक्षणंचैतमेवार्थंप्रकाशयतीति । नन्वग्न्या
दिप्रतिपादनपराणामृचांव्याख्यानादिकंकथंनारायणस्यातितुष्टिकरं । न । सकलवेदानांमुख्यतोभगवत्प्रतिपत्तिहेतुत्वात् ।
कुतएतदित्यतआह ॥ [१।३] ॐमिति ॥ असौ परमेश्वरः । ॐ ॐकारार्थस्तावत् । केननिमित्तेन । अशेषगुणाधारइति । इति
शब्दोहेतौ । यथोक्तं ओतत्ववाचीह्योंकारइति । कुतइत्यतश्चोक्तमशेषेति । ॐकारोह्यशेषगुणाधारत्वंवक्ति । तथाभूतश्चप
रमेश्वरएवेतिसएवोंकारार्थः । किंचनारायणशब्दोहिभगवतिप्रसिद्धः सचतस्यगुणपूर्तिवाची तत्समाख्यानादोंकारोपितत्प
रइतिनिश्चीयतइत्याह ॥ [१।३] नारायणोप्यसाविति ॥ किमतोयद्येवमित्यतआह ॥ [१।३] पूर्णइति ॥ यद्यस्मादेवमोंकारार्थस्तस्मा
द्व्याहृतीरितःसएव । प्रणवार्थाव्याहृतयइतिवचनात् । किन्निमितं । यद्यस्मात्पूर्णोभूतिवरोनंतसुखश्चतस्माद्व्याहृतीरितः । भूबहौ
बहुःपूर्णतायामित्युक्तत्वाद्भवतेःक्वि(पि)प्पूर्णत्वाद्भूः । भूत्यैश्वर्येणवरोमहैश्वर्यवानितिभुवः । भवतेरौणादिकोडुप्रत्ययः ।
वरशब्दस्यांतलोपश्चनिरुक्तत्वात् । यथोक्तं वर्णागमोवर्णविपर्ययश्चतथापरौवर्णविकारनाशौ । धातोस्तदर्थातिशयेनयोगस्तदु

पुरुषसूक्तार्थोभगवांस्तस्मात्सएवाखिलवेदार्थः । पुरुषसूक्तार्थत्वात्तेषां । वेदार्थत्वात्सएवसर्वशास्त्रार्थश्च । स्मृतीनांश्रुतिमू
लत्वात् । ततश्चसएवसर्वशब्दार्थः । तेषांवैदिकत्वादित्येतद्द्वयंप्रसंगादुक्तं । एवमनुमानेनपरमेश्वरस्यसर्ववेदार्थत्वंप्रसाध्यश्रु
त्यापिसाधयति ॥ [१।५] इत्याहेति ॥ इत्येतमुक्तमर्थंपरमेश्वरस्यसर्ववेदार्थत्वंतावाएताःसर्वाऋचःसर्वेवेदाःसर्वेघोषाएकैवव्याहृ
तिःप्राणएवेति परोत्कृष्टा विस्पष्टवादिनीतियावत् उपनिषदप्याह । अनेनैवमंत्राणांकर्मणिविनियुक्तानामविवक्षितार्थत्वे
नाव्याख्येयत्वमित्यपिपरास्तं । नन्वेवंसर्ववेदानांभगवत्परत्वाद्यस्यकस्यापिवेदस्यव्याख्यानादिकंतस्यतुष्टिकरमितिकिमृ
चामेवव्याख्यानेनेत्यतआह ॥ [१।६] विशेषेणेति ॥ सर्वेवेदाइत्युक्त्वायदृचइतिपुनरभिधत्ते तेनजानीमोविशेषेणाप्यृगर्थ
तामीश्वरस्याहोपनिषदिति । अन्यथातद्वैय्यर्थ्यात् । अतस्तद्व्याख्यानादिकंतस्यातितुष्टिकरमितितदेवक्रियतइति ।
तावाएताऋचइतीत्यस्यावृत्त्यायोज्यं । वेदांतराद्विशेषतःकथमृचांपरमेश्वरपरत्वमितितंप्रकारमाह ॥ [१।६] यइति ॥ यो
देवानांनामधाएकएवेतिश्रुत्याऽग्न्यादिदेवनाम्नांतद्गतत्वेनभगवद्वाचित्वेनकारणेनर्चांतद्गतत्वेनविशेषतःस्पष्टत्वाद्विशेषेणाप्यृ
गर्थतामाहेति । इदमुक्तंभवति । वेदांतरस्यखल्वापाततःकर्मादिप्रतिपत्तिपरस्यभगवत्परताज्ञानंमंदानांदुःशकंभवति ।
ऋचांत्वग्न्यादिगुणवर्णनपराणामग्न्यादिनाममात्रस्यभगवद्वाचित्वज्ञानमात्रेणभगवत्परत्वावधारणंसुकरमितितासांविशेषतः
परमेश्वरपरत्वमुच्यतइति । तदुक्तं । ऋचस्तुविशेषतइंद्रादिनामभवतोविष्णोर्गुणानल्पज्ञानामपिप्रकाशयंतीति प्राणेनाराय
णएवेतिविद्यादिति ॥ ७ ॥ एवंऋगर्थव्याख्यानमुपपाद्याद्यसूक्तस्यतात्पर्यंतावदाह ॥ [१।६] तत्रेति ॥ तत्र ऋक्षु । अग्रे प्रथम

सूक्ते । अग्निनामकंभगवंतमाह प्रतिपादयतिवेदः । अग्निनामवतःप्रथमप्रतिपादनेकोहेतुरित्यतआह ॥ [१।७] अग्रणीत्वमिति॥ यद्यस्मादग्रणीत्वमग्नित्वं अग्निशब्दाभिधेयं । इति तस्मात् । तन्नाम अग्निनाम । अग्रे प्रथमसूक्ते । प्रयुक्तंभवेत् । सह्यग्रणीर्नामयःस्तुत्यादावग्रेवर्तते । तथात्वंचेश्वरस्याग्निशब्दोवक्ति । अतस्तन्नाम्नैवाग्रेस्तुतिरुपपन्नेति । अत्रवृद्धसंमतिमाह ॥ [१।७] एवमेवेति ॥ अनेनैवाभिप्रायेणाग्निशब्दमादिंकृत्वाभगवान्बादरायणःसर्वशब्दानामीश्वरपरतयानिरुक्तिंनिर्वचनमाह । तदेवकुतइत्यतआह ॥ [१।७] यथैवेति ॥ यथा येनप्रकारेणनिरुक्तौकृतायां । इतिभगवतःप्रतिज्ञावाक्येनाग्निशब्दमादिंकृत्वा निरुक्तिमाहेतिज्ञायतइत्यर्थः । नहिभगवतोयादृच्छिकीप्रवृत्तिः नाप्येतद्विहायनिमित्तांतरकल्पनेप्रमाणमस्ति यतएवमग्निशब्दस्यप्रथमत्वमुपपन्नं तेनकारणेनतत्राहाग्रेग्निनामकमितिसंबंधः । एवमुत्तरत्रापिसूक्तादिक्रमनियमेकारणानिविशेषशास्त्रबलेनज्ञातव्यानीतिप्रदर्शनार्थमिदमुक्तं । चिरंतननिरुक्त्याद्यनुसारेणप्रवृत्तेऽस्मद्व्याख्यानेऽर्वाचीननिरुक्त्यादिविसंवादो नादरणीयइत्येतदप्यनेनसूचितंभवति । ऋगर्थश्चत्रिविधोभवति एकस्तावत्प्रसिद्धाग्न्यादिरूपः अपरस्तदंतर्गतेश्वरलक्षणः अन्योध्यात्मरूपः । तत्रितयपरंचेदंभाष्यं । तत्राग्निमीळइत्याद्यामृचंव्याचक्षाणोग्निशब्दार्थंतावन्निर्वक्ति ॥ [१।८] अग्निर्शब्दोयमिति ॥ अय मादितःप्रयुक्तोऽग्निशब्दोग्नेस्तदंतर्गतहरेश्चबाह्ययज्ञे अध्यात्मंचहरेर्ज्ञानयज्ञेमुख्यामुख्यत्वाभ्यामग्रएवाशेषपूज्येभ्यःपूर्वमेवाभिपूज्यता मभिपूज्यत्वमाहेतिसंबंधः । अग्रशब्दात्सप्तमीसमर्थादभिपूज्यइत्यर्थेतद्धितोनिप्रत्ययोरशब्दलोपश्च । तथाग्र्यत्व मग्रेभवत्वमुत्तमत्वं । पूर्ववद्भवार्थेनिप्रत्ययोरशब्दलोपश्च । तथाग्रनेतृत्वंप्रथमप्रवर्तकत्वं । अग्रशब्दोपपदान्नयतेःकर्तरिडिप्रत्यय उपपदरशब्दलोपश्च । तथात्तिमत्तृत्वं धातुनिर्देशोयं । तेनतदर्थस्यकर्तालक्ष्यते । बहिःसंहर्तृत्वंहविषोत्तृत्वंच । अध्यात्मंविषयाणां । अत्तेःकर्तरिनिप्रत्ययोदस्यचगः । तथांगनेतृतां अध्यात्मंविष्णोरग्नेश्चसर्वशरीराणांप्रवर्तकत्वं । अंगशब्दोपपदान्नयतेर्डिप्रत्यय उपपदानुस्वाराकारलोपश्च । तथाऽगनेतृतां स्वतोनगच्छतिनप्रवर्ततेयद्विश्वंतस्यप्रवर्तकत्वं । पूर्ववन्निरुक्तिः । नेतृशब्दस्तृन्नंतः तेनद्वितीयायाःसमासः । अग्निमीळइत्यस्यव्याख्यानं तंस्तौमीति । ईडस्तुतौ । ऋक्षुडस्यळःप्रायेण । कुतः पुरोहितं पुरः पूर्वमेवानादितएव हितं । प्रतिसंबंध्यपेक्षायामशेषस्येतिशेषोक्तिः । बहुलंछंदसीतिचतुर्थ्यर्थेषष्ठी । प्रभुमित्युदात्तस्वरार्थः । उदात्तस्योच्चतार्थतेतिहिवक्ष्यति । हितोहिस्तुत्योभवति । किंचयज्ञस्यऋत्विजं । जातावेकवचनं । यज्ञानांबाह्यानामाध्यात्मिकानांचऋत्विजं । तत्कथमित्यतआह ॥ [१।९] सदाऋत्विक्नियामकत्वेनेति ॥ तदधीनत्वादर्थवदितिसूत्रात् । अध्यात्ममिंद्रियदेवाऋत्विजः । कर्मांगत्वादृचामृत्विग्वाक्यतायामात्मनो नियामकस्यज्ञानप्रदस्यचस्तुतिरुपपन्नैव । किंचदेवं द्योतनाद्विजयात्कांत्याव्यवहृतेरपिगत्यारत्याचेति द्योतनादेःकर्तृत्वात्तथास्तुत्या स्तुतिकर्मत्वाद्देवाख्यं । दीव्यतेर्द्योतनाद्यर्थात्कर्तरिपचाद्यच् । स्तुत्यर्थात्कर्मणिघञ् । गुणाधिकोहिस्तुत्यःस्यात् । किंचहोतारं होतृसंस्थं । ऋत्विजमित्युक्तत्वाद्धोतारमितिपुनरुक्तिरित्यतआह ॥ [१।१०] विशेषतंइति ॥ तत्कथमित्यतआह ॥ [१।११] अग्निसंस्थेनेति ॥ ऋत्विक्षुपरमेश्वरःसन्निहितएव । होतरिपुनरत्रस्तुत्येनाग्निसंस्थेनैवरूपेणेतिविशेषतो(ऽग्निसंस्थता)होतृसंस्थता । अनयाचविवक्षयानपुनरुक्तिरिति । एतदपिकुतइत्यतआह ॥ [१।११] यतंइति ॥ होतृदेवतासन्यतोग्निर्होतरिस्थि

तोतोऽग्निसंस्थेनरूपेणहोतृसंस्थतायुक्तैवेत्यर्थः । एवंविष्णौहोतृशब्दंव्याख्यायाग्नौव्याख्याति ॥ यतंइति ॥ अतोहोतोच्य
तइतिशेषः । तथाचश्रुतिः । तद्येयंवाक्सोयमग्निःसहोतेति । ऋग्वेदिनोहिहोतृत्वापेक्षिणोहोतृसंस्थस्यस्तुतिर्युक्तैव । अध्या
त्मंहोतृशब्दंव्याख्याति ॥ इंद्रियेति ॥ यद्यस्मादिंद्रियाख्येष्वग्निष्वर्थानां तत्तदिंद्रियविषयलक्षणानांहविषांहोताहरिस्त
स्माच्चहोतृनामकः । भोगप्रदस्यस्तुतिःकर्तव्यैव । परमसुखत्वाच्चतस्यस्तुतिःसुखार्थिनांयुक्तेति रत्नधातमशब्दंव्याख्याति ॥
रत्नेति ॥ रमतेर्भावेक्त्नप्रत्ययः । रत्नंरतिंधत्तइतिरत्नधाः । आतोमनिन्क्वनिब्वनिपश्चेतिविच् । अतिशयेनरत्नधाःरत्नधा
तमः । नवाएकेनाक्षरेणछंदांसिवियंतीतिवचनान्नछंदोभंगः । यद्यपिरत्नशब्दोधननामसुपठितः तथापितदपरित्यागेनार्थांतर
स्योक्तत्वान्नदोषः ॥ १ ॥ आचारोप्यस्तीत्युच्यते ॥ अग्निःपूर्वेभिः । सपूर्वैः ॥ सोग्निस्तद्गतोध्यात्मगतोहरिश्च । पूर्वेभिः
पूर्वैः । बहुलंछंदसीतिभिसऐस्त्वाभावः । अतीतैः । नूतनैः नूशब्दोद्यपर्यायः । ततःसायंचिरमितितनः । वर्तमानैः । उतश
ब्दादेष्यैरागामिभिरपि । लटःसद्वेत्यत्रयोगविभागेनाकारोप्यादेशोव्याख्यायते । एवंसर्वैःऋषिभिर्विज्ञानाद्विशिष्टज्ञानवत्त्वा
दृषिनामकैःदेवादिभिरीड्यःस्तुत्यः । ऋषज्ञानइत्यस्मात्किप्रत्ययः । स्तुतश्चसोग्निरिहतेषांबाह्ययज्ञेदेवान्हविर्भुजःआवक्षति
आनयेत् । ज्ञानयज्ञेचेंद्रियदेवांस्तेषांविशेषेणोपकारिणःकरोति । दीर्घादटिसमानपादइत्यतोदेवानितिनकारस्यरुः । आइत्यु
पसर्गस्यव्यवहिताश्चेतिव्यवहितेनवक्षतीत्याख्यातेनसंबंधः । एवमुत्तरत्रापिज्ञातव्यं । वक्षतीतिवहतेर्लेट् । वहतिनयत्योः
प्रापणार्थत्वाल्लेटश्चलिङर्थेलेडितिलिङर्थत्वादानयेदित्युक्तं ॥ २ ॥ किंच ॥ अग्निनारयिं । तेनैव ॥ स्तोतातेनैवाग्निनातत्प्र

सादेनरयिं बाह्येधनात्मकं अध्यात्मंविद्यात्मकंवित्तमश्नवदाप्नोति । अनेनपोषमेवेत्येवशब्दस्याग्निनेत्यनेनापिसंबंधःसूचितः ।
अश्नवदित्यश्नोतेर्व्याप्तिकर्मणोलडर्थेव्यत्ययोबहुलमितिपंचमोलकारःपरस्मैपदंच । सिब्बहुलंलेटीतिबहुलग्रहणात्सिबभावः ।
प्राप्तस्यतस्यवित्तस्य दिवेदिवे दिवसेदिवसे नित्यमितियावत् । पोषमेव पुष्टिमेवप्राप्नोति । नपुनर्लोकवद्धीनतामित्येवशब्द
व्यावर्त्यकथनं । किंचयशसं यशश्चाप्नोति । यशःशब्दादमोऽलुक् पुँलिंगत्वंवाछांदसं । कथंभूतं । वीरवत्तमं वीरः पुत्रः ।
सोस्मिन्नस्तीतिवीरवत् अतिशयेनवीरवदितिवीरवत्तमं पुत्रेणसम्यग्युक्तं । सामर्थ्यात्सम्यक्तापुत्रविशेषणं । इदंबाह्ये । अध्या
त्मंवीरशब्दोभावप्रधानः । वीरवत्तमंयशो वीर्यवत्तमंज्ञानंसुखंच । एवेतिबाह्यपुत्रादिव्यावृत्तौ । वेतिव्यवस्थितोविकल्पः ॥ ३ ॥
एवंस्तुतेरुपपत्तिंतृचेनोक्त्वास्तौति ॥ अग्नेयं । यंयज्ञं ॥ हेअग्नेत्वंयमध्वरं यज्ञमितिपृथग्वचनादध्वनिरतं । ञमंताड्डइ
तिडः । विधिमार्गस्थितं विहितप्रकारेणानुष्ठितंयज्ञंबाह्यमांतरंच । विश्वतो विश्वस्मिन्काले । सदैव । परितोभवतीतिप
रिभूः । असि भवसि । परितोभूत्वारक्षसीतियावत् । ततोन्यत्रापिदृश्यतइतिपरियोगेद्वितीया । सइत्सएवयज्ञोदेवेषुगच्छति
देवानाप्नोति । असंशयमित्येवशब्दतात्पर्यं । परमेश्वररक्षितमेवयज्ञंदेवाःस्वीकुर्वंति । तादृशस्यैवज्ञानस्यदेवादिकंविषयोभव
तीति ॥ ४ ॥ अग्निर्होता । सोखिल ॥ सोग्निः । होता पूर्ववत् । कवित्वेऽखिलग्रहणेसर्वज्ञानायक्रतुःप्रज्ञायस्यासौकविक्रतुः
सद्भिर्गुणैस्ततःसंततो खिलं विश्वंयमयतिचेतिसत्यः । सद्भावेसाधुभावेचेतिवचनात्सच्छब्दोगुणवाची । सदुपपदात्तनोतेः
क्विप्प्रत्ययोडिच्च । यमेश्चडः । सच्चासौयश्चेतिसत्यः । यमयतीतिस्वार्थेणिच् । चित्रमद्भुतंश्रवःकीर्तिर्यस्यासौचित्रश्रवाः

अतिशयेनचित्रश्रवाश्चित्रश्रवस्तमः । अग्र्यकीर्तीनांपुरुषाणांमध्येउत्तमइतियावत् । देवःपूर्ववत् । एवंभूतोभगवान्देवेभि
र्विबुधैर्यज्ञभुग्भिरिंद्रियाभिमानिभिश्चदेवैःसहयज्ञस्थानंभक्तशरीरंचप्रत्यागमत् । सार्वकालिकोलुङ् लेड्वा।आगंता भवति।
तत्रविशेषतःसन्निहितोभवति । अखिलभक्तानांबाह्याध्यात्मिकपूजास्वीकारतत्परःसन्निति शेषः । आगमनंनहविराद्याशया
किंतुभक्तप्रियतयेतिभावः ॥ ५ ॥ १ ॥ **यदंग । यजमानाय** ॥ प्रियसंबोधनेंगशब्दः योग्यतयासत्संबंधः । अंग सत्प्रि
य । अंगिरः अंगानांरस । सर्वशरीराणांप्रेरक । पूर्वपदस्येकारउत्तरपदलोपश्चच्छांदसः । तथाचश्रुतिः । एतमुएवांगिरसं
मन्यंतेंगानांयद्रसस्तेनेति । अग्नेत्वंदाशुषे यजमानाय। दाश्टदाने । दाश्वान्साह्वान्मीढ्वांश्चेतिनिपातनात् । भद्रंकरिष्यसी
तियत् सनर्थेलृट् । भविष्यद्विषयत्वसाम्यात् । कर्तुमिच्छसीतियत् तदिच्छारूपमीहनं तवेत् तवैव । सत्यमवितथं । अस्मा
इदंदास्यामीतीच्छसिचेददास्येव । यत्करिष्यसितत्सत्यमितियथास्थितयोजनायांस्तुतिर्नस्यात् । यजमानःपूजयतिस्वयंफलं
ददातीत्येवंविनिमयमात्रंनभवतीतिभावेनोक्तंत्वच्चेष्टयेति। वर्तयित्वा यजमानेनेतिशेषः । पूजादिकर्मणांप्रवर्तकोपित्वमेवेति।
अनेनांगिरःशब्दप्रयोगस्यप्रयोजनमुक्तंभवति । अंगानांरसेत्यध्यात्मंव्याख्यानं । बहिर्विष्णौयोजयति ॥ **यदिति** ॥ य
द्यस्माद्धरिर्वह्निगस्तस्मादंगिराः । वह्निगत्वेपिकथमंगिराइत्यतआह ॥ **अंगिरःपुत्रइति** ॥ यतःकारणात्क्वचित्कालेऽग्नि
रंगिरसःपुत्रोंगिराःपुत्रोस्यवाऽभवत्तेनांगिराः । कार्यकारणशब्दानांसांकर्यदर्शनात् । तद्गतोपितदधीनत्वादर्थवदित्यंगिराइ
ति । अनेनाग्नावपिव्याख्यातं ॥ १ ॥ **उपत्वा । वस्तः** ॥ अत्रवस्तरितिपदंतावदनूद्यव्याचष्टे ॥ **वस्तर्दिनमिति** ॥ अ

हरित्यर्थः । हेअग्ने धिया बुद्ध्या । बुद्ध्यादिभिर्गुणैः । अल्पाअपीतिशेषः । वयंदिवेदिवे दिवसेदिवसे । तत्रापिदोषा
वस्तरहोरात्रं । सदेतियावत् । नमोभरंतः अध्यात्मंमनसा बहिःकर्मवाग्भ्यां त्वन्नमसंभराः । तवनमनंसंबिभ्राणाःसंतः ।
नमनंनमःसंबिभ्रतीतिसंभराः । उच्चगुणमीश्वरमपित्वा त्वामुपेमसि उपयाम । इदंतोमसीति इत् । शरणंव्रजेम । बुध्येति
पदसामर्थ्यादल्पाअपीतिशेषेवक्तव्येस्तुतित्वसिध्यर्थमीश्वरंत्वामुच्चगुणमपीत्यपिशेषोवक्तव्योभवति । धियोपेमसीत्यपिसंभ
वेगुणाधिक्यलाभायशेषोक्तिः । महागुणस्यशरणप्राप्तौसाधनहीनश्चेत्कथंशरणंयायाइत्यतःप्रागुक्तमंगेत्येतदत्राप्याकृष्यव्या
ख्यातंप्राणिनामभीष्टेति । केवलंभक्त्यतिशयवशाच्छरणमुपयामेति ॥ २ ॥ **राजंतं । देदीप्यमानं** ॥ अध्वराणां य
ज्ञानां । राजंतं राजानं । राजतेरौणादिकोझः झोंतः । बाह्याध्यात्मिकाध्वरेशं । ऋतस्यगोपां यथार्थज्ञानगोपं ।
यथार्थज्ञानस्यगोप्तारं । ऋचिगुपेराकारः । भाष्येपचाद्यच् । स्वेदमे स्वेसद्मनिस्वर्गादौहृदयेच । दीदिविं देदीप्य
मानं । दीव्यतेर्यङ्लुगंतादिकारप्रत्ययोऽभ्यासस्यचेकारः । वर्धमानं सार्वकालिकःशानच् । ताच्छील्यार्थश्चानश्
वा । सदावृधं सदापूर्णं । इगुपधलक्षणःकः क्विप्वा । त्वामुपेमसीतिपूर्वेणसंबधः ॥ ३ ॥ **सनः । पितेव** ॥
हेअग्नेस एवमस्माभिःशरणंप्राप्तस्त्वंच त्वंतुनोऽस्माकंपितेवपुत्राणांसूपायनः अधिकरणेल्युट् । सूपाश्रयः । शोभनोपाश्र
योभव । पितेवेत्यनेनैव ( सूनवइति ) लब्धेपिपुनःसूनवइत्युक्तस्यतात्पर्यमाह ॥ **यद्वेति** ॥ नकेवलंपितेवपुत्रमात्राणां
किंतुपितौरससूनवे । छंदसिषष्ठ्यर्थेचतुर्थीवक्तव्या। औरससूनोर्यद्वत्तथेति । अतएवभिन्नवाक्यतासूचनायेवेत्युक्त्वापुनर्यद्व

दित्युक्तं । किंचत्वंनो स्मान्स्वस्तये संततसौख्याय सदासम्यक्सत्वायवा सचस्व रक्ष। यथारक्षणेनसंततसौख्यादिकंभवति तथारक्षेति । स्वस्तयइतिसुपूर्वकंसत्तावाचिविभक्तिप्रतिरूपकमव्ययं । सत्तावाचिनांसौख्यवाचित्वमपि सद्भाववाचिनः शब्दाःसर्वेतेसुखवाचकाइतिप्रमाणसिद्धं । तस्मादुभयथाव्याख्यातं । अनेकार्थत्वाद्धातूनांसचतिरिहरक्षायांवर्तते । सेवा याअयोगात् ॥ ४ ॥ २ ॥ एवंव्याख्यातस्यसूक्तस्यव्याकरिष्यमाणानांचज्ञानादिकमृष्यादिज्ञानेसत्येवसफलंनान्यथा । योहवाअविदितार्ष( र्षेयछं )च्छंदोदैवतब्राह्मणेनमंत्रेण ( यजति ) याजयतिवाध्यापयतिस्थाणुंवर्च्छतिगर्तेवापद्यतप्रेमीयते वाइतिश्रुतेः । तस्मादृषिच्छंदोदैवतादिकंज्ञापयन्नृषिंतावदाह ॥ [१।२७] मुनिरिस्त्विति ॥ विशेषतश्चवेदानांभगवानृषिः । पौरुषेयवाक्यानामुत्पत्त्यनंतरमेवदर्शनं वेदानांतुसर्वदेतिविशेषः । कुतएतदित्यतआह ॥ [१।२२] योब्रह्माणमिति ॥ योब्रह्माणं विदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्माइतिश्रुतिस्तावद्ब्रह्मणोपिभगवान्वेदादिकमुपदिदेशेतिप्राह । तेनज्ञायतेसएवसर्व विद्यानामृषिरिति । नह्येवंविधस्याऽन्योध्यापकःसंभवति । श्रुतिःप्राहेतिवक्ष्यमाणेनान्वयः । अस्यमहतोभूतस्यनिश्व सितमेतद्यदृग्वेदोयजुर्वेदःसामवेदोऽथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानान्य स्यैवैतानिनिश्वसितानीत्यपराचश्रुतिः ऋग्वेदादिकमस्यविष्णोरेवनिश्वसितंप्राह । तेनापितस्यर्षित्वंज्ञायते । निश्वसितमि तिहिनिश्वसितमिवानायासेनादिकालेतेनोच्चरितमित्यर्थः । वाचोबभूवुरुशतीःश्वसतोस्यनस्तइतिभागवतेपिस्फुटमेतमर्थंप्र तिपादयद्वचोस्ति । उशतीरुशत्यःप्रकाशमानाः । ब्रह्मांडेपि पुराणे । तथा एतदर्थस्याभिधायकं परंवचोस्ति । तत्पठति ॥



[३।१] हयग्रीवादिति ॥ रुद्रशेषविपाअपि ब्रह्मणोजगृहुः । तेभ्यःशक्राद्याः तेभ्योदक्षाद्याः तेभ्यःसनकाद्याः मनवश्च । तेचवि श्वस्मिंश्चक्रुः जगत्युपदिदिशुः । ततस्तेषामुपदेशादखिलाजगतिव्याप्ताश्च । हृदिस्थइत्यादिसात्वतसंहितावाक्यं । सदैवाखि लेषुप्रेरयति तत्रापिपूर्वंब्रह्मणेददाविति ।योब्रह्माणमितिश्रुतौवेदपदंसर्वविद्यापरमितिज्ञापयितुंद्वितीयश्रुत्युदाहरणं । उभयत्रा पिविष्णोरप्रतीतेःपुराणाद्युदाहरणमिति । एवंपरमेश्वरःसर्वविद्यानामृषिरित्युपपाद्यब्रह्मापितथेत्याह ॥ [३।४] सकृदिति ॥ यस्मा त्तेनपरमेश्वरेणानंतशक्तित्वाद्युगपत्समुदीरितमखिलंविद्याजातमादिकाले सकृन्निगदमात्रेणब्रह्मणांतर्गतस्यव्यासस्यप्रसादा न्नित्यशक्तितइतितत्प्रसादायत्तनित्यशक्त्यागृहीतं तस्मादेवंसर्वविद्यानांप्रथमप्रतिपत्तृत्वाद्ब्रह्माप्यखिलस्यविद्याजातस्यमुनिर्भ वति । एवंसर्वविद्यानामृषिमुक्त्वातत्प्रभेदानामृष्यंतरंचाह॥ [३।५] सुपर्णइति ॥ मुनिरितिसंबंधः । एतौचद्वितीयप्रतिपत्तृत्वात् ब्रह्मणोनंतरप्रतिपत्तृत्वान्मुनित्वेविषयेद्वितीयौसंप्रकीर्तितौ । ननुपरमेश्वरःस्वयमेवसर्वविद्यानांप्रतिपत्तेतिमुनिर्भवतु अधीत विद्यास्तुब्रह्मादयःकथमृषयइत्याशंकापरिहारार्थमृषित्वंतावदाह ॥ [३।६] यइति ॥ यथायःस्वयमध्ययनेनविनैवयद्वाक्यंपश्यति सतस्यवाक्यस्यर्षिःप्रकीर्तितः एवंयोद्वादशावृत्तेरर्वागधीत्यापिप्रतिपद्यतेसोप्यृषिरेव । तथाभूतोहिस्वयंप्रतिभातविद्यकल्पए वभवेत् । नह्यन्यएतावन्मात्रेणाध्ययनेनसर्वविद्याःप्रतिपत्तुंशक्नोति । ब्रह्माद्यास्तुभगवत्प्रसादात्स्वयंप्रतिभाताखिलविद्याः सकृदधीतवंतइत्यृषित्वंतेषामुपपन्नमितिभावः । यद्येवंब्रह्मादीनांस्वयंप्रतिभातविद्यत्वादृषित्वंतर्हितेषामध्ययनंकिमर्थमित्यत आह ॥ [३।७] यत्स्वयमिति ॥ सुपर्णादेर्यत्स्वयंप्रतिभातस्यवेदादेर्गुरोर्वचोनिगदरूपंतदस्माभिर्दृष्टोयंवेदोवायत्किंचिद्वेतिसंशय

नि(निरासेन)वृत्त्यर्थंवेदएवायमितिनिश्चयार्थंभवति । विरिंचस्यतुसंशयाभावात्केवलंधर्मकारणंभवति । महतोहिधर्मस्य
कारणंपरमेश्वरादध्ययनं । एवंपौरुषेयापौरुषेयभेदेनसर्वविद्यानामृषिभेदमुक्त्वावेदेष्वेत्रावांतरभेदेनतमाह ॥ [२।८]ऋचामिति॥
ततः सुपर्णाद्यनंतरमृगादीनामथर्वाद्यंतानांशक्राद्याएकर्षिपर्यंताऋषयः । कुतस्तेषामृषित्वेसुपर्णाद्यानंतर्यं । यतस्तेतृतीया
प्रतिपत्तारईरिताः । एवशब्दः ऋचामेवेत्यादिनासंबध्यते । चस्त्वर्थः । अथर्वणामंगिरसांच । द्विभागस्याप्यथर्ववेदस्येत्य
र्थः । तद्भेदानामथर्वणांत्वेकर्षिरप्यृषिर्भवति । ततोर्वाक्तनानप्यृषीन्पूर्वोक्तानुवादेनाह ॥ [२।९]इत्युक्ताइति ॥ इत्येतेप्रायेणा
विभक्तविद्यासमुदायानामृषयस्त्रिविधाउक्ताः । एतेभ्योन्ये चतुर्थाश्च । पृथक्पृथक् एकैकस्मिन्नप्यृगादिसमुदायेऽवांतरभे
दानांशाखादीनामृषयःसंति । तेचशास्त्रांतराज्ज्ञातव्याइत्यर्थः । एवंचतुर्विधानृषीनुक्त्वातेषांस्मरणंविधातुंतस्यफलमाह ॥
[२।९]एतज्ज्ञानादिति ॥ एतदित्याद्यानांत्रिविधानांपरामर्शः । दृष्टस्यकिम्वित्यर्थः । चतुर्थानामपिप्रतिपत्तृणांज्ञानात्फलंभवे
त् तत्त्वैहिकमितियोजना । ऋगाद्यवांतरभेदानांसूक्तादीनांचतुर्थाऋषयःसंतीत्युक्तं । तत्रचैकैकस्यापिसूक्तादेरेकैकएवेतिनि
यमोनास्तीत्याह ॥ [२।१०]तेचेति ॥ एतच्चसर्वैपिस्मर्तव्याइतिज्ञापनार्थमुक्तं । बहवएवेतिसंबंधः । ननुयदिविष्ण्वाद्याःसर्वविद्या
नामृषयस्तर्हितद्वाक्यतातासांस्यात् । तथाचोक्तं यस्यवाक्यंसऋषिरिति । ततश्च त्रिष्वादित्यंद्रुपदेषुबद्धः अवैनंराजावरुणः
ससृज्यात् सनोहिरण्यरथमित्याद्ययुक्तंस्यात् । नहिविष्ण्वादीनांबंधमोक्षप्रार्थनमिंद्राद्रथप्राप्तिरित्यादिकंयुज्यते । अतआह॥
[२।१०]तस्यामिति ॥ प्रार्थनादिषुवाक्येषुविवक्षितेषुसत्सुविष्णुस्तानिवाक्यानितस्यांतस्यांबंधाद्यवस्थायांतत्तद्रथादिफलप्राप्तिवि



शेषवत्तयातेषांशुनःशेपादीनांवाक्यतयापश्यति । यूपेहंबद्धोस्मिबद्धंमांवरुणोमोचयतु इंद्रप्रसादादहंहिरण्यरथंप्राप्तोस्मीत्या
दिकंशुनःशेपोतीतकल्पेप्रावोचत् वक्ष्यतीतिवाविष्णुःपश्यति । नतुस्ववाक्यतयेत्यर्थः । एवंब्रह्मासुपर्णोऽन्येवामुनयःस्वायो
ग्यार्थस्यप्रतिपादकानिवाक्यानियेषामृष्यंतराणांयोग्यानितद्वाक्यतयापश्यंतीतिनकश्चिद्विरोधः । एवमधमाअप्यृषयउत्त
मर्षियोग्यार्थाभिधायिवाक्यानितद्वाक्यतयापश्यंतीत्यपिद्रष्टव्यं । यथा अहंरुद्रायधनुरातनोमीत्यादि । यथैकैकमपिवाक्य
मनेकर्षिदृष्टंनतथातदर्थोपिसाधारणइत्याह ॥ [२।११]तत्तदिति ॥ यस्ययस्यऋषेर्योयोभगवन्महिमाद्यभिधायिवाक्यार्थोदर्शनयो
ग्यस्तत्तदर्थाभिधायितयैवतत्तद्वाक्यमसावसौपश्यतीत्यर्थः । एवंपुरुषानृषीनुक्त्वास्त्रियआह ॥ [२।१२]सर्वेति ॥ वेदशब्देनसर्व
विद्याउच्यंते । नहिस्वाभिमतमपश्यंत्यभिमानिनीभवति । भारतीचेतिसंबंधः । ननुवायुःकस्मादृषित्वेननोक्तइत्यतआह ॥
[२।१२]व्याख्यातइति ॥ ब्रह्मणा ऋषितयाव्याख्यातेननिमित्तेनमरुदपिसर्वविद्यानामृषिर्व्याख्यातएव । तयोःसमगुणत्वात् ।
एवंरुद्रादिष्वपिद्रष्टव्यं । यदिलक्ष्म्यादीनामप्यखिलविद्यानांद्रष्टृत्वमस्तिकथंतर्हिविष्ण्वादीनामेवर्षित्वंशास्त्रेषूच्यते । नता
सामित्यतआह ॥ [२।१२]स्वेति ॥ यस्मात्ताःस्वभर्त्रनंतरंसर्वविद्यानांद्रष्ट्र्यइतिभर्त्रुक्त्यैवसिध्यति । यतःप्रायोभार्याभर्तृसमानध
र्मिणीभवति तत्तस्मादृषित्वेविद्यमानेप्यर्थसिद्धत्वात्तेभ्यो भर्तृभ्योहिरुक् पृथगृषित्वेनतानोदिताइति । तासांतेषांचर्षित्वे
व्यापारमाह ॥ [२।१३]ताइति ॥ संत्वेतास्तेचर्षयस्ततश्चकिमित्यतआह ॥ [२।१३]मुनित्वेनेति ॥ उदीरिता कर्तव्यतया । तात्पर्यद्योत
नायस्मर्तव्यास्तेचेतिपृथग्योगः । दृष्टादृष्टफलहेतुत्वादित्यर्थः । एवमृषीनुक्त्वातत्स्मरणंचविधायछंदसामपिस्मरणंविधत्ते

छंदस्त्वेनचतासांस्मृतिरुदीरितेति । तत्रकस्यछंदसःकादेवतेत्यतआह ॥ गायत्रीति ॥ ताःसर्वाः प्रागुक्ताःश्रीर्ब्रह्माणी चभारती । तथागरुडश्चगायत्रीबृहतीच । ब्रह्माण्यनुष्टुप् । इंद्राणीत्रिष्टुप् । नकेवलंगायत्रीलक्ष्म्याद्याः किंतुस्वाहाचगायत्रीत्युच्यते । वारुणीजगती । वक्ष्यमाणदेवतांतरसमुच्चयार्थश्चशब्दः । एवशब्दोऽन्यथोक्तिनिरासार्थः । नकेवलंब्रह्माण्यनुष्टुप्किंतुरोहिणीतथारोहीणीचानुष्टुप् । एवंताराचबृहती । शचीपंक्तिश्च । सौरीउष्णिक् । सर्वदेवस्त्रियश्चजगत्योमताः । मित्रावरुणयोर्भार्येविराडितिचकीर्तिते । सर्वदेव्यःसर्वाण्यतिच्छंदांसिप्रकीर्तिताः । आसांचविराडितिनाम । एवंछंदसांदेवताउक्त्वातदवांतरभेदानाह ॥ तास्ताइति ॥ यस्यछंदसोयावंतोवर्णास्तत्तदूनत्वेऽधिकत्वेविन्यासभेदेनावांतरभेदेषुचतास्तास्तत्तच्छंदोदेवताएवदेवताइत्यर्थः । तत्रनामविशेषमाह ॥ निचृदिति ॥ एकेनाक्षरेणन्यूनानिचृत् । एकेनाधिकाभुरिक् । द्वाभ्यांन्यूनाविराट् । द्वाभ्यामधिकास्वराट् । एवंन्यूनत्वादिनागायत्रीनिचृदादिसंज्ञाभवति । तथोष्णिगाद्याअपीत्यर्थः । प्रस्तारेत्यादिकंचनाम विन्यासभेदेनावांतरभेदानामित्यर्थः । प्रस्तारेतिपंक्तिविशेषः । एतच्चछंदोग्रंथादवगंतव्यं । ननुताः सर्वागायत्रीत्यादिनयुज्यते एकानेकतादात्म्यानुपपत्तेरित्यतआह ॥ बह्वीनामिति ॥ नात्रदेवतानांछंदसांचैक्यमुच्यते किंतुतत्तदभिमानितयातत्तन्नामवत्त्वं । तच्चबह्वीनांदेवतानामेकच्छंदोभिमानित्वेनैकनामवत्त्वंतुनविरुध्यतइत्यर्थः । एतेनाग्नेर्गायत्र्यभवदित्यादिकमपिव्याख्यातंभवति । गायत्रीबृहत्योर्लक्ष्म्याद्यादेवताउक्ताः नैतावदेवेत्याह ॥ सर्वेति ॥ तिसृणां श्रीर्ब्रह्माणीचभारतीत्युक्तानां । यथाक्रमंसर्वच्छंदोभिमानिताचास्ति । पूर्वोक्तंतुविशेषविवक्षयेतिभावः । एवमृषिच्छंदसी



उक्त्वादेवतामाह ॥ देवतेति ॥ स्वयं साक्षात् । प्रभुरितिदेवतात्वोपपादनार्थं । तत्र भगवति । प्रसिद्धाःपुरुषसूक्तादिविद्याः । ऋते वर्जयित्वाऽन्यासांविद्यानांश्रीश्चदेवता । तथात्रच श्रीदेव्यां । प्रसिद्धाविद्याःअंभृणीसूक्ताद्याऋतेऽन्यासांब्रह्मैवदेवता । ततःपरंचतेन वक्ष्यमाणेनतारतम्यक्रमेणैव । पूर्वप्रसिद्धवर्जं पूर्वस्यांदेवतायांप्रसिद्धाविद्यावर्जयित्वाऽन्यासांविद्यानांतुशक्रांतादेवतामताः । कोसौदेवतानांक्रमइत्यतआह ॥ ब्रह्मेति ॥ गिरौ सरस्वतीभारत्यौ । अंगिरःसुतो बृहस्पतिः । तद्वत् कामपुत्रादिवत् । तत्स्त्रियो मन्वादिस्त्रियः । प्रधानमरुतः प्रवहाद्याः । मारुता स्तदन्ये । क्रमात्क्रमयुक्तावर्तेते । इत्यनेनक्रमेणोदिताइमाविद्यानांदेवताज्ञातव्याः । अत्रप्रायोद्वंद्वगृहीतानांसाम्यंज्ञातव्यं । प्रधानमरुत्सुप्रवहःसूर्यादिभ्यः पूर्वपठितव्यः । सूर्यसोमधर्मादितत्स्त्रियइत्यत्रसूर्यसोमधर्माणांमनुपत्न्याश्चसाम्यं । आदिपदगृहीतानांप्रसूत्यादिस्त्रीणांतदवरत्वं । वारिपतिर्धर्माद्यनंतरः । यद्येताःसर्वाअपिविद्यादेवताःकथंतर्हिशक्रांतादेवताइत्युक्तं तत्राह ॥ इंद्रांवराइति ॥ यद्यप्येताःसर्वाअपिविद्यादेवताभवंत्येव तथापिपृथक्पृथक्विशेषेण व्यावर्तकेन । लिंगेन श्रुतिलिंगादिनाज्ञापकेनैवेंद्रावरास्तत्रतत्रविद्यासुदेवताःस्युः नतुश्रुतिलिंगाद्यभावे ।इंद्रपर्यंतास्तुश्रुत्याद्यभावेपिपूर्वप्रसिद्धवर्जंदेवताःस्युरितिशक्रांतादेवता इत्युक्तं । अन्येतुब्रुवते तत्तच्छ्रुत्यादिनैवविष्ण्वाद्यादेवताःस्युरिति तदसदितिभावेनाह ॥ एषएवेति ॥ विधिः प्रकारः । देवतास्थितिः । प्रामाणिकत्वादितिशेषः । विष्ण्वादीनांविद्यादेवतात्वंविवृणोति ॥ वेदादीति ॥ वेदादिवर्णपर्यंतशब्दैः समासव्यासयोगेनपृथक्वाच्याइति समस्तवेदेनैका तत्प्रभेदैस्तावत्यः तदवांतरभेदैरपितावत्यइत्येवंप्रकारेणवाच्याइत्यर्थः ।

तदपियथायोगं योगवृत्तिमनतिक्रम्य । यथान्यायं तत्तन्मूर्तीनांज्ञापकंन्यायंचानतिक्रम्यज्ञातव्यं। अन्यासामपि लक्ष्म्यादि देवतानांमूर्तयोविद्यासुवाच्याज्ञातव्याः । एवमृषिच्छंदोदेवतास्वरूपमुक्त्वातत्रप्रमाणमाह ॥ [३।२] ऋक्संहितायामिति ॥ यास्कनिर्मितप्रसिद्धनिरुक्तव्यावृत्तयेव्यासनिर्मितइति । विष्णोःसर्वविद्याप्रतिपाद्यत्वेश्रुतीरपिपठति ॥ [३।३] सर्वइति ॥ सर्वे वेदायत्पदमामनंति नामानिसर्वाणियमाविशंति तावाएताःसर्वाऋचः इंद्रंमित्रंवरुणमग्निमाहुः इत्यादीत्यविभक्तिकोनिर्देशः। सुपांसुलुगितिस्मरणात् । इत्यादिका । अत्र विष्णोःसर्वविद्यावेद्यत्वे । परा ऋक्संहितादितोन्याचप्रमास्ति । विष्णोःसर्वो त्तमत्वान्मुख्यतःसर्वविद्यावेद्यत्वं लक्ष्म्यादीनामप्याधिक्यतारतम्यानुसारेणविद्यावेद्यत्वमित्युक्तं।तदाधिक्यतारतम्यंप्रमाणैः साधयन्विष्णोःसर्वोत्तमत्वंतावदादौसाधयति ॥ [३।४] देवतेति ॥ अस्मात् संसारात् । अत्रच अस्यामपिशाखायां । सर्वशो वि ष्णोःसर्वोत्तमत्वादिकं दृश्यते । अत्रेतिप्राचुर्याभिप्रायं । यद्वाऽत्रचप्रसिद्धास्वपिश्रुतिष्वित्यर्थः । तत्कथमित्यतआह ॥ [३।५] नतइति ॥ परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंतीत्यादिनाश्रुतिःसर्वोत्तमत्वादीन्गुणान्विष्णोराह । तांश्चकेवलानै श्वरानेव विष्णुमात्रनिष्ठानाह । दोषांस्तुकापिश्रुतिस्तस्यनवक्ति । अतोनन्यसाधारणात्युत्तमानंतगुणवत्त्वान्निर्दोषत्वाच्चत स्यसर्वोत्तमत्वंज्ञायते । नन्वेवंभावोब्रह्मरुद्रादीनामपिविद्यतइति नेत्याह ॥ [३।६] जातेति ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजा तानिपरिताबभूव । हेप्रजापतेभवान् जातानि उत्पत्तिमंति । विश्वानि सर्ववस्तूनि । परिभूतवान् । तत्स्वामित्वेनवर्तते । त्वदन्यस्तुनपरिताबभूवेति श्रुतिर्ब्रह्मणोप्यैश्वर्यस्यमर्यादामाह । जातेतिविशेषणेनाजातविश्वपरिभवनस्यप्रतिषिद्धत्वात् ।



सर्वैनैवरेमेसोबिभेत् एकोनारायणआसीन्नब्रह्मेत्यादिनादुःखभयादिकान्दोषानपिब्रह्मणःश्रुतिराह । अतोनतस्यभगवत्सा म्यं । नापिरुद्रस्य । यतो नयस्येंद्रोवरुणोनमित्रोव्रतमर्यमानमिनंतिरुद्रः । नारातयस्तमिदंस्वस्तिहुवेदेवंसवितारंनमोभिरि त्यादिकाश्रुतिः । यस्यविष्णोःव्रतंकर्मेंद्रोनमिनातिनजानाति । गतिकर्मसुपाठात् । नवरुणः नमित्रो नार्यमा नरुद्रः अरा तयो दैत्याअपिनमिनंति । विश्वस्यप्रसवितारंदेवंनमोभिर्नमनैरिदमैहिकामुष्मिकंस्वस्तिसुखमुद्दिश्यहुवेह्वयामीत्यज्ञानपूर्व कांस्तान्दोषानेवरुद्रेचाह । तदेवस्पष्टयति ॥ [३।७] यमिति ॥ यंकामयेतंतमुग्रंकृणोमि अहंरुद्रायधनुरातनोमि अस्यदेवस्यमी ळ्हुषः माशिश्नदेवाअपिगुर्ऋतंनः घ्नन्शिश्नदेवांअभिवर्पसाभूदित्यादिश्रुतौपराधीनपदप्राप्त्याद्याबहवोदोषारुद्रस्येरिताः । अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्व१तःसमुद्रे । ततोवितिष्ठेभुवनानुविश्वोतामूंद्यांवर्ष्मणोपस्पृशामि । परोदिवापरएना पृथिव्यैतावतीमहिनासंबभूवेतिश्रीदेव्याअपिभगवदाश्रयत्वंबहुशःकथितं । ततोनसापितत्समेति । यस्मादहंततःपरमेश्वरा द्वितिष्ठे उत्थितोत्पन्ना । तस्मादसौममयोनिरित्यर्थः । वर्ष्मणा बलेनशरीरेणच । उपस्पृशामि वशीकरोमि । व्याप्नो मिच । संबभूव ततइतिवर्तते । एवंविष्णोःसर्वोत्तमत्वंलक्ष्म्यादीनांततोवरत्वंचप्रसाध्यदेव्याब्रह्माद्युत्तमत्वंचसाधयति ॥ [३।८] तदाश्रयत्वमिति ॥ लक्ष्म्याश्रयत्वं । अन्येषां ब्रह्मादीनामपि । तत्रैव अहंरुद्रेभिरितिसूक्तएव । निश्चयात् स्फुटंकथि तं । अथब्रह्मणोरुद्राद्युत्तमत्वंसाधयति ॥ [३।९] ब्रह्मैवेति ॥ हिरण्यगर्भःसमवर्तताग्रइत्येतस्मिन्सूक्तेब्रह्मणःप्रथमोत्पत्तिमुक्त्वा यस्यदेवाइत्यादिनारुद्रादीनांततोजनिरुक्ता । विश्वाजातानिपरिताबभूवेतिजन्मवतांरुद्रादीनांतद्वशत्वंचोक्तं । यस्यछा

यामृतंयस्यमृत्युरितिपालकानांसंहारकाणांचेंद्रादीनांरुद्रादीनांचतत्प्रतिबिंबत्वंचाब्रवीत् । पुनर्यस्येतिपृथग्योगादादरतइत्युक्तं । अथवायोर्विष्णवाद्यवरत्वंरुद्राद्युत्तमत्वंचसाधयति ॥ अनंतादिति ॥ ईशाना लक्ष्मीः । इति वायोर्विष्णवाद्यवरत्वादिकं । तमेताःसप्तक्षितयउपतिष्ठंते तद्याइमाअक्षंल्लोहिन्योराजयस्ताभिरेनंरुद्रोन्वायत्तः वायुरस्माउपामंथत्पिनष्टिस्माकुनन्नमा । केशीविषस्यपात्रेणयद्रुद्रेणापिबत्सह । पूषण्वतेमरुत्वतेविश्वदेवायवायवे । इत्याद्याअप्यपराःप्रमाः । अत्र वायोरुद्राद्युत्तमत्वे संति । तमक्षणिस्थितंवायुं एतावक्ष्यमाणा अक्षितयोऽक्षीणगुणाः सप्तदेवताउपतिष्ठंते सेवंते ॥ तत्तत्र याइमाअक्षन्नक्षिणि लोहिन्योलोहिता राजयोरेखा स्ताभिस्तदधिष्ठानेनैनंवायुंरुद्रोऽन्वायत्तःतदधीनोवर्तते । कुत्सितान्नमयतीतिकुनन्नमा केशीप्रशस्तकेशवान् वायुर्यद्यदारुद्रेणसहपात्रेण विषस्यविषमपिबत् । तदाऽस्मैरुद्रायतदनुजिघृक्षयेति यावत् । तद्विषमुपामंथत् । तस्यैवविवरणंपिनष्टिस्मेति । विश्वेषांरुद्रादीनांदेवोविश्वेदेवः । इंद्रपरिवारत्वाद्वायोरिंद्राद्युत्तमत्वंविप्रतिपन्नमितितत्साधयते ॥ नारायणइति ॥ अदितिर्लक्ष्मीः । विभुरिंद्रः । शतांशाद्वायुतोवराइत्यनेनवाय्वादेर्लक्ष्म्यादितोधिकावरत्वंसूचयति । शक्राद्वायोराधिक्यमितिसंबंधः । तमेताःसप्ताक्षितयउपतिष्ठंतेयच्छुक्रंतेनेंद्रइतिश्रुतिः । अयंतएमितन्वापुरस्ताद्विश्वेदेवाअभिमायंतिपश्चात् । यदामह्यंदीधरोभागमिंद्रादिन्मयाकृणवोवीर्याणीत्येतत्पूर्वाअन्याअपिश्रुतयःशक्रादपिवायोराधिक्यमाहुः । कस्यांचिद्युद्धवेलायामिंद्रंप्रतिवायोर्वचनं । हेइंद्राऽयमहंतन्वाआयुधादिनिरपेक्षेण शरीरेणतेपुरस्तादेमियुद्धभूमिंप्रवेक्ष्यामि । त्वदादयःसर्वेदेवाःमांपश्चान्मदनंतरमभियंतु । त्वंतुयदायस्मान्मयामत्प्रेरणयैवम



ह्यंभागंदीधरोमदुद्देशेनयज्ञभागमधारयः । मामपूजयइतियावत् । आदित्तस्मादेवावांसहवीर्याणिकृणवःकुर्वइति तुरश्रुतिश्चवायोःशक्रादाधिक्यमाहेतिसंबंधः । विष्णोरुपेंद्ररूपेणेंद्रानुचरत्वात्तदाधिक्यंविप्रतिपन्नमितितत्साधयति ॥ विहिसोतोरिति ॥ यज्ञेषुसोमसवनायर्त्विजोव्यसृक्षत विसृष्टाः । प्रेरिताअभूवन् । तेचेंद्रंदेवंद्योतनादिगुणैःपरिपूर्णनामंसतहि । कीदृग्विधेषुयज्ञेषु । यत्रपुष्टेषुपुष्टानांपूर्णानामप्यर्यः । स्वामीमत्सखा । वृषाकपिर्विष्णुरमदत्सुखीसमवर्ततेति । विष्णोरितिपंचमी । एतयोःश्रुत्योःविष्णोर्वाचकस्यस्फुटस्याभावाच्छ्रुत्यंतरमुदाहरति ॥ वेधाइति ॥ आयोविवायसचथायदैव्यइंद्रायविष्णुःसुकृतेसुकृत्तरः । वेधाअजिन्वत्त्रिषधस्थआर्यमृतस्यभागेयजमानमाभजदितिविष्णुनामतोविष्णुनाम्नोपेतंवचनमेतमेवार्थमाह । यःसुकृते साधुकारिणे । इंद्रायदैव्य स्तस्यपरमंदैवतं । सुकृत्तरो तिशयेनसाधुकारी । वेधाः विशेषेणधारणपोषणकर्ता । त्रिषधस्थः श्वेतद्वीपादिस्थानत्रयस्थोविष्णुरार्यंवामनावतारेज्यायांसं यजमानं अश्वमेधयाजिनमिंद्रं । सचथाय सुखावस्थित्यै । आविवाय अनयत्संवृतवान् । अजिन्वत् अजनयत् । ऋतस्ययज्ञस्यभागेचाभजदिति । तेयेशतमिंद्रस्यानंदाः सएकोबृहस्पतेरानंदइतिजीवानंदतारतम्याभिधात्रीश्रुतिरस्येंद्रस्यजीवतामेवदर्शयति । तेनचेश्वरादवरत्वंज्ञायते । सूर्यस्यकैश्चित्सर्वोत्तमत्वमंगीकृतमितितत्प्रतियोगिकमिंद्रवायुविष्णूनामाधिक्यंसाधयति ॥ आहेति ॥ श्रुतिरितिवक्ष्यमाणेन संबंधः । ईशतामाधिक्यं । यःसूर्यंयउषसंजजान योअपांनेतासजनासइंद्रइतिश्रुतिरिंद्रस्यसूर्यादाधिक्यमाह । जजान जनयामास । एषहवैब्रह्म योयंपवते तमेताःपंचदेवताःपरिम्रियंतेविद्युद्वृष्टिश्चंद्रमाआदित्योग्निरितिश्रुतिर्वायोःसूर्यादाधिक्यमाह ।

तंपरिम्रियंतइतितेनसंह्रियंतइत्यर्थः । चक्षुषासृष्टौद्यौश्चादित्यश्चेत्येतत्पूर्वाश्रुतिर्विष्णोःसूर्यादाधिक्यमाह । अथापराश्च श्रुतय एतदर्थंत्रयेसंति । ताःपठति ॥ विष्णोरिति ॥ एतासांश्रुतीनांप्रत्येकंसर्वार्थप्रतिपादकत्वात्पृथक्करणं । विष्णोर्वातइतितुरश्रुतिः । विष्णोःप्राणइतिसौपर्णश्रुतिः । पिंगश्रुतिरपीदृशी एवंपाठा । अतोनपृथक्पठ्यतइत्यर्थः । लयोप्येवमितिक्रममात्रमतिदिश्यते सचवैपरीत्येनेतिहृदयं । विष्णुःसर्वाधिकोनिर्णीतइत्युपलक्षणं । लक्ष्म्यादयोपियथास्वरूपंनिर्णीताः । ननुनैवदोषानित्ययुक्तं जनितोतविष्णोरित्यादौदोषप्रतीतेरित्यतआह ॥ अंतइति ॥ यत्रवाक्येविष्णोर्दोषवचोदोषाभिधानंप्रतीयते तद्वाक्यमवरं संभावितदोषंवस्त्वंतरंवदेदितियोज्यं । ननुलक्ष्म्यादीनांयत्स्वरूपमुक्तंतदयुक्तं क्वचिदधिकदोषश्रवणादित्यतआह ॥ अंतइति ॥ दोषवचोऽधिकंदोषाभिधानं । अत्रोभयत्रापिदोषग्रहणंगुणाल्पतायाअप्युपलक्षणं । अतइत्युभयत्रोक्तमेवहेतुंदर्शयति ॥ निर्दोषतैवेति ॥ यतोविष्णोःसर्वथानिर्दोषताप्रमाणैर्निर्णीता यतश्चमध्यगतेष्वपिलक्ष्म्यादिषुक्रमान्निर्दोषतानिर्णीता अतइत्यर्थः । निर्दोषतेत्युपलक्षणं । गुणपूर्तिरपीतिद्रष्टव्यं । यदिदोषाभिधायिवाक्यमन्यपरं तर्हिविष्ण्वादीनांसर्ववेदादिवेद्यतानस्यादित्यतआह ॥ त्र्यर्थइति ॥ निरंतरशतार्थकमित्यनेनसर्वाण्यपिपदानिशतार्थानीत्युच्यते । इतिस्कांदवचोयस्माद्वेदस्यानेकार्थतांवक्ति तस्मादर्थभेदव्यपेक्षया योजनाविशेषविवक्षयैकमेववाक्यंहरेर्निर्दोषत्वमन्येषुक्रमाद्दोषमपिवक्तीत्यंगीकारादददोषइत्यर्थः । ननुदोषाभिधायिवाक्यंदेवतांतरेपिकस्मादन्यथानयोज्यते दोषाभिधानेप्रयोजनाभावादित्यतआह ॥ तारतम्यस्येति ॥ यदितत्तद्देवतासुविद्यमानादोषानैवोच्येरन् नतर्हितासांतारतम्यंविज्ञायेत ।



तज्ज्ञानंचावश्यमपेक्षितंमुमुक्षोः । देवतातारतम्यंचेत्युक्तत्वात् । अतस्तज्ज्ञापनायदोषवचनमपिसार्थकमित्यर्थः । अतोदोषवचोयत्रेत्युक्तंद्रढयति ॥ गुणाइति ॥ आह श्रुतिः । माया श्रीः । निर्दोषेत्यादिकामान्यश्रुतिश्चाह गुणैकनियतिं हरौ । अन्येषुचयथास्वरूपमितिशेषः । ततःपरमेश्वरस्यनिर्दोषगुणपूर्णत्वादन्येषांचोक्तस्वरूपत्वाद्योजनाभेदेनार्थानांभेदोवैलक्षण्यमेवमतमित्यर्थः । यथायोगमितियोगवृत्त्याविष्णोर्वेदवेद्यत्वमुक्तं । तन्नोपपद्यते । सर्वज्ञइत्यादौसर्वादिशब्दानामन्यपरत्वेहरेःसर्वशब्दाभिधेयत्वस्यव्याघातात् । भगवत्परत्वेयोगायोगादित्याशंकांस्मृत्यैवपरिहरति ॥ रूढिमिति ॥ सर्वादिशब्दानांरूढिमेववृत्तिंतावत्समाश्रित्यनिखिलादीनर्थान्विभज्य विस्पष्टंज्ञात्वा । अनंतरंयथाक्रमं शब्दानुशासनादिक्रमानतिक्रमेण । विष्णौ सर्वज्ञादिशब्दानांयोगार्थमानयेत् । पश्चात्सर्वादिशब्दानामपिसरवादिशब्दानांरूढार्थानुपादायैवसरवःसर्वइत्यादियोगवृत्तिमानयेदित्यर्थः । किमनेन रूढ्यैवपरमेश्वरस्यवेदवेद्यतास्त्वित्यतउक्तं ॥ विदोषेति ॥ भगवतोदोषाभावगुणपूर्तिज्ञापनार्थंहिवेदानांप्रवृत्तिः नचरूढिमात्रेणसम्यक्तद्भवति । अतोयोगएवाश्रयणीयः । यथायोगं तत्तद्देवतायोग्यतानतिक्रमेण । ननुयदिसर्वोपिवेदोभगवत्परः । कथंतर्हीदमग्निसूक्तमिदंवायुसूक्तमितिसूक्तभेदइत्यतआह ॥ पृथगिति ॥ द्विविधानिभगवद्रूपाण्यग्न्यादिसूक्तवाच्यानि । अग्न्यादिदेवतांतरगाणि पृथक्तदनंतर्गतानिच । सर्वाणिचाग्न्यादिनामवंति । तत्राद्यानांस्वनाम्नाधिष्ठाननाम्नाचाग्न्यादिसूक्तभेदोभवेत् । इतरेषांतुस्वनाम्नैवेति । एवमृषिच्छंदोदेवतास्वरूपंयथाक्रममुपपाद्येदानीमसमस्तव्याख्यानस्यप्रतिज्ञातत्वाद्व्याख्यानप्रकारंशिक्षयति ॥ नकिरित्यादिना ॥

नकिरिंद्रत्वदुत्तरः माकिर्नेशत् । स्मसिस्थातर्हरीणामित्यादौयल्लक्षणप्राप्ताधिकंशब्दरूपं तत्तत्रप्रोक्तस्यार्थस्याधिक्यविवक्षया प्रयुक्तंज्ञातव्यं । आधिक्येधिकमितिसूत्रात् अर्थाधिक्येविवक्षितेऽधिकंशब्दरूपंभवतीति कृत्वीदेवैर्निकिल्बिषं हत्वीदस्यूनितिपूर्वावर्णविकाराश्चप्रोक्ताधिक्यविवक्षयाप्रयुक्ताज्ञातव्याः । यतस्तृतीयोतिशयइतिसूत्रं । अर्थातिशयेविवक्षितेलक्षणप्राप्तस्यस्थानेतत्तृतीयोवर्णोभवति । अः इतिब्रह्मेत्यादिविश्लिष्ट मसंहिततयानिर्दिष्टंशब्दस्वरूपं विश्लिष्टार्थे तस्यार्थस्यविश्लिष्टत्वे व्यावृत्तत्वेव्याख्यातव्यं । सलिलंसर्वमाइदमित्यासीदितिवक्तव्येआइत्याद्यूनंचार्थस्योनत्वेविवक्षितेज्ञेयं । सुप्तिङ्विकरणलिंगपुरुषकालहलच्स्वरकृत्तद्धितसमाससन्यङादिव्यत्ययस्त्वभेदकरणस्वातंत्र्येषुव्याख्यातव्यः । तत्राभेदः कुत्रव्याख्येयइत्यतआह ॥ [४।१७] अभेदइति ॥ हरिणापरस्परंच । परिगणनस्यनिमित्तमाह ॥ भेदे [४।१७] इति ॥ एतत्पृथग्रूपाणीत्यारभ्योक्तं । समस्तशः समस्तं । नकेवलमुदाहृतसूत्रसिद्धमिति चार्थः । अभेदस्यस्थलांतरंदर्शयति ॥ [४।१८] अभेदइति ॥ चिं(तनादि)तादिभिर्गुणैर्भेदसहितोऽभेदः ज्ञानादिभिरभेदः । नैवंमुक्तानामितितुशब्दः । जडानामपिघटादीनामवयविनामंशत एकैकांशेनसंस्थानविशेषरहितांशसमुदायेनचोभयं भेदाभेदौ । समुदायेनसंस्थाविशेषविशिष्टैःसर्वांशैरभेदइत्यावृत्त्यायोज्यं । प्रकृतमुक्तस्वरूपमेवविवृणोति ॥ [४।१९] मनुष्येति ॥ देवाइत्येतत्सामर्थ्यात्कार्मिकतात्विकविशेष्यं । केचिच्छतोत्तराःकेचिदयुतोत्तराः । सिद्धांतोनामकश्चित्ग्रंथः । एवमुक्तार्षिच्छंदोदेवतादिज्ञानपूर्वस्यवेदस्वाध्यायादेःफलमित्थंभावांतरंचप्रमाणैर्दर्शयति ॥ [४।११] स्वध्यायइति ॥ एतैर्विनेत्युक्तमेवव्यतिरेकान्वयाभ्यामुच्यते । ऋषीतिवचनांतरं । हरिविषयास्मृतिर्यस्यासौहरिस्मृ



तिस्तस्य । एतेनछंदोज्ञानमनुपयुक्तमितिकस्यचिन्मतंनिराकृतंभवति । जप्येनैवेतिवाक्यांतरं । जप्येनोक्तलक्षणेनसंसिध्येन्मुक्तोभवेत् । कुतः मित्रदेवताकगायत्रीजपेनैवफलवत्त्वाद्धिमैत्रोब्राह्मणः । तस्मादित्यादिस्वाध्यायाख्यग्रंथगतंवाक्यं । तस्मादित्युक्तमेवदर्शितमैहिकेति । यथाश्रुतव्याख्यानादपिस्वयमर्थद्रष्टुरनंत मनंतगुणं । बहुतरगुणमितियावत् । नियामकेस्वोक्तार्थस्यपरंप्रत्युपदेशयितरि । आप्तिमात्रेणोपपादकादपितर्कागमाभ्यांनियति मुपपादनंयःकरोतितस्याधिकंफलं । यदैवं वेदार्थद्रष्ट्रादिमात्रस्यमहाफलं तदाब्रह्मणःपूर्णफलंकिंवक्तव्यं । वेदाखिलद्रष्टुरित्यखिलवेदतदर्थद्रष्टुरित्यर्थः । नियामकत्वंचात्रग्राह्यं । वेदार्थज्ञानस्यफलमुक्तं वेदश्चस्वरवर्णात्मकस्तत्रस्वरानिरर्थकाइतिकेषांचिन्मतं तदसदितिभावेनाह ॥ [४।१७] दार्ढ्यमेवेति ॥ स्वरवद्वर्णार्थस्यदार्ढ्यमित्यादि । यथास्थितिरिति वर्णार्थस्यानन्यथात्वमविकारित्वंदार्ढ्यादन्यत् । समाहारोनामसाप्तस्वर्यमंगीकुर्वाणैःपातंजलैःस्वरविशेषोव्युत्पादितः तस्याखिलाअप्यर्थाःसंति प्रकरणादिवशात्तद्विशेषग्रहणमित्याशयः । यद्वाऽनेकाक्षरेपदेस्वरसमाहारेसत्यखिलाअप्यर्थाःप्रतिपत्तव्याः । नन्वेवंसतितत्रविरोधःस्यात् । एकस्यपदस्यह्येकोर्थः अनेकाक्षरत्वादनेकेस्वराः नह्येकार्थस्योक्तानेकार्थैर्विशेषणंयुक्तमित्यतआह ॥ [४।१८] स्तुत्येति ॥ एकस्मिन्नपिपदेनैकवर्णैस्तुत्यानांभगवद्धर्माणामनेकत्वेनतत्तद्विशेषणार्थंपदस्यादिमध्यांतस्वराणांभिदाभिन्नार्थत्वंनविरुद्धमित्यर्थः । उक्तंचैतन्ननियतमतोपिनविरोधइत्याह ॥ [४।१९] साधारणइति ॥ विधिः प्रकारःस्वरार्थानां । अतोयत्रयत्रविशेषउच्यतेतत्रतत्रोक्तःसोपिग्राह्यइत्यर्थः । पुनर्वेदव्याख्यानस्येत्थंभावमाह ॥ [४।११] क्रमादेवेति ॥ उत्तमाऋषयोऽशेषार्थान्पश्यंति । तदन्येषामृषीणांक्रमादेव स्वयोग्यता

नुसारेणतत्तद्वाक्यार्थज्ञानं। इदमुक्तंभवति। योयोऽर्थोयेनयेनर्षिणाद्रष्टुंयोग्योसावसावेवतत्तदृष्टतयाज्ञातव्योनव्यत्यासेनेति। आदिपदेनदेवतायामप्येतज्ज्ञातव्यमित्युच्यते। वेदार्थव्याख्यानंचयथावस्तुकृतमेवोक्तफलप्रदं नान्यथेतिभावेनाह ॥ विपर्ययेति ॥ विपर्ययेणार्थकथनेविपरीतंफलंभवति। किंतत्। तमस्तथा। सदसद्व्याख्यानेचस्वाधिक्यानुसारेणफलप्रदेइत्याह॥ यावदिति॥ ज्ञाने सज्ज्ञाने। विपरीते ज्ञानइतिसंबंधः। स्मृतौच सत्यांविपरीतायांच तदुक्तंसममित्यर्थः। ननुमोक्षादिकंहितफलं तच्चैकप्रकारमितिकथमेतदित्यतआह॥ तमइति॥ तमःप्रभृतीनामतिरेकत स्तारतम्यवत्त्वात्। सर्वेषु उक्तेषुव्याख्यात्रादिषु। प्रवृत्तवचनं स्वाध्यायादित्यादिकं। विवेके विवेकाख्येपिग्रंथे। यद्येवंतर्हिवेदव्याख्यानमेवोपरम्यतां। सदसदर्थविवेकस्यकर्तुमशक्यत्वादित्याशंकांस्मृत्यापरिहरति॥ यादृशइति॥ योग्यतांयायात् प्रमाणतस्तत्प्रतिपाद्यैरन्वितःस्यात्। सो र्थः। तथा सन्। ज्ञेयइत्यर्थः। नन्वेवंसंक्षिप्यकस्मादुच्यते अत्रायंसन्नर्थइतिविस्तरेणैवोच्यतामित्यतआह॥ अनंतेति॥ नियमै र्व्याख्यानादीत्थंभावैः। अनंताअर्थविशेषायेषांसंतितेतथोक्ताः। नियमः सदसदर्थव्यवस्था। नियामकं विवक्षितार्थस्यप्रतिपादकं। यतएवमसदर्थकथनेमहाननर्थस्तस्मात्प्रामादिकापराधपरिहारायप्राचीनव्याख्यातृवंदनादिकंकार्यमित्याह॥ तस्मादिति॥ क्रमादित्युक्तंक्रममेवदर्शयति॥ आरंभ्येति॥ अन्यत्रा न्यथा। निष्फलता विपरीतफलताच। गुरुतत्वे गुरुतत्वाख्येग्रंथे ॥ ७॥ तत्किमग्न्यादिदेवतामधुच्छंदःप्रभृतयःपरोक्ताऋषयश्चनभवंत्येवेत्याशंकांपरिहरन्नाद्यस्यर्क्शतस्यदेवतामवांतरमृषिंचवक्ति॥ एवंस्थितइति॥ एवंप्रमाणतोनिर्णीतेसति। तत्तन्नामानं वाय्वादिनामानं। एवमग्निमीळइत्यादिनवर्चमाग्नेयंसूक्तंव्याख्यायो



पयुक्तंचप्रमेयमभिधा(याथेदा)येदानींवायवायाहीत्यादिनवर्चंसूक्तंव्याख्यातव्यं तत्राद्यस्तृचोवायव्यः तत्रवायुशब्दंव्याचष्टे ॥ बलत्वादिति ॥ वशब्दोबलवाची। नतत्रव्युत्पादनापेक्षेत्येवशब्दः। अयनाद्गमनकर्तृत्वात्। अयतेरिणोवोण् प्रत्ययः। वश्चासावायुश्चेतिवायुः। वातिगच्छत्यायुश्चलोकस्यप्राणधारणहेतुत्वात्। वातेःकप्रत्ययः। इणश्छंदसीतीणउण्। पूर्ववद्विग्रहः। ज्ञानात् ज्ञानकर्तृत्वात्। वातेर्गत्यर्थत्वेनज्ञानार्थत्वात्कृवापाजीत्यादिनाकर्तर्युण्। आतोयुक्चिण्कृतोः। वातिजानातीतिवावायुः। वरणात्स्वीकरणात्। वृणोतेःकर्तरिकर्मणिवाडायुप्रत्ययः। वृणोतिव्रियतेवेतिवायुः। आश्रयत्वतइति वातेरधिकरणउण्प्रत्ययः। वांतिगच्छंतिप्रवर्ततेऽस्मिन्निति वायुः। वयबंधनइत्यस्माद्धातोःकर्तर्युणिकृतेबंधकत्वाच्च वायुर्भवति। व्ययाद्विनाशात्। विपूर्वादयतेरुकारप्रत्ययः। उपसर्गेकारस्यचाकारः। संसारादेरितियोग्यतयासंबंधः। व्ययतेविनश्यत्यनेनेतिवायुः। व्येतिलीयते। विपूर्वादिणोधिकरणेपूर्ववदुण्। वयश्रेष्ठत्वइतिधातोरुणिकृते श्रेष्ठत्वादपिवायुः। श्रेष्ठत्वंनाम(मैत)तद्व्यापारोविवक्षितः। गडिवदनैकदेशइतियथा। एतद्व्याख्यानंभगवतीवर्कितदन्यदेवतायामपिज्ञातव्यमित्यतआह॥ मुख्यतइति॥ अनिषिद्धाः येभगवतोलक्षणभूतानभवंति। तदन्येष्वितिबहुवचनेनाग्न्यादिशब्दव्याख्यानेप्ययंन्यायोबोद्धव्यइत्याह। तेचयथायोग्यतयैव। नतुनिरतिशयाः। तथात्वेपुनर्भगवल्लक्षणत्वापत्तेः। दृशेर्भावेघञ् तनोतेर्डः दर्शोदर्शनं तेनतः ततः। दर्शतइत्यस्यतात्पर्यंदर्शतस्तदृष्टित्वादिति। तदुपपादयति॥ सर्वज्ञइति॥ मनांसीत्यध्यात्मं। अन्ये बहिष्ठाः हिरण्यतइत्युपपादयति॥ हिरण्येति॥ सुताः सोमाः। पाहि पिब। श्रुधि शृणु। तेषामि

त्येतत्तानितिव्याख्यातं । तत्रायंविभक्तिव्यत्ययःकिंनिमित्तइत्याह ॥ **स्वातंत्र्यइति** ॥ त्वदीयानेवसोमांस्त्वंपिबेत्युक्तंभव
ति । अपिपदेनश्रुधीतिसंहितायांदैर्घ्यमुक्तार्थाधिक्येइतिसमुच्चिनोति । यद्यध्यात्मंमनःसोमःकथंतर्हितस्यपानमित्यतआह॥
**मनोपीति** ॥ ननुतेषांपाहीत्यत्रविभक्तिव्यत्ययमंगीकृत्यस्वातंत्र्येव्याख्यानादपिवरंतेषामंशंपाहीतिव्याख्यानमितितत्राह॥
**गुणाधिक्यमिति** ॥ भवेत् देवतायांज्ञापितमितिशेषः । येनार्थेनव्याख्यातेन । प्रयोजकत्वात् फलवत्त्वात् । अन्यस्य गुणा
धिक्यविरोधिनः । फलाभावात् तदर्थता वेदार्थता नास्ति । ज्ञातगुणाधिक्योहिपरमेश्वरःफलंप्रयच्छति । गुणाधिक्यंच
विभक्तिव्यत्ययएवभवतीतिभावः । फलवत्त्वेप्यनेनार्थेनभवितव्यमित्यत्रकिंनियामकमितितत्राह ॥ **उपक्रमादयइति** ॥
यत्र यस्यार्थस्यानुकूलाः उपक्रमादयःखल्वर्थस्यनिश्चायकाः । तत्रचफलंसर्वाधिकमिति । ततश्चैवंयोजना । हेदर्शत वायो
आध्यात्मिकंबाह्यंच यज्ञंप्रत्यायाहि । किमिति । अध्यात्मंमनोवृत्तयोभक्त्यादिभिः बहिःप्रसिद्धाः हिरण्येनारंकृताः अलं
कृताइमेसोमाःसंति तेषां तान् । पाहि पिब । छांदसःपिबादेशाभावः । हवमाह्वानं । भावेनुपसर्गस्येति शब्दार्थात्ह्वयते
र्भावेअप्प्रत्ययः । संप्रसारणंच । श्रुधि श्रृणु । आगमनेनसफलंकुरु । श्रुशृणुपृकृवृभ्यश्छंदसीतिहेर्धिर्विकरणाभाव
श्च ॥ १ ॥ **वायउक्थेभिः** ॥ **स्तुवंतिशस्त्रैः** ॥ हेवायोसुतःसोमोयैस्तेसुतसोमाः । अच्छेतिनिपातोऽभेरर्थेवर्तते । अह
रितियज्ञोपलक्षणं । अच्छाहर्विदोऽभितोयथावद्यज्ञवेदिनः । जरितारः स्तोतारः । स्तोतृनामसुपाठात् । उक्थेभि रुक्थैःश
स्त्रैस्त्वांजरंते स्तुवंति । स्तुतिकर्मसुपाठात् ॥ २ ॥ **वायोतव** ॥ **वाक्** ॥ हेवायो तव त्वां । प्रपृंचती पृंचीसंपर्के । त्वत्सं



पर्किणी त्वत्स्तुतिरूपा । उरूची अतिमहती । आधिक्येधिकमित्युक्तत्वात् । धेना वाक् वाङ्नामसुपाठात् । सोमपीतये
सोमस्यपीतिर्यस्येतिव्यधिकरणोबहुव्रीहिः । तस्मैसोमपाय । आतोनुपसर्गेकः । दाशुषे यज्ञकृते । निपातनात्साधुः । जिगा
ति । गतिकर्मायं । अंतर्णीतण्यर्थश्च प्रापयति । ईप्सितमितिशेषः । कथंवाचोतिमहत्वं महार्थत्वात् अतिमहार्थत्वात् । त
दपिकुतः त्वदर्थः त्वदर्थत्वात् । त्वंह्यतिमहान् । अनेनयतस्तवप्रपृंचती ततएवोरूचीत्युक्तंभवति । यद्वामहार्थत्वादित्युरु
मंचतीत्युरूचीशब्दस्यनिर्वचनांतरं । तस्योपपादनंत्वदर्थतइति । त्वत्स्तुतिर्हियजमानाभीप्सितसाधनस्वभावाऽतस्तुवताम
स्माकमभीप्सितंकुर्विति ॥ ३ ॥ द्वितीयस्तृचऐंद्रवायवः ॥ **इंद्रवायूइमे** ॥ अत्रेंद्रशब्दंव्याख्याति॥ **इंद्रइति** ॥ इंदतेःपर
मैश्वर्यार्थादौणादिकोरप्रत्ययः । इदं विषयजातमुद्दिश्य द्रुतेर्द्रवणात्सर्वविषयोपभोगाच्चेंद्रः । इदंशब्दोपपदाद्द्रुगतावित्य
स्माड्डुः । उपपदस्यचेमित्यादेशः । इदंसर्वंददर्शेतिचेंद्रः । पूर्ववत्दृशेर्डः । तथाचश्रुतिः । इदमदर्शमित्यादि । दीप्तिमत्त्वा
च्चेंद्रः । इंधीदीप्तावित्यस्माद्रप्रत्ययः । धस्यचदः । इंधोहवैनामेत्यादिश्रुतेः । इदमभीष्टं राति ददातीतिवा निर्वचनंभवेत् ।
रातेःकः । इदमश्चेंदादेशः । हेइंद्रवायूइमेसुताःसोमाःसंपादिताःसंतितेचेंदवःसोमाःसोमानामचेतनत्वाद्बहिःसोमगाःसोमा
भिमानिनोदेवाः । अध्यात्ममस्मन्मनोवृत्तयोहियस्माद्वां युवामुशंति इच्छंति युवयोरागमनंकामयंते । तेनकारणेन । प्र
योभिः प्रेयोभिः । ईयसुनईकारस्याकारः । अतिशयेनप्रियैःसहोपागतमुपागच्छतं । छांदसःछत्वाभावः । अत्रेंद्रवायुशब्दा
भ्यांविवक्षितंभगवद्रूपद्वयमाह ॥ **उपेंद्रइति** ॥ इंद्रशब्देनोपेंद्रोवायुशब्देनसंकर्षणोहरिरुच्यतइत्यर्थः । ननुपरमेश्वरेद्विवच

नंकथमित्यतआह ॥ **द्विरूपत्वादिति** ॥ नन्वेकस्यैवहरेर्द्विरूपत्वंचकथं। द्वित्वस्यभेदाविनाभूतत्वात्तत्राह ॥ **बहुत्वंचेति**॥ चशब्देनद्वित्वं । बहुत्वग्रहणमन्यत्रबहुवचनसंपादनार्थं। द्विवचनादिकंभेदेनैवसंपाद्यतामित्यतआह॥ **नात्रेति** ॥ कथंचन केवलोऽभेदसहितश्च । कुतइतिचेत्श्रुतिविरोधादित्याह ॥ **एकमेवेति** ॥ अनेनविग्रहभेदोपिद्विवचनादिविषयोनिरस्तः। भेदंविनाविशेषमात्रेणैवद्विवचनादिकंघटतइत्ययुक्तं । भेदादन्यस्यविशेषस्यैवाप्रामाणिकत्वादिति । तत्राह॥ **उक्त्वेति**॥ तंदुर्दर्शमित्यादिनाकाठकेपरमेश्वरस्यानेकान्धर्मानुक्त्वैकमेवाद्वितीयमित्येवंपुनःपृथक्त्वस्यनिषेधात् भेदादन्योविशेषोभग वतिश्रुत्याज्ञायते । अखंडत्वेधर्मकथनानुपपत्तेः । भेदेचनिषेधायोगात्। किंचघटादौभेदादन्योविशेषः साक्षितश्चज्ञायतइति ॥ ४ ॥ **वायविंद्रश्चचेतथः** ॥ **विजानतः** ॥ हेवायो वाजमन्नं तदेववाजि तृतीयोतिशयइत्युक्तत्वात् । तन्नयतीतिवाजि नीःसूर्यः । सहिवर्षणादिनान्नंप्रवर्तयति । सत्सूद्विषेत्यादिनाक्विप् । तत्रवसतइतिवाजिनीवसू । वसतेरुः । अन्नपतौसूर्येस दास्थितौ । इंद्रः चशब्दात्त्वंच । सुतानां सुतान् । चेतथः चितीसंज्ञाने विजानतः विजानीथः। द्विविकरणतावर्णव्यत्यय श्चछांदसः । अस्मत्स्वीकारयोग्याभवंतीमेसोमाइतियुवांविजानीथः । अतःकारणात् द्रवत् द्रुतं । क्षिप्रनामसुपाठात् । तौ युवा मुपायातं । यद्वाचेतथश्चेततोविजानतोयुष्मत्ज्ञानिनोयजमानस्यसुतानुपायातमितियोज्यं । वायवायाहि उपप्रयो भिरागतं तावायातमितिपुनरुक्तिरित्यतआह ॥ **सुतान्प्रत्येति** ॥ ५ ॥ २ ॥ **वायविंद्रश्चसुन्वतः** ॥ सुन्वतइतिव्या ख्याति ॥ **यजन्निति** ॥ यजन्यजमानःसुन्वन्नित्युच्यते । ऋत्विग्भिःक्रियमाणस्यापिसवनस्ययजमानार्थत्वात् । सुन्वानि



तिक्वचित्पाठः । तत्रदीर्घश्छांदसः । निष्कृतशब्दार्थमाह ॥ **कृतस्येति** ॥ यद्वैनिष्कृतंतत्संस्कृतमाहेतिश्रुतावप्ययमेवार्थः । कृतप्रतीकारेस्यशब्दस्यरूढत्वादित्येवार्थः । विभक्त्यर्थमाह ॥ **तदर्थमिति** ॥ हेवायो । नरा नरौ । सुपांसुलुगित्यादिना प्रथमाद्विवचनस्यात् । युवामिंद्रश्चत्वंच । सुन्वतो यजतो । निष्कृतं तत्कृतपूजानुसारिफलदानंप्रति तदर्थं तत्कर्तुं । इत्था इत्थंभूतया ददान्येवास्मैफलमित्येवंभूतयाधिया । मक्षु क्षिप्रं तन्नामसुपाठात् । उपायातं । नरौतावित्यनूद्याचलाविति व्या ख्यातं । निर्विकारौ । लापरिवर्तने । ततोनपूर्वात्कः । अविनाशित्वादित्यर्थांतरं । रीङ्क्षये रिषहिंसायां ततोडः । किमेवंन रशब्दव्याख्यानंसर्वत्र नेत्याह ॥ **उपचारइति** ॥ क्वचित्प्रसिद्धेवायाविंद्रेच । उपचारो गौणीवृत्तिः । विष्णावेवचमुख्यता । अमरत्ववत् । नहिदेवानांमुख्यतोमरणाभावः । उपचारेबीजमाह॥ **यतइति**। मोक्षेचाविनाशित्वंनियतमितिसर्वदाप्युपच र्यतइत्यर्थः ॥६॥ तृतीयस्तृचोमैत्रावरुणः ॥ **मित्रंहुवे** ॥ मित्रावरुणशब्दौनिर्वक्ति ॥ **मित्वेति** ॥ मित्वा रक्षणीयंज्ञात्वा । त्रातीतिप्रकृत्यंतरस्येदंरूपं । मात्राइत्येताभ्यांक(अकार)प्रत्ययः। आद्यस्यचेकारः । मातित्रातिचेतिमित्रः । तस्यतात्पर्यमित्वा त्रातीति। अयं विष्णुः। अह्नानिमित्तेनवस्तुजातंमितंज्ञातंकरोतीति मित्रस्तदंतर्गतोहरिश्च । मितशब्दोपपदाद्रातेःकरोत्यर्थाद कारउपपदलोपश्च। मितं परिमितंयथायोग्यमेव राति ददाति। रमयतीत्यनेनरमेरंतर्णीतण्यर्थात् अमंताड्डुइतिडप्रत्ययउक्तो भवति। तमसा बहिः। अज्ञानतो ध्यात्मं । कृवृतृदारिभ्यउनन्नितिवृणोतेरुन(त्)न् । वरमुत्तमंजीवमुन्नयति ऊर्ध्वंनय ति। वरशब्दोपपदादुत्पूर्वान्नयतेर्डः । उपपदोपसर्गयोर्लोपश्च । वरानंदत्वतः णोहिनिर्वृतिवाचकइतिवचनात्णशब्दआनंद

वाची। वरोणोयस्यासौवरुणः। पूर्वपदस्योकारः। दक्षा यजमानाः। पूर्वार्धंयोजयति॥ [५।२१] **तमिति**॥ हुवे आह्वयामि। बहुलंछंदसीतिह्वयतेःसंप्रसारणं। शपोलुक्च। रिशादसमित्येतत्सुखिनमितिव्याख्यातं तत्कथमित्यवयवार्थमाह॥ [५।२१] **शमिति**॥ तस्मादितिशेषः। ननुरमणमपिसुखं अतःपुनरुक्तिरित्यतोभिप्रायमाह॥ [५।२१] **अनूनेनि**॥ रमेर्भावेडिः। रिशमनूनसुखमत्त्यनुभवतीतिरिशादाइत्यर्थः। अदेरौणादिकोऽसुन्प्रत्ययः। घृक्षरणदीप्त्योरित्यस्माच्छुध्यर्थात्कर्तरिक्तः। तदंचनात् तंप्रतिगमनात् विषयीकरणात्। उत्तरार्धंयोजयति॥ [५।२२] **स्वेति**॥ स्वविषयाधीतिर्ध्यानंस्वधीतिः। यथार्थत्वंस्वधीतेर्विशेषणं। यद्वा शोभनाऽधीतिरधिगतिःस्वधीतिः। शोभनत्वस्यविवरणंयथार्थतइति। भक्तानामित्यादिशेषकथनं। साधंता साधयंतौ॥७॥ऋतेन॥ [६।१] **नित्यवृद्धः**॥ यस्मान्नित्यवृद्धःसभगवांस्तस्मादृतवृधः। ऋतमनुगतंसर्वकालइतिऋतशब्दोनित्यपर्यायः। वर्धतेरिगुपधलक्षणःकः। ऋतं नित्यं वृधो वृद्धः ऋतवृधः। ऋतेन सत्येन सत्यतयैव नतूपचारतइत्यभिप्रायोक्तिः। यथार्थत्वादृतोवेदःतंस्पृशतीतिऋतस्पृक्। स्पृशोनुदकेक्विन्। वेदवाच्यः। एवंपूर्वार्धंविष्णौयोजयित्वादेवतांतरेयोजयितुमाह॥ [६।१] **अन्यौचेदिति**॥ भगवतोन्यौमित्रावरुणौविवक्षितौचेत्तदाद्वितीयतृतीयाभ्यामृतशब्दाभ्यांहरिरुच्यते।कुतः ऋगतावित्यतोधातोःकर्तरिक्तेकृते सर्ववस्तुष्वनुगतत्वतःसर्वगतत्वादृतोहरिः। तथाचतेनर्तेनहरिणावृद्धावितिमित्रवारिपावृतवृधौ। तत्स्पृशौतत्संबंधिनाविति ऋतस्पृशौ। सर्वदेतिप्रथमऋतशब्दार्थः। ऋतावृधावित्यत्रसंहितायांदैर्घ्यंपदेह्रस्वता। तदभिप्रायमाह॥ [६।२] **संहितायामिति**॥ आदिपदेनान्येवर्णविकारागृह्यंते। यःसंहितायांदैर्घ्यादिःपदेत्वन्यथा सउक्ताधिक्ये उक्तार्थस्याधिक्यज्ञापनार्थं। अनन्यार्थविज्ञप्त्यै उक्तस्यावधारणार्थंचेतियावत्। उत्तरार्धंव्याख्याति॥ [६।३] **ईशाथेइति**॥ प्रेरयथः। तृतीयोतिशये। क्रतुशब्दः सुखनामापिभवतीतिबृहंतंक्रतुं महत्सुखंवा। छंदस्त्वादधीगर्थदयेशांकर्मणीतिनभवति॥८॥ **कवीनः**॥ तुविजातावित्यनूद्यद्वेधाव्याचष्टे॥ [६।३] **तुविजाविति**॥ तुवीतिबहुनाम बहुशब्दश्चपूर्णवाची अतःपरब्रह्मणोजातौतुविजातौ। तथाविधौ तुवित्वेनपूर्णत्वेनजातावव स्थितौतुविजाताविति वा। अर्थद्वयस्यव्यवस्थांदर्शयति॥ [६।३] **हरिरिति**॥ तथैवभूतत्वात्तुवित्वेनावस्थितत्वात्तुविजातोहरिः। अन्यौमित्रावरुणौतुब्रह्मजातत्वेनतुविजाताविति भावः। उरुक्षयावित्यत्रक्षयशब्दार्थमाह॥ [६।४] **स्थानमिति**॥ क्षिनिवासगत्योरित्यस्मादेरजित्यधिकरणेऽच्। शिष्टंव्याख्याति॥ [६।४] **कर्मेति**॥ कवीनित्यंबुद्धौ सर्वज्ञौ। तुविजातावुरुक्षयौ महास्थानौ सर्वगतौ। तौमित्रावरुणौ। नो स्मदर्थे। नोदक्षंयजमानंप्रत्यपसंकर्म दधाते तंकर्तारंकुर्वातइतियावत्। अपःशब्दःकर्मनाम। ततश्छांदसोमोऽलुक्। अथवा नः अपसं कर्तारं अर्शादिभ्योच्। यजमानं दक्षं पटुं दधाते कुर्वाते। अत्रदक्षमितिपूर्वोत्तरयोःसंयोजनीयं। गतागतावित्युरुक्षयशब्दस्यार्थांतरं। क्षयोगतिः भावेऽच्। उरुःक्षयोययोस्तौतथोक्तौ। गतागतौ गत्यागतिमंतौ॥ ९॥ ४॥ २॥ अश्विनेत्यादिद्वादशर्चंसूक्तं। तत्राद्यस्तृचआश्विनः। द्वितीयऐंद्रः। तृतीयोवैश्वदेवः। चतुर्थः सारस्वतः॥अश्विनायज्वरी॥ [६।५] **अन्नानि**॥ हेद्रवत्पाणी क्षिप्रहस्तावौदार्यवंतौ। शुभस्पती शुभाधिपौ पारस्करप्रभृतित्वात्सुट्। पुरुभुजौ बहुगोपौ बहोर्विश्वस्यगोप्तारौ बहुभुजौवा बहोर्भोक्तारौ भुजेरुभयार्थत्वात् अश्विनौ युवां यज्वरीरिषो यज्ञयोग्यानियज्ञसाधनान्यन्नानि यजतेःकरणेवरट्प्रत्ययः। नः चनस्यतं योजयतं प्रयच्छतं। य

द्वायज्वरीरिषोयज्ञेवृतान्स्वभागान्संयोजयतं । स्वार्थेणिच् स्वीकुरुतं । आशुवाइति द्रवत्पाणीइत्यस्याभिप्रायांतरं । अश्विश ब्दंनिर्वक्ति ॥ आशुवानादिति ॥ वानादित्यस्यैवव्याख्यानं गतेरिति । आशूपपदाद्वागतिगंधनयोरित्यस्मादिनिः । उ पपदस्यह्रस्वलोपौ ॥ क्षिप्रांवगतितोथवा ॥ गत्यर्थानामवगत्यर्थत्वात् । अखिलंजगदश्नुते व्याप्नोति । अशूव्याप्तावित्य तोविन् । एवशब्दोव्याप्तेरनुपचरितत्वार्थः । अश्वजत्वादित्यश्वशब्दादपत्यार्थेतद्धिताइतीन् । एतच्चव्याख्यानंदेवतांतरएवे तिसूचनायाश्विनावित्याह । अश्वरूपात्सूर्याज्जातत्वात् ॥१॥ अश्विनापुरुदंससा ॥ बहुकर्मकृतौ ॥ हेअश्विनौ पुरुबहु दंसः कर्म ययोस्तौ पुरुदंससौ बहुकर्मकृतौ । नरौ पूर्ववत् । धिष्ण्यशब्दः स्थानपर्यायः । सदासर्वाश्रयौ युवां । शवीरया शं सुखं वीरं वीर्यं तदात्मिक्या धिया । गिरो स्मदीयाःस्तुतिरूपावाचः । वनतं वनसंभक्तौ संभजतं स्वीकुरुतं ॥२॥ दस्रा ॥ भेदकौ ॥ हेरु द्रवर्तनी नासत्यौ दस्रौ दसुविभेदनेततोरः । सर्वशत्रूणांभेदकौ । वृक्तबर्हिषः । अनेकार्थत्वाद्धातूनां स्तृतबर्हिषः । स्तृतं विस्तृतं बर्हिर्येनतस्य । यज्वनः सुताः सोमाः युवाकवः वां युवयोः संबंधिनः । युवयोरिदमित्यर्थे आकुप्रत्ययोयुष्मदोयुवादेशश्च । युवयो रर्थेसंपादिताहियस्मात्तस्मादायातं । नासत्यशब्दंव्याख्याति ॥ नासत्याविति ॥ नासाशब्दाद्भवार्थेत्यप् ह्रस्वश्च । नासिका भिमानित्वात् । एतद्देवतांतरविषयं । विष्णुश्चेत्क्वचिदसद्गुणोनैवेति । सच्छब्दपर्यायः सत्यशब्दःसद्गुणवाची । सद्भावेसाधुभा वेचेतिवचनात् । नसत्याअसत्या असद्गुणाः । नविद्यंतेअसत्याययोस्तौनासत्यौ । नभ्राडित्यादिनानस्यालोपः । रुद्रवर्तनिश ब्दार्थमाह ॥ रुजांमिति ॥ रुक्शब्देकर्मण्युपपदेद्रुगतावित्यस्मादंतर्णीतण्यर्थाड्डुः उपपदस्यचदः । वासुदेवःस्नेहतस्तदनुवर्त नाद्रुद्रवर्तनिशब्दोक्तः । अश्विनावप्यनुवशत्वेनतदनुवर्तनाद्रुद्रवर्तनिशब्दोक्तौ वृतुवर्तने । भावेअनिः । रुद्रस्यवर्तनिः रुद्रमनु वृत्तिर्ययोस्तौतथोक्तौ । अथवा तन्मार्गगतितः । रुद्रस्यसंबंधिनीवर्तनिर्मार्गोययोरितिवा वासुदेवोश्विनावपिरुद्रवर्तनिशब्दो क्ताः । अस्त्वश्विनोर्वायुमार्गगतिस्तद्भृत्यत्वात् वासुदेवस्यतुकथमित्यतआह ॥ कस्मिन्निति ॥ कस्मिन्वहमुत्क्रांतउत्क्रांतोभवि ष्यामिकस्मिन्वाप्रतिष्ठितेप्रतिष्ठास्यामीति सप्राणमसृजतेतिश्रुत्यावासुदेवस्यापिसावगम्यते ॥३॥ इंद्रायाहिचित्रभानो ॥ चित्रभानुशब्दंव्याख्यातुंचित्रशब्दार्थंतावदाह ॥ चित्रमिति ॥ चित्रंभद्रमित्येकोर्थः । चित्रमालेख्यमद्भुतमित्यभिधाना त् । चितौ सर्वजीवचैतन्ये नियामकतयारतमित्यपरः । चिच्छब्दोपपदाद्रमतेर्डः । चिद्रतेः अजडसुखात्मकत्वादित्यन्यः । चिच्चसारतिश्चेतिचित्रं । पदसंज्ञानाश्रयणाज्जस्त्वाभावः । चायनीयत्वाद्दर्शनीयत्वात्पूजनीयत्वाद्वेत्यर्थांतरं चायृपूजानिशा मनयोरित्यस्मात्कर्मणीत्रप्रत्ययोडिच्च । चितश्चैतन्यस्यस्वरूपस्यैवादनादनुभवाद्वाचित्रं । रातेरदनार्थत्वमनेकार्थत्वाद्धातूनां । इदानींचित्रभानुशब्दंव्याख्याति ॥ अभिदेति ॥ तादृशाश्चित्राः । भानुशब्दार्थरश्मयइत्यनूद्यज्ञानमितिव्याख्यातं । ननुचितौरतत्वादीनांभगवद्धर्माणांकथंज्ञानतेजोधर्मत्वमित्यतउक्तं ॥ अभिदेति ॥ ज्ञानतेजसोःपरमेश्वरेणाभिदाकारणेनो क्तंयुक्तमित्यर्थः । भगवांश्चेत्तर्हिपरो मुख्यश्चित्रभानुः । अन्यस्तुयथासंभवमितिभावः । हेचित्रभानो इंद्रायाहि । कुतः । अण्वीभिः सूक्ष्माभिः । सूक्ष्मतंतुभिः सम्यक्शोधनसाधनीभिः पटीभिरितिशेषः । तना विस्तृत्य । तनोतेराकारःक्त्वार्थे । पूतासः पूताः शोधिताः । इमेसुताः सोमा स्त्वायवः त्वदिच्छवोवर्तंते । युष्मदःक्यच् । तदंतादुः । दुर्घटत्वादिदमध्यात्मं

योजयति ॥ **सूक्ष्मेति** ॥ सूक्ष्मार्थग्राहिणीभिःप्रमाभिः । मनांसि शोधितानीतिशेषः । ननुबाह्यसोमस्थानेध्यात्मंमनसोग्रहणेकिंनिमित्तं । देवतैक्यमित्याह ॥ **सोमानामिति** ॥ देवतास्वपिकथंसोमशब्दवृत्तिर्येनरसेषुमनःसुचतद्वृत्तिरित्यतउक्तं सोमरश्मिगाइति । सोमभृत्याइतिच । सोमरश्मिगततया सोमभृत्यतयाच तत्रसोमशब्दप्रवृत्तिस्तत्संबंधाद्रसेषुमनःसुचेति भावः । पक्षांतरमाह ॥ **समस्तस्येति** ॥ समस्तस्य सोमानांमनसांच । सोमएव देवता । तथाचनपरंपराश्रयणमितिभावः। ननुपरमेश्वरःसमस्तस्यदेवतातत्कथमेतदित्यतआह ॥ **अधिपइति** ॥ हरिःसर्वस्याधिपएव नत्वभिमानीत्यर्थः । अनेनत्वायवइत्येतदपिसमर्थितंभवति ॥ ४ ॥ **इंद्रायाहिधियेषितः** ॥ **अस्मद्बुध्या** ॥ हेइंद्र धियाअस्मद्बुध्येषितोधीष्टः । प्रार्थितइतियावत् । अथवास्वबुद्ध्याप्रेरितो विप्रजूतो ब्राह्मणैः ऋत्विग्भिः भक्त्याप्रेरितस्त्वं वाघतोऽजसावदतस्तुवतोहोतुः सुतवतः सोमवतो यजमानस्य । सोमयुक्तानिब्रह्माणिस्तुतिवाक्यान्युपायाहि । होतुर्ब्रह्माणि । यजमानस्यसोमान् । अत्रसोमशब्दाभावेपिसुतवतइतिपदसामर्थ्यात्सोमानितिलभ्यते । अध्यात्मंसुतवच्छब्दंव्याचष्टे ॥ **इच्छतोवेति** ॥ मनोहिसोमः । तद्रूपाचेच्छा । अतःसुतवतइच्छतइत्यनर्थांतरं । नन्वध्यात्मं कोयजमानः कश्चयज्ञः कोवाहोतेत्यतआह ॥ **यःकोपीति** ॥ साधको मोक्षस्य । सच सएव साधकोयदापरमेश्वरमाह्वयन्भवतितदाहोताचोच्यतइत्यर्थः॥५॥**इंद्रायाहितूतुजानः** ॥ अत्रतूतुजानपदंव्याचष्टे॥ **वेगवानिति**॥ तुजतिर्गत्यर्थः तस्माच्छंदसिभृशार्थेयङ् । तस्यलुक् ततःचानश् । हरिवइत्येतद्व्याचष्टे ॥ **संसारमिति** ॥ हरतेःकर्तरीकारः । वृतुवर्तने । अस्मादसुन्डिच्च । संसारमितियोग्यतयासंबंधः ।



भक्तानांसंसारंहरतिवर्ततेच । उपसंहरन्वर्ततइतियावत् । येन कारणेन। तेनहरिवाः परमेश्वरः।तस्यसंबुद्धिर्हरिवः। अथवा हरिभि र्हरिनामकैरश्वैर्वर्ततइतिहरिवाः पुरंदरः । हरणादित्याद्यध्यात्मविषयं । गमयेदित्यनेनांतर्णीतण्यर्थोवृतिरित्युक्तंभवति । वातेर्वैदंरूपं । हरिवान्वापि हरिनामकाश्ववानितिवा । छंदसीरइतिमतोर्वः । मतुवसोरुसंबुद्धौछंदसीतिरुत्वं । अथवा हरिणाविष्णुना प्रेरितोवर्ततइतिहरिवाःशक्रः । चनःशब्दार्थमाह ॥ **चनइति** ॥ क्वचित् चनोधाःसहसोयहो इत्यादौ । हेहरिवइंद्र नोब्रह्माणिस्तुतिवाक्यानिप्रतितूतुजानःउपायाहि। आगत्यचनःसुतेस्मदीयेसोमेचनोमनोदधिष्वधत्स्व । अस्मदीयंसोममिच्छ ॥ ६ ॥ ५ ॥ **ओमासः** ॥ **आसमंतात्** ॥ आइत्यनुवादः समंतादितिव्याख्यानं । ऊइतिनिपात ऊरीकरणेवर्तते । आ समंता दूरीकृताः स्वीकृताः माः प्रमायैस्तेओमाइतिकीर्तिताः । चशब्दोव्याख्यानसमुच्चये । सर्वविषयज्ञानवंतइत्यर्थः । इदंपरमेश्वरेमुख्यं । देवेष्वमुख्यं ऽनामेत्यनेनोंशब्दसमानार्थओशब्दः मानिर्माणइत्यस्मात्कर्मणिकप्रत्ययइत्युक्तंभवति । ओनामकेनविष्णुनामितानिर्मिताइतिवा ओमाः । इदंचव्याख्यानंनभगवद्विषयमित्याह ॥ **सुरा इति** ॥ ओशब्दओतत्ववाची । अवतिरूपत्वात् । ओताः प्रविष्टाः मानेषु प्रमाणेषु प्रतिपाद्यतयेतिवाओमाः । उपसर्जनस्यपरनिपातः । माःप्रमाःयेषुप्रोताः प्रतिपादकतयाप्रविष्टाइतिवा ओमाईरिताः । ओतामायेषुतेतथोक्ताइति । प्रोक्ताःनैघंटुकैः । ते भगवद्रूपविशेषाःदेवाश्चप्रेरकतयासर्वत्रप्रवेशनाद्विश्वेचप्रोक्ताः । विशप्रवेशने । ततोवःकिच्च । देवतापक्षेसर्वशब्दपर्यायोवाविश्वशब्दइत्याह ॥ **सर्वेवेति** ॥ अथवा विशांप्रजानां वानात् गमनात् ज्ञानाद्वा । विशोवां

तीतिविश्वे । ननुचप्रवेशनाद्विशांवानादितिपक्षद्वयेविश्वेइतिरूपंनसिध्यति । सर्वशब्दपर्यायस्यैवविश्वशब्दस्यसर्वनामसं
ज्ञास्मरणात् । सर्वनाम्नएवपरस्यजसःशीभावविधानादिदितितत्राह ॥ शब्दइति[६।२१] ॥ यथाखलुकस्मैदेवायहविषाविधेमेत्यत्र
प्रजापतिपर्यायस्यकशब्दस्यसर्वनामसंज्ञाभावेपिसर्वेविधयःछंदसिबहुलंभवंतीतिसर्वनाम्नःस्मैइतिसर्वनामकार्यंदृश्यते एव
मिहापिविश्वशब्दस्यसर्वनामसंज्ञाभावेपिसर्वनामकार्यंजसःशीत्वंभविष्यतीति । दाश्वांसइत्यत्रदातारोयजमानावेत्यर्थद्वयं ।
दाशृदाने । यजमानावेतिदेवांतरविषयं। हेओमासः ओमा श्चर्षणीधृतः चर्षणीनांधर्तारो दाश्वांसोदातारोयजमानावाविश्वे
देवाः दाशुषो दातु र्यजमानस्यवा सुतंसोमंप्रत्यागताऽगच्छत ॥ ७ ॥ विश्वेदेवासः ॥ अप्तुरः[६।२१] ॥ अप्शब्दःकर्मवाची ।
तुरत्वरणे । ततःक्विप् । ततोऽप्तुरः कर्मवेगिनः । एवशब्देनाभिधानिकत्वान्निर्वचनानपेक्षत्वंसूचयति । हेअप्तुरोविश्वेदेवाः
स्वसराणिदिनानिप्रत्युस्त्रारश्मयइवतूर्णयःत्वरितास्संतोऽस्मदीयंसुतमागंतआगच्छत ॥ ८ ॥ विश्वेदेवासोअस्रिधः । स्रि
धुर्हिंसार्थः । ततःक्विप् । नविद्यतेस्रिधेषांतेऽस्रिधः अहिंस्याः । एतद्भगवत्युपपादयति ॥ असंसारादिति[६।२२] ॥ देवतांतरेघ
टयति ॥ देवाश्चेदिति[६।२२] ॥ मोक्षनिश्चयात् उपचारेणास्रिधइत्यर्थः। आइत्यस्यसमंततइतिव्याख्यानं । इशब्दइच्छावाची ।
इषुइच्छायामित्यतोडिः । अतउक्तंयथेष्टेति । हिशब्दःप्रसिद्धिवाचित्वान्निश्चयार्थः । मायाशब्दोज्ञानार्थः। प्रज्ञानामसुपाठा
त् । सर्वविषयस्वतंत्रनिश्चयज्ञानाइत्यर्थः । द्रुहःक्लेशार्थः । ततःसंपदादित्वात्क्विप् । नविद्यतेध्रुक्येषांतेऽद्रुहइत्यभिप्रेत्योक्तं
अदुःखत्वादिति । जुषंत जुषत सेवध्वं । तस्यतात्पर्यं तेजुषंत्विति । अस्य जगतो वहनात् प्रवर्तनात् । वहतेरौणादिकोनिः



॥ ९ ॥ पावकानः ॥ शोधकत्वात्[७।१२] ॥ सरस्वतीशब्दंव्याख्यातुंसरःशब्दार्थंतावदाह ॥ सरणादिति[७।१२] ॥ सर्वत्रगमनात् ।
तस्यैवतात्पर्यंसर्वगत्वेनेति । सृगतौ । अस्मादसुन्प्रत्ययः । गत्यर्थानांज्ञानार्थत्वात्सर्वज्ञोवासरः । सरसः ससारइतिवासरः ।
बलवानित्यर्थः । रसाकारलोपः । सरतित्वात्ससुखत्वात् । रमेरसुन्डिच्च । सहरसारत्यावर्ततइतिसरः । तद्वती सरःशब्दा
र्थोहरिरस्यांविद्यतइति । इदंचव्याख्यानंदेवतांतरविषयं । हरौतुविवक्षिते उक्तनिरुक्त्या गुणाः ज्ञानादयः सर इतिशब्दो
येषांतेसरःशब्दाः । तद्वत्वात्सरस्वती । देवतांतरस्यपरमेश्वरवत्त्वंनामकिमित्यतआह॥ देवीत्विति ॥ वेदाभिमानित्वात् ।
उक्तनिर्वचनेनहरिःसरः । तद्वत्वात्तत्प्रियत्वतः । तत्प्रिया तद्भार्येतिवान्यासरस्वती । उक्तनिरुक्त्यागुणाःसरःशब्दार्थाः ।
तएवस्वंधनंसरस्वं । तेनततत्वाद्व्याप्तत्वात्सरस्वतः । सरस्वतशब्दात्(स्वच्छब्दात्)स्त्रियामीकारः। ननुहरौस्त्रीलिंगप्रयोगः
कथं । यदिस्त्रीत्वात् कथंतर्ह्यग्न्यादिपुल्लिंगप्रयोगः तत्राह ॥ स्त्रीरूपइति[७।१४] ॥ एवंचेद्ब्रह्मादिपदप्रयोगान्नपुंसकरूपोप्यंगी
कार्यः । नेत्याह ॥ नेति[७।१४] ॥ कथंतर्हिनपुंसकलिंगप्रवृत्तिस्तत्रेत्यतआह ॥ स्त्रीति[७।१४] ॥ दोषाः पुरुषाभिलाषादयः । वाजिनी
वतीशब्दंव्याख्यातुंवाजिनीशब्दार्थंतावदाह ॥ अन्नेनेति[७।१५] ॥ वाजमन्नं । तदेवतृतीयोतिशयइतिवाजि । तन्नयतीतिवाजि
नीसूर्यः । (अस्य)तस्यतात्पर्यं अन्नेनइति । यद्वावाजमन्नं वाजस्येनोवाजेनः । सएववाजिनीसूर्यः । अविभक्तिकोनिर्देशः ।
अथवावाजिनामश्वानां अन्नवतांवा ईशइति । सएववाजिनी । पूर्ववदुभयथाविवरणं । अथवावाजिनामश्वानामिनानिस
प्तछंदांसिवाजीनानि तान्येवशकंध्वादित्वाद्वाजिनानि । तान्यस्यसंति तेषांस्वामीतिवाजिनी । वाजीनच्छंदसांस्वामित्वं

कथंसूर्यस्येत्यतआह ॥ छंदांसीति ॥ वाजिनीशब्दस्यान्यदप्यभिधेयमाह ॥ अन्नवत्त्वादिति ॥ वाजमन्नं युद्धंच । तदस्या मस्तीतिवाजिनी । वाचोयुद्धवत्त्वोपपादनायज्ञानग्रहणं । ज्ञानार्थंयुद्धंवादादि । अस्त्वेवंसूर्यस्यवाचश्चवाजिनीत्वं । ततःकि मित्यतआह ॥ सइति ॥ स सूर्य स्तस्याः विष्णवाख्यायाः प्रसिद्धायाश्चसरस्वत्याःपुत्रः । वाक्चपुत्री । तदेवंतदुभयवत्त्वा द्वाजिनीवती । ननुवागपिसरस्वती तत्कथंतद्वतीत्यतउक्तंवागुमेति । एवंविधासरस्वती नो स्माकं यज्ञं । वाजेभि र्वाजैर शनैर्बहि रध्यात्मंज्ञानयुद्धैश्च वष्टु वहतु प्रवर्तयतु विकरणलोपःषत्वंचछंदस्त्वात् । अन्नादिदत्वेत्यर्थः । तदुपपादयति ॥ अन्नदेति ॥ अनेनवाजिनीवतीत्युक्तस्योपयोगोभिहितोभवति । अतएववाजेभिरुपेतंनोयज्ञंवष्टु इच्छत्वितिव्याख्यानंन कृतं । अन्नमित्युपलक्षणं । धियासहवसेदित्यनेनवसतेरुकार(कारः)प्रत्ययः । तेनसहार्थेतृतीयायाःसमासोऽलुक्चेत्युक्तंभ वति । नित्यबोधेतितात्पर्यकथनं ॥ १० ॥ चोदयित्री ॥ सुवाचां ॥ सूनृतानां सुवाचां चोदयित्री सदाप्रेरका सुमतीनां सुबुद्धीनां द्वितीयार्थेषष्ठी। चेतंती चेतयंती ज्ञापिका । अत्रणिलोपस्यनिमित्तमाह ॥ स्वातंत्र्यादिति ॥ चेतंतीशब्दःस्वातं त्र्यविवक्षयालुप्तो योयस्य स लुप्तयोभवेत् । यइतिणेरुपलक्षणं । स्वातंत्र्यस्नेहयोरंतर्णीतणिजितिस्मरणात् । ततश्चस्वातं त्र्येणसुबुद्धिज्ञापिकेत्यर्थः । तदिदमुक्तंसैवेति । एवंभूतासरस्वतीयज्ञंदधे । अनेनोक्तप्रकारेणवाग्बुद्धिप्रवर्तकत्वेनयज्ञादि धारिणी । वाग्बुद्धिमूलत्वात्सर्वकर्मणां ॥ ११ ॥ महोअर्णः ॥ (महोअर्णः) तेजस्त्वान्महत्वतश्चेतिमहःशब्दस्यार्थद्वयं । अरमानंदरूपत्वादर्णः । सादेवी सरस्वती । महोअर्णः परंब्रह्म । केतुना ज्ञानेन । भक्तेभ्योमहत्तरंज्ञानंदत्वा । प्रचेतयति



ज्ञापयति । महत्तरमितिवदताप्रशब्दस्यतात्पर्यमुक्तंभवति । इदंतुदेवतांतरविषयं । भगवद्विषयेतु सरस्वती देवःमहोअर्णः स्वमात्मानं केतुनाप्रचेतयति प्रकाशयेदिति । ततएवसुज्ञानदानतोभक्तानांविश्वाधियः । सर्वाःबुद्धीः । विराजति विराज यति । ज्ञानवतोहिबुद्धिर्विराजते ॥ १२ ॥ ६ ॥ ३ ॥ १ ॥ अत्रसूक्तमनुवाकोवर्गश्चपरिसमाप्तः । तत्रसूक्तादि स्वरूपजिज्ञासायामाह ॥ सूक्तमिति ॥ अनारतंप्रोक्तं निरंतरंपठितं । मूलवेदेऋचांयःक्रमःतत्रऋचोनंतरिताःकृत्वायाव त्पठितंतावदुपवेदेसूक्तमुच्यते । ऋषिभिर्दर्शनसमयेयावन्निरंतरकालेदृश्यतेसानुवागुच्यते । यद्वैककालिकेत्यस्यविरामभक्त्वैकस्मिन्कालेपठनीयेत्यर्थः । उक्तस्यापवादमाह ॥ अन्यथात्वंचेति ॥ मूलवेदादुद्धृतेष्वृङ्गिगदाद्युपवेदेषुयदनारतप्रोक्त तयासूक्तमुक्तं तत्रतस्यततोप्युद्धृतेष्वृग्वेदादिष्ववांतरवेदेष्वन्यथात्वंचस्यात् । कथं । ऋचामावापोद्वापरूपेण तत्क्रमपठिता नांकासांचिदृचामुद्वापः स्थानांतरस्थानांतत्रावापइति । उपवेदगतसूक्तांतर्गतऋक्प्रबंधत्वेनावांतरवेदेसूक्तसंज्ञेतिज्ञातव्यं । आवापोद्वापकरणेकोहेतुरित्यतआह ॥ वेदेति ॥ इदंतुवक्ष्यमाणविवरणानुसारेणप्रतिपत्तव्यं । भवेदेतद्यदिमूलवेदादुप वेदानांततोवांतरवेदानांचोद्धारेणप्रबंधनिर्माणंप्रामाणिकंस्यात् तदेवकुतइत्यतआह ॥ ऋचइति ॥ ऋङ्ननिगदसामानीति मूलवेदादुद्धृताउपवेदाउच्यंते । ततोमूलवेदादुपवेदास्ततश्चावांतरवेदाउद्धृताइत्येतदेवंपुराणवचनादवगम्यतइत्यर्थः । य थोपवेदादिप्रबंधःकृत्रिमएवंशाखाप्रभेदोपीत्येतत्प्रसंगादाह ॥ ऋचइति ॥ ऋचइतिप्रस्तुतत्वादुक्तं । यजुरादिकंचैवंज्ञा तव्यं । एवमावापोद्वारावुपपाद्यतत्रलिंगंचदर्शयति ॥ मानइति ॥ मानःस्तेनेभ्योयेअभिद्रुहस्पदेनिरामिणोरिपवोन्नेषुजा

गृधुः । आदेवानामोहतेविव्रयोहृदिबृहस्पतेनपरःसाम्नोविदुरित्येतस्यामृचिपूर्वोत्तरार्धयोरसंबद्धार्थत्वेनार्थतोन्यूनतादृश्यते । ततोज्ञायतेऽत्रांतरितंवाक्यमस्तीति । एवमन्यत्रापि । किंचशुनःशेपस्तावदृचांशतंक्रमेणददर्शेतिब्राह्मणं । तासामवांतरवेदेत्र्यूनंशतमेवद्वितीयाध्यायेदृश्यते । ताभ्योन्यास्त्वन्यत्रपठ्यंते । तेनज्ञायतेऋचामितउद्धापोऽन्यत्रावापइति । किंच अत्र मधुछंदसादृष्टास्वपिऋक्षुनायमेवक्रमइत्याह ॥ अत्रापीति ॥ अक्रमतोदृष्टिरित्यवांतरवेदेयःक्रमस्तमुल्लंघ्यैवमधुछंदसोदृष्टिरित्यर्थः । यद्वामूलवेदोपवेदयोर्यःक्रमस्तमुल्लंघ्यैवावांतरवेदेऽत्रमाधुछंदसेप्रकरणेऋचोदृश्यंतइति । इतिनैकक्रमोभवेत मूलवेदोपवेदावांतरवेदेष्वितिशेषः । वेदानंतत्वविज्ञप्त्याआवापोद्धापाभ्यांसंक्षेपःकृतइत्युक्तं तदसत् । अनंतावैवेदाइत्यादि नैवतज्ज्ञप्तिसंभवादित्यतउक्तंविवृणोति ॥ अनंतत्वादिति ॥ अनंतत्वात्तदुक्तप्रकारेणकर्मकरणाशक्तेरितिशेषः । इतश्चन मूलवेदादिष्वेकप्रकारतेत्याह ॥ अष्टकेति ॥ मूलवेदादावविद्यमानमेवेतिशेषः । उद्धारेलिंगांतरंचदर्शयति ॥ तत्रेति ॥ खिलाः परिशिष्टाः । नन्वयमुद्धारःकथंज्ञायतइत्यतस्तस्यज्ञापकंलेशेनदर्शयति ॥ यत्रेति ॥ यत्रवाक्यद्वयस्यार्थेविशेषो नास्ति तत्रयेनपदेनसापुनरुक्तिःपरिहृतास्यात्तत्पदमंतरितंज्ञातव्यं । यत्रतुविनापिपदांतरमल्पेनापिविशेषेणश्रुतेनैवपुनरुक्तिपरिहारःस्यात्तत्रपदांतरिततानकल्पनीया । एवमन्यान्यपिलिंगानिगवेषणीयानीति। अनेनवर्गस्तुसामयिकएवेत्युक्तं॥छ॥



**सुरूपकृत्नुं** ॥ ॥ दशर्चमिदमैंद्रंसूक्तं ॥ **विष्णुं** ॥ वयं द्यविद्यवि दिनेदिने । गोदुहे गोदोहाय । संपदादित्वात्क्विप् । गांदोग्धीतिगोधुक् तस्मैगोदुहे । तदर्थं दोहायेतिशेषः । सुष्ठुदोग्धीतिसुदुघा । दुहःकप्घश्च । तांकामधेनुमिव । तस्मिं स्थितिर्यस्यासौतत्स्थितिःतस्यभगवदाश्रयस्ययजमानस्योतये अभिप्रेतार्थसिद्धये त्राणायवा । अवतेरुभयार्थत्वात् । सुरूपकृत्नुं साधुरूपाणांकर्तारंविष्णुमिंद्रंच जुहुमसि स्वाह्वयामः । ह्वयतेश्लुः । दार्ष्टांतिकेऊतयइतिप्रयोजनस्यश्रुतत्वात् दृष्टांतेपिदोहायेत्युक्तं । दृष्टांतेगोदुहइत्युक्तत्वात् दार्ष्टांतिकेपितत्स्थितेरितिशेषोभिहितः । स्मसीत्यादिप्रोक्ताधिक्यविवक्षयेत्युक्तत्वात्स्वाह्वयामइत्युक्तं ॥ १ ॥ उपनः ॥ **ज्ञानदः** ॥ हेसोमपाः इंद्र । योभवान्रेवतो ध्यातमंज्ञानाख्यरयियुक्तस्य बहिरपि त्वत्पूजार्थंहिरण्यादिमतोऽस्ययजमानस्य । इत् एव । गोदाः ज्ञानदः । मदः सुखकारीच । सत्वं नो स्माकं सोमस्य सवना सवनान्युपागहि उपागच्छ । पिबच सोमं । यदियजमानोज्ञानाख्यरयियुक्तःकिंतस्यज्ञानदानेनेत्यतउक्तमधिकमिति । क्रियाविशेषणंचैतत् ॥ २ ॥ अथाते ॥ **तस्मात्** ॥ यस्मात्त्वंज्ञानादिमतोऽभिप्रेतार्थदायी अथतस्मात् । वयमुत्तमोत्तमगणनस्यांतेमिताः प्रमिताः । उत्तमोत्तमाइतियावत् । यास्ते तव त्वद्विषयाःसुमतयस्तासामंतमानांसुमतीना मंतमाःसुमतीः । विद्याम लभेम लभेमहि व्यत्ययात् । त्वंचनोस्मानति अतीत्यान्यान्सदामाख्यः मापश्य । मायंनमाङ् । अस्मानेवपश्य । आगहि आगच्छच । क्रूरदृष्ट्याऽन्यदर्शनमेवाभिमतमितिकरुणार्द्रदृशेत्युक्तं ॥ ३ ॥ **परेहि** ॥ **मन्मनः** ॥ हेमन्मनो मदीयमनः । यद्यपित्वमिंद्रात्परा दूरेवर्तसे । तद्ग्रहणासमर्थं । अथवाशक्रः परमेश्वर स्त्वत्तःपरा दूरेवर्तते त्वद्विषयोनभवति । अपि तथापि त्वंविग्रं वीत्युपसर्गोनञर्थे । ग्रहउपादाने । कर्मणिडः । अग्राह्यं । अस्तृत मच्छिन्न मनष्टं विपश्चितं विपूर्वादा

प्नोतेरसुन् । धात्वाकारलोपश्च । विपाः व्याप्ता चित्यस्यासौविपश्चित् । तंव्याप्तचित्तं । अवग्रहदर्शनात् इंद्रं परमेश्वर मिहि गच्छ शरणंयाहि अवगच्छवा । तदर्थंगुरून्पृच्छ । यइंद्रस्तेसखिभ्यआवरं आवरो नित्येत्तमस्तं । अत्रपरेत्युपसर्गस्येहीति क्रियायोगेमरणार्थत्वप्रतीतेरन्यथाव्याख्यातं ॥ ४ ॥ उतब्रुवंतु ॥ निदः ॥ येनिद स्तस्य परमेश्वरस्यसमीगाःसृष्ट्यादावेव तत्समीपेवर्तमानाब्रह्मादयःतउत तेपि नो स्मान्प्रति देवंब्रुवंतु । परमेश्वरस्वरूपंयथावद्व्याकुर्वंतु । उतेतिवक्ष्यमाणापेक्षया। निदइत्यव्ययस्यसामीप्यार्थत्वेऽभिधानंवक्ष्यते । येचान्यतः स्थानांतरतः निरित्युपसर्गश्रवणादारतेत्यनेनचयोगायोगादधि कार्थलाभाच्चधात्वध्याहारः अस्मा त्संसारहेतोरज्ञानतोनिर्गत्यैवतंपरमेश्वरमारत प्रापु स्तेपिब्रुवंतु । येचेंद्रइत् ईशएव दुवः प्राणान् आत्मनेविषयान् । दुहंतीति । दुहेर्डुः । दधानावर्तंते तत्प्राप्त्यर्थंतमुपासते । तेपिनःपरमेश्वरंब्रुवंत्वेव ॥५॥७॥ उत नः ॥ अरयोपि ॥ हेदस्म दस्यतिर्भेदनार्थः । ततोम(क्)प्रत्ययः । शत्रुभेदिन् शत्रूणांहंतः । अरिरुत अरयोपि । कृष्टयः प्रजाः। नोस्मान्सुभगान्सदावोचेयु र्वदेयुः । किंच वयमिंद्रस्य तवानुग्रहे सतीतिशेषः । शर्मणि सुखे स्यामेत् स्यामैव । त्वदनुग्र हेणसुखिनोभवामैव॥६॥एमाशुं ॥ आशुवीर्यं ॥ विशब्दोवीर्यवाची। आशु विःवीर्यं यस्यासावाशविः । पूर्वपदोकारस्या कारः । हेआशवे आशुवीर्य क्षिप्रकारिसामर्थ्य । आशुं क्षिप्रं वेगवंतं । द्रवत्वात् । यज्ञश्रियं यज्ञभूषणं । नृमादनं पुंमद करं कृतपानानांपुंसांहर्षकरं । पतयत् उत्पतयंतं । मदात् मदमुत्पाद्योत्पतनादिकेव्यापारेहेतुं । मंदयत्सखं मंदयति सखायमितिमंदयत्सखस्तं । मयूरव्यंसकादिदर्शनात् । यःसोवंपिबतितत्सखीनांमंदत्वहेतुं । कथं पुरोगते धावनादौकृत पानानांबलवत्तयाऽकृतपानेभ्यःपुरोगमनात् । एवंभूतंसोममाभर स्वोदरइतिशेषः । अध्यात्मंत्वेवंविधंमनस्तुष्ट्याहृदिसा ध्विदमित्याभरेतिव्यवस्थितोविकल्पः । ईमित्यनूद्यैवेतिव्याख्यातं । तस्यकेनाप्यन्वयायोगात्तवेत्यध्याहृत्यतवैवेत्युक्तं । त्वद धीनमेवसोमंत्वंस्वीकुर्विति । मनस श्चंचलत्वादाशुत्वं । तदुद्रेकेणचपुंसांमदादिकंभवति । आशवे आशुत्वार्थमितिव्याख्या नंप्रमाणविरुद्धमित्यतःसंबुद्धितयाव्याख्यातं ॥ ७ ॥ अस्यपीत्वा ॥ एनंपीत्वा ॥ हेशतक्रतो शतमित्यपरिमितनाम । क्रतु र्ज्ञानं बहुज्ञान । त्वं अस्यैनंसोमं पीत्वा । वृत्राणां तमसां घनो ऽभेद्योऽभवः । तमोभिरनावृतोभूरितियावत् । ननुप रमेश्वरस्यसोमपानोत्पन्नयाशक्त्याज्ञानाप्रतिहतिरित्येतत्प्रमाणविरुद्धमतोभिप्रायमाह ॥ प्रसादादिति ॥ येषांसोमःपरमे श्वरेणपीतःतेषुतेनयज्ञेनोदिताद्भगवत्प्रसादादेवमुक्तेषुसत्सुप्रसादादेवपरमेश्वरस्तमोनसहतेऽतःसोमंपीत्वावृत्राणांघनोभवइ त्युच्यते । नतुसोमपानसामर्थ्येनतस्याज्ञानानावृतिः । असह्यंतमोयस्यासौतमोसह्यः । तमसोसह्यइतिवा । अज्ञानेषुवृत्रश ब्दंनिर्वक्ति ॥ आवृतेरिति ॥ सर्वजीवावरणात् । अस्यनिर्वचनस्य यदावृणोत्तद्वृत्रस्यवृत्रत्वमित्यादिश्रुतिप्रसिद्धतयाप्रा बल्यंसूचयितुंह्येवशब्दौ । किंच त्वंवाजिन मन्नवंतं । अन्नदंनरमितियावत् । वाजे ष्वन्नेषु सर्वभोगविषये प्रावो रक्षः । अ थवावाजिनंयोद्धारंवाजेषुयुद्धेषुप्रावः । नान्नदानादिमात्रेणेश्वरोरक्षतीत्यतःशेषमाह ॥ भक्तंज्ञानिनमेवचेति ॥ ८ ॥ तंत्वा ॥ योधयामः ॥ हेशतक्रतो इंद्र । त मेवमुक्तगुणं वाजिनं योद्धारं त्वां । अध्यात्मंधनानांसातये ज्ञानादिधनल ब्धये वाजेषु युद्धेष्वज्ञानाद्यस्मदरिभिःसह वाजयामो योधयामः । बाह्येस्पष्टं ॥ ९ ॥ योरायः ॥ योशेषं ॥ यइंद्रो रा

योवनि रशेषद्रविणस्यावनिः । अवनिरितिपृथिवीनाम । अवनिरिवावनिराश्रयः । अवतेरैश्वर्यकर्मणःप्राप्तिकर्मणोवाकर्तर्यनिप्रत्ययः । महानुत्तमः सुखदःसंसृतेःपारश्चेति सुपारः । सुन्वतो यजमानस्य सखा । तस्माइंद्रायसामगायत । हेउद्गातारः । यद्वागायतिःशब्दमात्रार्थः । तस्मैतदर्थंस्तुतिशब्दान्कुरुतेति । अशेषेतिकंपार्थउक्तः । तत्रकंपस्याशेषार्थतायांप्रमाणमाह ॥ **कंपइति**॥१०॥८॥४॥**आत्वेता** ॥ दशर्चमैंद्रंसूक्तं । हेसखायःस्तोमवाहसः स्तोमाःसामविशेषाः । तान्वहंतीतिस्तोमवाहसः । छांदसोह्रस्वः । उद्गातारइतियावत् । एत आगच्छत । आनिषीदत आगत्योपविशत । इंद्रमभिप्रगायतच । आगमननिषदनयोरित्थंभावस्यसूचकस्तुशब्दः । स्पष्टत्वाद्दचोनव्याख्यानंकृतं । एवमन्यत्रापि ॥ १ ॥ **पुरूतमं** ॥ **सुंपूर्णानां** ॥ पुरूणां सुपूर्णानांमध्ये पुरुतमं पूर्णतमं । वार्याणां वरेण्यानां उपादेयानांवस्तूनां । ईशान मधीश्वरमिंद्रंतंप्रभुं सोमे सुतेसति । सचासुखेनैव मनःप्रसादपूर्वकं गायतेत्यनुवृत्त्यासंबंधः । अत्रपुरूतममितितमपूछांदसः । व्यत्ययेनोदात्तत्वं । यद्वातमुअभिकांक्षायामित्यस्यकर्मणिरूपमेतत् । पुरुभिःपूर्णैस्तम्यतइतिपुरुतमस्तं । पुरूणांवार्याणामितिसामानाधिकरण्यं ॥२॥ **सघ** ॥ **मुंक्तौ** ॥ अत्रघो घशब्दो ऽवधारणे वर्तते । ततश्चसघ सएव भगवान्नोऽस्माकमासमंताद्योगे मुक्तौ सायुज्यलक्षणाययोगाय भुवत् अभवत् विकरणव्यत्ययात् । भवेत् कालव्यत्ययात् । सएवराये अध्यात्मंज्ञानवित्ताय भुवत् बहिर्व्यक्तं । सएवच पुरंध्यां बुद्धौ सर्वेषांबुद्धिगोवर्तते । कथंबुद्धिःपुरंधिरित्यतआह ॥ **बुद्धिरिति** ॥ पुरंशरीरंधीयतेस्यामितिपुरंधिः । कर्मण्यधिकरणेचेतिकिः उपपदस्यनुमागमश्छांदसः । बाह्येव्याचष्टे ॥ **पत्नीति** ॥ अथवापत्न्यपिपुरंधिरित्यन्वयः । तन्नामसुपाठात् । तत्रकथंसप्तम्यन्वयइत्यतआह ॥ **पत्न्यर्थत्वइति** ॥ पुरंधिशब्दस्यपत्न्यर्थत्वेतु योगइतिवत्सप्तम्यास्तादर्थ्यमर्थः । पुरंध्यां पत्न्यर्थं भुवदिति । किंच सइंद्रोवाजेभिः वाजैरन्नैःसह । अन्नानिदातुमितियावत् । नोस्मान्प्रत्यागमत् आव्रजेत् ॥ ३ ॥ **यस्यसंस्थे** ॥ **यस्यस्थितौ** ॥ यस्येंद्रस्यसंस्थे घञर्थेकविधानं । स्थितौसत्यां । यस्मिन्निंद्रेरथस्थितेसतीतियावत् । समत्सु युद्धेषु । शत्रवो हरी अश्वौ हर्यग्रमपि नवृण्वते नवृणते । अश्वाग्रमपिनप्राप्नुवंति । तस्माइंद्रायगायत । अध्यात्मंहरीइत्येतस्यार्थमाह ॥ **मनः पुरोवेति** ॥ अत्रमनश्शब्देनबुद्धेरप्युपलक्षणं । हरिशब्दोमनोबुद्ध्योःकथंवर्ततइत्यतआह ॥ **विषयेति** ॥ एवशब्दो निर्वचनस्फुटतायां । शत्रूनाह ॥ **तमआदीनीति** ॥ ततश्चैवंयोजना । यस्येंद्रस्यसंस्थे यस्मिन्परमेश्वरेविशेषतोभक्तशरीरेसन्निहितेसति । समत्सु ज्ञानयुद्धेषु शत्रवः तमःप्रभृतयो हरी मनोबुद्ध्योःपुरो नवृण्वते । मनोबुद्धीनाज्ञानाद्यावृतेभवत इति ॥ ४ ॥ **सुतपाव्ने** ॥ **सोमपे** ॥ शुचयः शुद्धाः सुता अभिषुता दध्याशिरो दध्याशिराः दधिविमिश्रिताः आशिरशब्दोमिश्रितार्थइत्येके । अन्येत्वहोरात्रांतरितंदध्याशिरं ततश्चाशिरंदधियेषुतेदध्याशिराः तस्यतात्पर्यंदधिविमिश्रिताइति । इमेसोमासः सोमाः वीतये वीतिर्गत्यादौपठ्यते । यजमानस्येंद्रप्राप्तौ सुतपाव्ने सोमपे आतोमनिन्क्वनिब्वनिपश्चेतिवनिप् । इंद्राय यंति यांति । गत्यर्थकर्मणीतिचतुर्थी । अध्यात्मंतु सुतावेदवाक्यसंघर्षवंतः । शुचयोरागादिविधुराः दध्याशिरः आदृगमहनजनःकिकिनौलिट्चेतिकिप्रत्ययः । दधि परमेश्वरेधारणं । ध्यानमितियावत् । तेनयुक्ताःसोमाः मनांसि सुतपाव्ने मनसासेव्यायहरये सदायंति वीतये तत्प्राप्त्यर्थमिति ॥ ५ ॥ ९ ॥ **त्वंसुतस्य** ॥ **सदापूर्णः** ॥ हेइंद्र सुक्रतो

शुभज्ञान सद्योवृद्धः समानेऽहनि यस्मिन्नहनिस्वयंवर्ततेतस्मिन्सदाचवर्तते । अतःसदावृद्धः सदापूर्णस्त्वं सुतस्यपीतये सोमस्यपानाय सुताप्तयइतितात्पर्यं । यद्वा अपिपूर्वस्येणःक्तिनिरूपमेतत् । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरल्लोपः । सोमस्यपीतये सुताप्तये यज्ञेयदजायथाः अभिव्यक्तौऽभवस्तत् ज्यैष्ठ्याय ज्यैष्ठ्यव्यक्त्यै सर्वदेवताभ्योतिशयेनसोमपानादिनास्वकीयंज्यैष्ठ्यंप्रकटयितुमेव । नतुक्षुदादेर्हेतोः ॥ ६ ॥ आत्वा ॥ गीर्भिः ॥ हेगिर्वणो गीर्भिर्वेदवाक्यैर्वननीय भजनीय । वनतेरसुन् । वृतेतितात्पर्यं । यद्वावृणोतेःकर्मण्यनस्प्रत्ययोडित् । इंद्र प्रभो आशवः क्षिप्राः सोमासः सोमास्त्वा त्वा माविशंतु । त्वामाविष्टाश्चतेसुताः प्रचेतसे यःप्रकृष्टचेता स्ते त्वदीय स्त्वद्भृत्योयजमानो ऽस्मै अस्य शंशकराः संतु स्युः ॥ ७ ॥ त्वांस्तोमाः ॥ व्यंजयंति ॥ हेशतक्रतोप्रभो त्वां साम्नि सामविशेषाः स्तोमाअवीवृधन् व्यंजयंतिस्म । एवमृक्षूक्था उक्थानिच त्वामेवावीवृधन् । हियस्मादेवंतस्मान्नो स्माकमपिगिर स्त्वां वर्धंतु वर्धयंतु । महागुणैर्युक्तंत्वां व्यंजयंतु । त्वामित्यस्यपुनरुक्तेरधिकमित्युक्तं । णिज्लोपस्यतात्पर्यंस्वातंत्र्यादिमहागुणैर्युक्तमिति । नन्वत्रवृद्धिशब्दस्यप्रसिद्धएवार्थोयुक्तः व्यक्तौप्रयोगादर्शनादित्यतआह ॥ आकाशेति ॥ कुड्याद्यपसरणादिनाऽऽकाशेऽभिव्यक्तेवृद्धआकाशइतिप्रयोगवद्विष्णावपिवृद्धिशब्दप्रयोगोनतूपचयार्थतया । आकाशेबाधकवशादुपचरितोंगीक्रियतइतिचेत्समंप्रकृतेपीत्याह॥ नवर्धतइति ॥ जगौ वृद्धिक्षयरहितमितिशेषः । बाधकांतरमाह ॥ महातात्पर्येति ॥ विष्णोरीश्वरत्वेयत्सर्ववेदानांमहातात्पर्यंतद्विरोधाच्चनवृद्धिःश्रुत्यर्थोभवेत् । कथंविरोधइत्यतआह ॥ यदीति ॥ यदिविष्णोःस्तोमाद्यधीनावृद्धिःस्यात्तर्हीश्वरत्वंनस्यात् पराधीनश्चेश्वरश्चेतिविप्रतिषेधात् । ततश्चयत्तत्रवेदानांमहातात्पर्यंतद्विरुध्येतेति । विष्णोर्वृध्द्यंगीकृतावुत्तरवाक्यविरोधोपिस्यादित्याह ॥ अक्षितोतिरिति ॥ अस्माद्वृद्ध्याद्यभावेनस्वातंत्र्यादेवहिविष्णोरक्षितोतिरित्युदितापूर्णाभिप्रायतायुज्यते नान्यथेत्यर्थः ॥ ८ ॥ अक्षितोतिः ॥ अनंत ॥ यस्मिन्यत्रेंद्रे विश्वानिपौंस्या पौरुषाण्यखिलाश्चशक्तयःसंति सोऽक्षितोतिः पूर्णाभिप्रायो वांछितस्याखिलस्यपूर्तिमानिंद्रः सहस्रिणं सहस्रशब्दोनंतवाची तद्वंतं अनंतफलदमितियावत् । इमंवाजमन्नं हविःसनेत् अस्मत्तोलभतां । अथवाऽऽत्मपूजार्थंवाजमस्माभिःसनेत् सनयेत् लंभयेत् अस्मभ्यं ददात्वित्यर्थः । यस्मिन्विश्वानिपौंस्येत्यनेनापिवाक्येनपूर्वत्रवृद्ध्यंगीकारेविरोधइतिसिंहावलोकितेनाह ॥ अंतश्चेति ॥ ब्रह्मसूत्रविरोधंचतत्राह ॥ सर्वेति ॥ एतमर्थं सर्वशक्तित्वादीश्वरस्यवृद्ध्याद्यभावं ॥ ९ ॥ मानः ॥ मामर्ताः ॥ हेगिर्वणः इंद्र मर्ताः मर्त्याः नो स्माकं तनूनां शरीरेभ्यो माभिद्रुहन् द्रोग्धारःकथंचनमास्युः । कथं । येनकारणेनत्वमीशानईशोसि तेन नो ऽस्माकं वधंयवय अपगमय अपाकुरु । संसारेवधाभावोऽसंभवीत्यतोमुक्तिदानतइतिशेषमाह । ऋचंप्रकारांतरेणव्याख्याति ॥ मनुष्येभ्यइति ॥ मर्तानस्तनूनांमाभिद्रुहन् अस्मत्तनूनांमानुषेभ्योविपत्तयोनैवस्युः । वरमीशानस्त्वंवधंयवय प्रापय । कालेनदैवत स्त्वत्तःप्राप्तो ऽदेहत्वतो देहाभावरूपेणवधःस्यात् । दुर्जनैःक्रियमाणादुपद्रवाद्देवाधीनंमरणमेववरं । अतस्तत्परिहारंकुर्वित्याशयः ॥ १० ॥ १० ॥ ५ ॥ युंजंति ॥ दशर्चमेतत्सूक्तं । तत्रप्रथमाद्वितीयाचतुर्थीचमारुत्यः । तृतीयापंचमीचैंद्रमारुत्यौ । शेषाश्चैंद्र्यइतिविभागः । तत्रेश्वरविषयेतावद्व्याख्याति ॥ पौंस्यानीति ॥ यस्मिन्विश्वानिपौं

स्येतिप्रकृतानिवासुदेवस्यपौंस्यानि अरुष मरुणं वर्णतः। तस्थुषः स्थावरान् गिरीन् परितश्चरंतं ब्रध्नं दिवाकरं कथं। वृद्धं वृद्धत्वेनब्रध्नशब्दवाच्यं। वृधुवृद्धावित्यस्यैतद्रूपं। अतएवमहन्नामसुपाठः। सर्वदायुंजंति नियुंजते प्रवर्तयंति। किंचैतैरेवपौंस्यैर्निमित्तैरन्यानिदिवाकराचंद्रादीनिरोचनानिज्योतींषिदिविविविष्टपेरोचंतेदीप्यंतेरोचयंतिचान्यान्॥ १॥ युंजंत्यस्य॥ [८।२२] हरीच॥ प्रकृतावासुदेवस्यस्वशक्तयः स्वरूपभूताःशक्तयो स्यहरी एतदधीनेमनोबुद्धी रथे भक्तानांदेहे युंजंति योजयंति। तान्मनस्विनोबुद्धिमतश्चकुर्वंति। एतामृचंमरुद्विषयेव्याख्याति॥ [९।१] अपिवेति॥ देवा मरुतोपिवा अस्येंद्रस्य हरी अश्वौ तस्यैवरथेयुंजंति योजयंति। अथवादेवाःस्वीयंमनोबुद्धिंचास्यजीवजातस्ययेदेहेयुंजंति तत्प्रेरणायप्रयुंजते। पूर्वामप्यृचंमरुद्विषयतयातात्पर्यतोव्याचष्टे॥ [९।२] सूर्यादीनिति॥ वासुदेवस्यपौंस्यानीतिस्थानेदेवाइतिवक्तव्यं। समानमन्यत्। सूर्यादिस्थापकत्वंकिंसर्वदेवतासुप्रतिपत्तव्यं नेत्याह॥ [९।२] सूर्यादीति॥ अन्येषुलक्षणयाप्रयोगइतिभावः। ब्रह्मादीनामित्युक्त्यामरुच्छब्दःसर्वदेवतावचनःप्रतिपत्तव्यः। द्वितीयस्यामृचिकाम्यादिविशेषणानिमनोबुद्ध्योरश्वयोश्चयोजयति॥ अधिगुणत्वेनेत्यादिना॥ अधिगुणत्वंकाम्यत्वेहेतुर्नतुशब्दार्थः। विशिष्टौपक्षौययोस्तौविपक्षौ। असंभवात् गौण्यावृत्त्यायोजयति॥ [९।२] विशिष्टेति॥ पक्षिणावितिशेषः। शमणावित्यस्यैवविवरणंसुखप्राप्तौयतःसदेति। अणतेःपचाद्यच्। शंसुखमणौप्राप्तौशमणौ। तावेवशोणौ। शंशब्दसमानार्थःशशब्दः अकारस्योकारः। तस्यार्थःसदेति। नन्वस्तुमनोबुद्ध्योरिदंव्याख्यानमश्वयोस्तुशोणत्वंप्रसिद्धमेवकिंनस्यादित्यतआह॥ [९।३] श्यामाविति॥ यतःशक्राश्वौश्यामौप्रमितौ



अतोऽसंभवाद्योगस्तत्राप्यनुसर्तव्यएव। प्रकारांतरेणशोणशब्दमश्वयोर्व्याचष्टे॥ [९।३] मूर्धनीति॥ उत्तमांगसंबंधिनागुणेनलक्षणयाशोणावुच्येते। नन्विंद्रस्यसहस्राश्वत्वात्द्वयोरेवाश्वयोर्ग्रहणंकस्मादित्यतआह॥ [९।३] अग्रगाविति॥ प्राधान्यात्द्वयोरेवग्रहणमितिभावः। धृष्णू धृष्टौ वियातौ। नृन्प्रतीत्यनेननृवाहसावित्येतत् नृन्प्रतिवहंताविति नरंतमीशमिंद्रंविष्णुंवावहंताविितिच द्वेधाव्याख्यातं। तावुभावपीतिमनोबुद्धी अश्वौचेत्यर्थः। काम्यावित्यादौसर्वत्रेदंसंबध्यते॥ २॥ केतुं॥ [९।४] अज्ञाय॥ हेइंद्रईश्वरत्वमकेतवे अज्ञाय अज्ञस्य केतुं सज्ज्ञानं कृण्वन् कुर्वन्नपेशसे अहेमाय हेमवर्जितस्य पेशो हेमचकुर्वन्नुषद्भिः। वशकांतावित्यस्येदंरूपं। शकारषकारआधिक्यार्थः। संप्रकाशद्भिः संप्रकाशमानैः पौंस्यैः शक्तिभिः। सहसमजायथाः यज्ञेव्यक्ततागताः। नकेवलंत्वंकिंतुमर्यामरणवंतोदेवाः अप्येवं। अकेतवेकेतुमपेशसेपेशश्चकुर्वतःस्वसामर्थ्यैःसहसमजायंतेति॥ ३॥ आदह॥ हरेवंशात् [९।५]॥ यज्ञियं यज्ञेभवं यज्ञेवाच्यं नामदधानाः परेशस्यशक्तयः। आत् अकारवाच्याद्विष्णोर्निमित्तात्। स्वेच्छयेतियावत्। अह तदैव यज्ञेव्यक्तत्वादनंतरमेव स्वधामनु सुखमनु सुखेनैव नतुभयेन पुनर्गर्भत्वं गूढत्वमेरिरे आपिरे आप्ताः। देवताअप्येवं॥ ४॥ वीळुचित्॥ [९।६] वीळुंदृढं॥ हेइंद्रगुहाचित् गुहायांसंस्थितोपि लोकानांगूढत्वेनावस्थितोपिसंस्त्वं वीळु दृढं चित् अपि ब्रह्मांडादिकमारुजत्नुभिः आरुजद्भिः रुजोभंगे संहरद्भिः वह्निभिः अखिलं लोकंवहद्भिः पौंस्यैःस्वसामर्थ्यैःसहउस्रियाः प्रकाशत्वानि प्रकटत्वानि नानाविधंप्राकट्यमनु स्वेच्छानुसारेणा विंदो लब्धवानसि। प्रकाशोवर्तसे। यद्वैतादृशैर्वीळुचिदारुजत्नुभिःवह्निभिर्देवैःसाकंत्वमुस्रियाअन्वविंदः आनुकूल्येनलब्धवानसि॥

॥ ५ ॥ ११ ॥ देवयंतः ॥ सम्यक् ॥ अच्छेतिनिपातःसंशब्दार्थे । अच्छदेवयंतः । सम्यक्प्रद्योतयंतः सम्यक्प्रकाशयंत्यो गिरो वेदरूपाःसुगिरः । लिंगव्यत्यासःछांदसः । अथवागिरइतिकर्तृसाधनःपुल्लिंगः । अतएवशोभनागिरोयेषांतेसुगिरः । यथा यथास्थितं निर्विकारं मतिं मतिरूपं विदद्वसुं विदद्वित्तं विददितिकर्मणिछांदसंरूपं । लब्धवित्तं । महां महांतं श्रुतं विश्रुतं प्रसिद्धममुमिंद्रमनूषत अस्तुवन् ॥ ६ ॥ इंद्रेण ॥ तस्य ॥ अत्रमखात्मेत्युत्तरस्यामृचिस्थितस्यमखशब्दस्यव्याख्यानं । वाचश ब्दौव्यत्यासेनयोज्यौ । मं मदंसुखंददातीति मंदुःशंकरःपुरुहूतश्च । श्रीभूमीवामंदू । कथं । सुखात्मिके । ततश्चमंदू शंकरपुरुहूतौ श्रीभूमीवा संदृक्षसे । दृशेस्तुमर्थेकसे । तस्यपरमेश्वरस्यसंदर्शनाय अबिभ्युषा निर्भयेन समानवर्चसा निर्विकारतेजसा इंद्रेण तेनैवपरमेश्वरेण संजग्मानः संजग्मानौ संगतः संगतौ बभूवतुः । प्रसिद्धेंद्रविषयेमंदूइतिद्यावापृथिव्यौ । मदहेतुत्वात् । अन्य त्समानं ॥ ७ ॥ अनवद्यैः ॥ मखोमखात्मामखाभिमानीपुरुहूतो ऽनवद्यैः निर्दोषैः अभिद्युभिरभितोद्यौःप्रकाशोज्ञानंयेषांतैः महाज्ञानैः इंद्रस्य परमेश्वरस्य काम्यैः प्रियै र्गणै र्देवतागणैः सह सहस्वत् सहस्वान् । सहोवायुस्तद्वान् । सहस्वद्यथाभव तितथेतिवा । वायुनाचसहेतियावत् । इंद्रस्य इंद्रं परमेश्वरमर्चति । तात्पर्यमाह ॥ अर्चतीति ॥ वायुरिंद्रःसर्वेदेवाश्चपरमे श्वरमर्चंतीत्युक्तंभवतीति । अनवद्यैरित्यादिविशेषणानिहेतुगर्भाणीत्यभिप्रेत्यसर्वेषांसंग्रहउक्तः सुधीत्वादिति । इंद्रविषयेत्वनव द्यैरभिद्युभिरिंद्रस्यकाम्यैःऋत्विग्गणैःक्रियमाणोमखःसहस्वद्बलवदतिशयेनेंद्रमर्चतीतिकरणेकर्तृत्वोपचारेणयोज्यं ॥८॥ अतः ॥ अतोहेतोः ॥ परितोज्मांभूमिंवर्ततइतिपरिज्मा हेपरिज्मन् सर्वग यतएवंत्वंसर्वज्ञानांभोक्ता अतोहेतोर्दिवः स्वर्गात् रोचना



त्सूर्यमंडलाद्वा अधि अस्माकंसमर्हणमधिकृत्य इह यज्ञस्थानं आगहि आयाहि । किंच । अस्मिंस्थानेगिरः स्तुतिरूपावेदवाचः सं सम्यक् तस्यैवविवरणंपरममुख्यतस्त्वामृंजते । धातूनामनेकार्थत्वात्प्राप्नुवंति । अतोप्यायाहि । अत्रसूक्तेप्रथमस्तृचऐंद्रः । आदहेत्याद्याःषड्मारुत्यः । तत्रापिवीळुचिदिंद्रेणेतिद्वेऐंद्र्यौच । दशमीत्वैंद्रीतिकेचिद्ब्रुवते । यथायुंजंत्यादहेत्येताःषण्मारुत्योवीळु चिदिंद्रेणेत्यैंद्र्यौचेति । अनाख्यातेत्विंद्रोदेवतेतिच । तदेतद्दशम्यांविप्रतिपत्त्यभावात्तद्व्याख्यानात्प्रागेवनिराकरोति ॥ युंजंती त्यत्रेति ॥ युंजंतिब्रध्नं युंजंत्यस्येत्यत्रऋग्द्वयेदेवताभ्योन्यइंद्रलक्षणोर्थोनेष्यते प्रामाणिकैः । कुतः । बाहुल्यात् बहुवचनश्रव णात् । तस्ययथाकथंचिद्व्याख्यानेब्रध्नशब्दस्यादित्येरूढिर्विरुध्यते । असौवाआदित्योब्रध्नइतिश्रुत्यंतरव्याख्यानविरोधश्च । उप लक्षणंचैतत् । केतुंकृण्वन्नित्यस्यामृचिकृण्वन्नित्याद्येकवचनस्य मर्याइतिबहुवचनस्यचश्रवणादन्यःकेवलेंद्रलक्षणोर्थोनेष्यते । चतुर्थ्यांपंचम्यांचनविप्रतिपत्तिः । उत्तरासुचतुर्षुप्रतिपाद्येर्थे बाहुल्याद्दृष्टितो बहुवचनस्याश्रवणा दन्योर्थोदेवतालक्षणोनेष्यते । कथंचिद्योजनातुक्लिष्टतरा । ननुदेवयंतइत्यस्यामृच्यतःपरिज्मन्नित्यस्यामपिबहुवचनश्रवणात्कथंबाहुल्याद्दृष्टितइत्युच्यतइत्यत उक्तं देवयंतोऽतइत्यपिगीर्भिर्विनाबाहुल्याद्दृष्टितइति । गिरांतत्रबहुवचनविषयत्वं नप्रतिपाद्यस्येत्यर्थः । बाहुल्याद्दृष्टितइतिक्वचि त्पाठः । तत्रयुंजंतीत्यत्रबाहुल्यात्देवानामेवार्थत्वमन्यस्त्विंद्रलक्षणोर्थोनेष्यतइत्युक्तेशंकते एवंतर्हिदेवयंतइत्यत्रातइत्यत्रापिबा हुल्यादेवार्थत्वमेवेंद्रस्त्वर्थोनेष्यतइति । तत्रोत्तरं देवयंतइति । देवयंतोतइत्यपिबाहुल्याद्बहुवचनसामर्थ्यादन्योदेवतारूपोर्थो नेष्यते । तर्हिबहुवचनंनिरर्थकंस्यात् तत्राह ॥ गीर्भिर्विनेति ॥ कुतएतदित्यतआह ॥ दृष्टितइति ॥ स्फुटंतथाप्रतीयमान

त्वात् । विषयांतराप्रतीतौसत्यांप्राग्बहुवचनंहेतुत्वेनोक्तमितिभावः ॥९॥ इतोवा ॥ इतोदिवः ॥ वयमितोदिवोऽर्वाक्तनात् द्युलोकाद्वा । पार्थिवात्पृथिवीसंबंधिनःपातालाद्वा । महो महतो महतां रजसो रंजकाद्विष्णोर्लोकाद्वा । एतेषुलोकेषुस्थितमि तियावत् । सातिं षणसंभक्तावित्यस्येदंरूपं । लाभस्वरूपिणं भगवानेवहिभक्तानांलाभः । तमिंद्र मधीमहे स्मरामः । इक्स्मरणे स्तुमोवा इङ्अध्ययने । याचामहेवा । याच्ञाकर्मसुपाठात् ॥१०॥१२॥६॥ इंद्रमित् ॥ दशर्चमैंद्रंसूक्तं ॥ तमेव ॥ बृहत् बृहंतं इंद्र मित् इंद्रमेव गाथिनः गाथाःगानानि तद्वंतः सामवेदिनउद्गातारः साम्नानूषत अस्तुवन् । सदास्तुवंति । अर्किणः । अर्का ऋचःतद्वंतोबह्वृचाहोतारश्चार्केभिःऋग्भिरिंद्रमनूषत । अन्याश्चयजुराद्यावाणीःवाण्यः । सुपांसुलुक्पूर्वसवर्णेतिपूर्वसवर्णः । इंद्र मनूषत । अत्रकरणेकर्तृत्वोपचारइतिभावेनान्यवाणीभिरपीतिमुख्यार्थोदर्शितः । अध्वर्युप्रभृतयइतिशेषः । उभयत्रकरणस्यदर्शना त्साम्नेत्यध्याहृतं ॥१॥ इंद्रइत् ॥ हर्योः ॥ सइंद्रइत् इंद्रएव वचोयुजा वचोयुजोः । सुपामित्यनेनैवादेशः । वाङ्मात्रेणैवयोगि नोर्हर्यो रश्वयो रथे सचा सुखेनैव आसमंतात्संमिश्लः संमिश्रो विमिश्रितः सारथेरतिप्रयत्नमंतरेणरथयोगवद्भ्यामश्वाभ्यांयुक्तं रथमारूढइतियावत् । अथवेंद्रःपरमेश्वरोभक्तशरीरे वचोयुजा वेदवाक्यानुवर्तिनोर्हर्योर्मनोबुद्ध्योःसंमिश्लः तद्युक्तंशरीरंविशे षतोध्यतिष्ठत् । किंचसइंद्रोवज्रीप्रसिद्धेस्फुटं । विष्णौव्याख्याति ॥ ज्ञानानंदइति ॥ तदुपपादयति ॥ धांतुतइति ॥ वज गतौ रमुक्रीडायामितिधातुभ्यांभावेडप्रत्ययः । तद्वान्वज्रीत्यर्थः । विशेषादेवेनिप्रत्ययइतिज्ञापयितुंज्ञानानंदइत्येवव्याख्यातं । अर्शआदिभ्योऽज्वा । हितश्चेत्यत्रवर्णलोपादिकमूह्यं ॥ २ ॥ इंद्रोदीर्घाय ॥ दीर्घकालं ॥ सइंद्रो दीर्घायचक्षसे जनानामह



र्लक्षणंदीर्घकालंपदार्थदर्शनाय सूर्यं दिवि गगने आरोहयत् आरोपितवान् । किंच । आद्रियतइत्यद्रिः । अद्रिं आदरयोग्यं प्राणात्मानं गोभि र्ज्ञानैः व्यैरयत् ज्ञानयुक्तंप्रावर्तयत् । प्रसिद्धेंद्रस्तुगोभिर्वज्रैरद्रिंपर्वतंवज्रेणपर्वतान्व्यैरयत् हतवान् । यद्वो दकैर्वृष्ट्यापर्वतंहतवान् । अथवोदकैर्निमित्तैरुदकार्थमितियावत् । (अद्रिं) मेघंव्यैरयत् नियमितवान् ॥ ३ ॥ इंद्रवाजेषु ॥ बहुभिः ॥ हेइंद्रदुष्टानामुग्रस्त्वं वाजेषु युद्धेषु अस्मासुसहस्रप्रधनेषुसत्सु सहस्रेणप्रधनंयेषांतेतथोक्ताः । तेषुबहुभिरपियुध्यमा नेषुसत्स्वितियावत् । नोऽस्मानुग्राभिरूतिभिः । दुष्टानामुग्रैःस्वयंतुसद्भिरनुग्रैरेवाभिप्रायैरव सदारक्ष ॥ ४ ॥ इंद्रंवयं ॥ महत् ॥ वृत्रेषु तमस्स्वज्ञानेषु युजं विरोधितयाघटमानं तमसांप्रतियोगिनं । प्रसिद्धेंद्रविषयेबहुवचनमाद्यर्थे । वज्रिणं वृजीव र्जनइत्यस्येदंरूपं । भीतिवशेनारिभिर्वर्ज्यतंइंद्रं महाधने महाधनार्थं मोक्षार्थं अर्भे अल्पेचधने अल्पधनार्थं सांसारिकपुरुषार्था र्थं महदल्पधनार्थिनोवयं हवामहे । आह्वयामः ॥५॥१३॥ सनः ॥ अस्मदीयं ॥ हेवृषन् वर्षितः श्रेष्ठवा सत्रादावन् सत्राशब्दः सर्वपर्यायः सहार्थोवा । तदुपपदाद्ददातेर्वनिप् । हेसर्वदातः । सहार्थत्वेऽर्थतःसर्वेष्टदातृत्वमेवलभ्यते । त्वं नो स्मदीय ममुं तं परोक्षंमोक्षगंचरुं । चरतिर्भक्षणार्थः । ततःकर्मण्युकारः । भोज्यमनुभवनीयमानंदमस्मभ्यं अस्मदर्थमपावृधि अविद्यावृतमपा वृणु । यतस्त्वमेवाप्रतिष्कुतः । ष्कुञ्आप्रवणे । आप्रवणमागमनं । प्रतिष्कुतःप्रत्यागतः । नैवंत्वमित्यप्रतिष्कुतः । वैरिभिर्युद्धे ष्वप्रत्यागतः । अप्रतिद्वंद्वः अप्रतिद्वंद्वेतिलुप्तविभक्तिकोनिर्देशः । प्रसिद्धेंद्रंप्रतितु चरुंहविरपावृधिस्वीकारेणसफलीकुरु । यद्वा चरुंमेघं । वज्रःचरुःवराहइतिमेघनामसुपाठात् । नोस्मदर्थमेवजातमस्मभ्यमपावृधि उद्घाटयेतियोज्यं ॥ ६ ॥ तुंजे ॥

त्वयैव ॥ तुंजतिर्गतिकर्मा दानकर्मावा । ततश्चत्वयाक्रियमाणेतुंजेतुंजे गमनेदानेवा क्रियायाइतिशेषः । प्रेरणइतितुतात्पर्यं ।
यद्वा अनेकार्थत्वाद्धातूनांतुंजतिःप्रेरणेवर्तते । तुंजेतुंजे तत्रतत्रस्तोतृषुत्वयैवप्रेरणेजातेसति येप्रवृत्ता उत्तरे उत्तरा उत्तमाः स्तोमाः ।
स्तुतिविशेषास्तेप्यस्यें द्रस्यतव सुष्टुतिं सुष्टुतित्वं नविंधे वर्णव्यत्यासादिनानविंदंते नाप्नुयुः आनंत्यात् । गुणैरनंतत्वेनसर्ववर्ण
कत्वाभावादितिभावः ॥ ७ ॥ वृषा ॥ प्रतिवीरः ॥ एकस्यवृषस्ययःप्रतिवीरोवृषासवंसउच्यते । तंवंसंप्रतियोविभीःयुद्धायगच्छति
सवृषावंसगः । सयूथेव यूथानीव यथागवांयूथान्याकर्षतिएवमीशानः प्रभुरप्रतिष्कुतः अप्रतिद्वंद्वइंद्रः कृष्टीः प्रजाः ओजसा
सामर्थ्येनेयर्ति गतिकर्मायं । अंतर्णीतण्यर्थः । गमयति प्रेरयतीतियावत् । नन्वीश्वरस्याल्पोवृषादृष्टांतःकथमुच्यतइत्याह ॥ अ
ल्पस्यापीति ॥ दृष्टांतोहिप्रत्यायनार्थवक्तव्यः । तच्चप्रसिद्धेनैवभवतीतिभावः ॥८॥ यएकः ॥ राजा ॥ यइंद्रएकएव चर्षणीनां
प्रजानां वसूनां वित्तानांच पंचक्षितीनां देवादिभेदेनपंचविधानांप्रजानामपीरज्यति ऐश्वर्यकर्मायं राजाभवति । सकृष्टीरियर्ति इति
पूर्वेणसंबंधः । चर्षणीनामित्यादिषष्ठीद्वितीयार्थे । चर्षणीनांपंचक्षितीनांचेतिपुनरुक्तिरित्यतआह ॥ सामान्यादिति ॥ चर्ष
णीनामितिसामान्यादुक्तं पंचक्षितीनामितिचविशेषतः । अतोनोक्तदोषः ॥ ९ ॥ इंद्रंवः ॥ सम्यक् ॥ जनेभ्योवइतिवचना
जनान्प्रतीदंवचनमितिविज्ञायते । अतउक्तंहेजनाःविश्वतः सर्वत्रास्थितंसर्वगतमिंद्रं जनेभ्योवो युष्माकमर्थाय परि सम्यक् हवा
महे आह्वयामः । सर्वगतस्यकथमाह्वानमित्यतोभिप्रायमाह ॥ व्यक्तरूपतएकत्रस्थातुमिति ॥ आहूतश्चासौकेवलइंद्रो
नः सर्वेषामस्तु इष्टदइतिशेषः ॥ १० ॥ १४ ॥ ७ ॥ २ ॥ ऐंद्र ॥ दशर्चमेतदैंद्रंसूक्तं ॥ जयिना ॥ हे इंद्र सानसिं सानो



लाभः मतुबर्थेसिः लाभयुक्तं । सजित्वानं जित्वनाजयिनापुत्रादिनासहितं सदासहं सदाबलं सदाबलवत् । वर्षिष्ठं वृद्धतमं ।
सुमहद्ऊतये रक्षायै रक्षानिमित्तं रयिं वित्तं अस्मभ्यंनित्यदाभर आहर । देहीतियावत् ॥१॥ नियेन ॥ येनारीन् ॥ येनवित्ते
ननिमित्तेनत्वोतासः । छंदसियुष्मदस्मदोःप्रत्ययोत्तरपदयोराकारादेशः । अवतिःप्रेरणार्थः । त्वत्प्रेरितावयं मुष्टिहत्ययामुष्टिघातेन
मुष्टियुद्धेनाऽरीन्निरुणधामहै निरुंधाम । धात्वंतरस्यैतद्रूपं । किंच येनवृत्रा वृत्राणि तमांसि निरुणधामहै ज्ञानयुद्धइतिशेषः ।
अत्रयेनेतिज्ञानवित्तमुच्यते । येनचार्वता तुरगेण तुरगादिभिः कांश्चिदरीन्निरुणधामहै तादृग्वित्तमाभरेतिपूर्वेणसंबंधः । ननुयेन
वृत्राण्यरींश्चमुष्टिहत्ययाऽर्वताचनिरुणधामहै इत्येकमेववाक्यं कस्मान्नक्रियतेतत्राह ॥ आवृत्त्यैवेति ॥ अत्रनीत्युपसर्गस्यत्रिरा
वृत्त्यारुणधामहाइतिक्रियायाधातोरप्यावृत्तिरंगीकर्तव्यैव । उपसर्गाःक्रियायोगइतिक्रियायोगएवोपसर्गत्वस्मरणात् । वाक्यभेदे
नसम्यगन्वयसिद्धावभ्यासकल्पनानुपपत्तेः । प्रप्रवस्त्रिष्टुभमित्यादौवाक्यस्यभेत्तुमशक्यत्वात्तत्कल्पनं । आपंचभ्यःप्रयोक्तव्याउप
सर्गामनीषिभिरित्यपिविजातीयापेक्षं ॥ २ ॥ इंद्रत्वोतासः ॥ त्वत्प्रेरिताः ॥ हे इंद्र त्वोतासः त्वत्प्रेरितावयं वज्रं ज्ञानं रतिंच
ज्ञानविषयांज्ञाननिमित्तांरतिंवा घना तृतीयैकवचनांतमेतद्भावप्रधानं । दृढत्वेनाददीमहित्वत्प्रेरणयैवज्ञानरतिमंतोभवामः । त्व
त्प्रेरिताएवयुधिस्पृधः स्पर्धिनोयुद्धानिवासंजयेम ॥ ३ ॥ वयंशूरेभिः ॥ त्वया ॥ हेइंद्र त्वयायुजा युनक्तीतियुक् । सख्या
सता त्वत्प्रसादेनैव शूरेभिः शूरै रस्तृभि रस्त्रिभिः सुयोद्धृभृत्यैःसहपृतन्यतो युद्ध्यतःशत्रून् सासह्याम अतिशयेनपुनःपु
नर्वासहामहै । अभिष्यामाभिमुखाःस्याम । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । किंच । वयंचत्वयैच त्वदधीनसत्ताकाइत्यर्थः ॥४॥

महाँइंद्रः ॥ यस्मात् ॥ नु यस्मादसाविंद्रोविष्णुर्महान् गुणैरनंतः परश्चानादिः । कालतोप्यनंतः । प्रथिना प्रथिम्ना द्यौर्न आकाशवत् । देशतोप्यनंतश्च । तथाशवः सुखबले । उभयनामसुपाठात् । नित्याभिव्यक्तसुखबलात्मकश्च । शशब्दःसुखवाची वशब्दोबलवाचीतिवा । जीवस्त्ववरो गुणादिनेतिशेषः। तत्तस्मान्महित्वं महत्वं ब्रह्मत्वं वज्रिणे तस्यविष्णोरेवास्तु। तस्यैवजानीयात् । नपुनर्जीवस्यब्रह्मतांस्मरेदितितात्पर्यार्थः ॥ ५ ॥ १५ ॥ समोहे ॥ अन्य ॥ येसमोहे संवहने अन्यसंवहनेन वा अपि । अन्यैःप्रेरिताअपीतियावत् । तोकस्यापत्यस्य । ज्ञानमेवहिजीवतोपत्यं । सनितौ लाभेसति ज्ञानलाभेन तमिंद्रंजनार्दनमाशतआश्रुवत प्राप्ताः । शरणमितिशेषः । तएवतुनरः पुरुषाः अपरेपशवइतिशेषः । किंच । येधियायवः धियायुक्ताः । युमिश्रणे । अन्येभ्योपिदृश्यंतइतिविच् । दृशिग्रहणाद्गुणाभावः तृतीयायाअलुक् । भगवज्ज्ञानिनः । तेवा तएव विप्रासो विप्राः मूर्खाःशूद्रसमामताइतिशेषः ॥ ६ ॥ यःकुक्षिः ॥ तस्येंद्रस्यदेवस्य यः सोमपातमो तिशयेनसोमपाःकुक्षिः ससमुद्रइव रत्नाकरइव तत्रसोमंसमर्पितवतेभक्तायाखिलान्कामान्पिन्वते पिविमिहिसेचने । क्षरति सततंददाति । किंच । तस्यकाकुदो जिह्वाश्च ककुदितिताल्वुनाम तत्रभवाजिह्वाकाकुत् । अकारलोपात् । उर्वीः उर्व्यः आपोन आपइव महापइव भक्तानांतर्पकाः कथंबहुवचनं बह्व्यः तदेवकथं बहुमुखेषुयाः ॥ ७ ॥ एवाह्यस्य ॥ एवमेव ॥ यस्त्वंविरप्शीविशिष्टबलवांस्तस्य विरप्शिनो बलिष्ठस्यास्यतेतवसंबंधिनीगोमती वाग्युता वेदेता वेदैःस्तुत्या मही महती यासूनृता साध्वीवाणी साप्येवाहि एव मेवहि कुक्ष्यादिवदेव दाशुषे यजते। पक्कफलवतीकल्पतरुशाखेव वरदात्रीभवतीतिशेषः। यद्वाविरप्शिनोबलिष्ठस्यास्यतेतवसंबंधिनीहि

यस्मात्तस्माद्विरप्शीतिप्रत्ययांतभावेनसूनृतायाविशेषणमुक्तं । यद्यपिविरप्सीतिमहन्नामसुपठितं । तथापिमहीत्यनेनगतार्थत्वादन्यथाव्याख्यातं ॥ ८ ॥ एवाहिते ॥ संति ॥ हेइंद्र तेदाशुषे त्वांयजते मावते ज्ञानिने दातुं ते तव विभूतयः ऐश्वर्याण्यूतयो रक्षाश्च सद्यश्चित्सद्योपि नित्यमितियावत् । संत्येवहि ॥ ९ ॥ एवाह्यस्य ॥ स्तोमाः ॥ अस्य परमेश्वरस्य काम्या काम्यानि प्रियाणि । उक्थ्यमुक्थानि । सोमपीतये सोमपानार्थं । तस्मै इंद्राय । शंस्या शंस्यान्येवहि । स्तोमःस्तोमाश्च इंद्रायसोमपीतये गेयाइतिशेषः । सोमपीतयइत्युपपादयति ॥ नान्यथेति ॥ स्तुत्याप्रसन्नएवहि पिबति । नत्वभिलाषेणेति ॥१०॥ ॥ १६ ॥ ८ ॥ इंद्रेहि ॥ एतदपिदशर्चमैंद्रंसूक्तं । सोमपर्वशब्दार्थमाह ॥ सोमपाइति ॥ सोमशब्दोपपदात्पिबतेर्वन्प्रत्यये कृतेसोमपाः सोमपर्वाणइत्युच्यंतइत्यर्थः । यद्वासोमस्ययानिपर्वाणि अवदानानि तानियेषांते सोमपर्वाणः । योहियस्याहारः सतस्यभवतीतिसोमपाइत्यर्थः । अभिष्टिपदंव्याख्याति ॥ सर्वमिति ॥ सर्वंजगद्यस्मात्तदिच्छयावर्ततेऽतोसावभिष्टिः अभितः सर्वविषये इष्टिरिच्छायस्येति शकंध्वादित्वाद्दीर्घाभावः । ओजसेत्यस्याभिष्टित्वोपपादकत्वंसूचयितुंस्वरूपेणग्रहणं । मत्सीति व्याख्याति ॥ मदमिति ॥ विकरणादिव्यत्यासेनेत्यर्थः । अवाप्स्यसीत्युक्त्याप्राप्तामनित्यत्वशंकांनिवारयति ॥ नित्यमिति ॥ हेइंद्रमहानोजसासामर्थ्येनाभिष्टिश्चत्वं विश्वेभि र्विश्वैः सोमपर्वभि र्देवैःसह एहि । एत्यचांधसो धसाहविरादिना स्मदत्तेन मत्सि मदंप्राप्स्यसि॥ १ ॥ एमेनं ॥ एनं ॥ हेऋत्विजः तमेनंमंदिं मदकारिणं। करणेइकारः । चक्रि आदृगमेति करणे

किः । आइत्युपसर्गस्यचक्रिमित्यनेनापिसंबंधः । सम्यक्कर्मिणंविष्णुं । मंदिने मदशीलाय । विश्वानिचक्रये विश्वानिकार्याणिकृतव ते सर्वकर्मिणे । इंद्राय विष्णवे तस्यपानार्थं । सुते इंदौ सोमे आसृजत । सन्निहितंकुरुतैव । स्वसन्निधानपवित्रितमेवसोमंदेवः पिबतीति ॥ २ ॥ मत्स्व ॥ [१०।१४] स्वानंद ॥ हेसुशिप्र स्वानंद शोभनानंद । विश्वाश्चर्षणयःप्रजायस्यासौविश्वचर्षणिः । विश्वचर्षणे विश्वजी वेशएषु त्रिषु सवनेषु सचा सह अस्मद्रक्षयेतिशेषः । अस्मद्रक्षांकुर्वन् । मंदिभिर्मदहेतुभिःस्तोमेभिरस्माभिःक्रियमाणैःस्तोमैरामत्स्व सम्यक् मदमवाप्नुहि ॥३॥ असृग्रं ॥ [१०।१४] त्वन्निःसृताः ॥ हेइंद्र अजोषा स्त्वद्दतेऽन्येनस्तुत्यरूपेणक्कचिदप्यसेव्यास्ते त्वदीयास्त्व न्निसृतागिरोवेदवाचोऽसृग्रमनारतंवृषभंश्रेष्ठंपतिंस्वपतिं त्वांप्रत्येव उत् उच्चैः सम्यक् मुख्यतयैवेतियावत् अहासत् अगमन् । ओ हाङ्गतौविसृष्टाः । त्वामेवमुख्ययावृत्त्याप्रतिपादयितुमस्माभिरुच्चारिताइतितात्पर्यं ॥४॥ संचोदय ॥ [१०।१६] अर्वाक् ॥ हेइंद्रअर्वागधस्ता त्स्थितानस्मान्प्रति चित्रं भद्रं वरेण्यं वरणीयं राधऐश्वर्यं संचोदय अस्मभ्यंदेहीतियावत् । दातुंचते तव विशिष्टंभवतीतिविभु प्रकृष्टं भवतीतिप्रभु विशेषेणप्रकृष्टमितियावत् । शुभमितिशेषः । विप्रसंभ्योड्वसंज्ञायां । असदित् । लडर्थेपंचमोलकारः । अस्त्येव । प्रभुप्रभूत मक्षयमितिप्रभुशब्दस्यार्थांतरमाह ॥ अच्युतमिति ॥ ५ ॥ १७ ॥ अस्मान् ॥ [१०।१७] रेभस्वतः ॥ हेतुविद्युम्न महाकीर्ते इंद्र रभस्वतः शब्दवतः स्तोतॄनितियावत् । रेभतीतितत्कर्मसुपाठात् । यशस्वतो यशस्विनोऽस्मान् राये सप्तम्येषा । महाराये महैश्वर्यरूपे तत्र त्वयिसुचोदय । त्वद्विषयबुद्ध्यादियुक्तान्कुरु ॥६॥ संगोमत् ॥ [१०।१७] अस्मासु ॥ हे इंद्र विश्वं संपूर्णमायुर्यस्या सौविश्वायुः नित्य(त्यः) त्वमस्मे अस्मासु गोमत् गोयुक्तं वाजवदन्नेनापिसहितं अक्षित मक्षयं पृथुबृहत् अतिबृहत् । श्रव



साश्रवणेनजायतइतिश्रवोज्ञानं संधेहि सम्यक्देहि ॥ ७ ॥ अस्मे ॥ [१०।१८] विद्यां ॥ हेइंद्र अस्मे अस्मासु बृहच्छ्रवो महतींविद्यां सहस्रसातम मतिशयेनसहस्रलाभसहितं बहुलाभयुतं द्युम्नं कीर्तिंच ताः प्रसिद्धाः रथिनीरिषः रथोदेहस्तद्वतीः । सदेहान्न मितियावत् । अविकलेनदेहेनयुक्तमन्नंचधेहि देहि । ननुसंचोदयचित्रमित्यादिनोक्तमेवोच्यतइत्यतःपुनरुक्तिदोषस्तत्राह ॥ [१०।१८] प्रार्थनइति ॥ पौनरुक्त्यंन दोषोयतइतिशेषः । ततश्चोदयेत्युक्त्वापुनःसंधेहीत्यादिवचनंयुज्यतइतियोज्यं ॥८॥ [१०।१९] वसोः ॥ वसुपतिं वसुशब्दोदेवपर्यायः जातावेकवचनं वसूनांयेवसवस्तेषांपतिं देवदेवेश्वरं ऋग्मियं ऋज्ञेयं ऋग्भिर्ज्ञेयं इंद्रं प्रभुं भक्तान्प्रतिगंतारं गीर्भिर्गृणंतः स्तुवंतोवय मूतयेऽभीष्टसिद्धयेऽत्रहोम आह्वयामः ॥ ९ ॥ सुते ॥ अरिशब्दंव्याख्याति ॥ [१०।२०] अविनाशीति ॥ यद्यप्यरिशब्दईश्वरनामसुपठितस्तथाप्यत्रानन्वयादन्यथाव्याख्यातः । नरिष्यतिनरीयतेवेत्यरिः । योऽरि रविनाशी आत्मनोऽविनाशेच्छुरदुष्टोवापुरुषः स बृहच्छ्रूषं महासुखं प्रति तच्चोद्दिश्य सुतेसुते प्रतिसोमसवनं ओ कसे गृहाय सदितियोग्यतयासंबंधः । सतामाश्रयायबृहतेपूर्णायेंद्रायदेवाय न्यर्चति । द्वितीयार्थेचतुर्थी । इष्टानि ष्टप्राप्तिपरिहारकामः परमेश्वरमेवार्चेदिति ॥ १० ॥ १८ ॥ ९ ॥ [१०।२१] गायंति ॥ द्वादशर्चमेतदैंद्रंसूक्तं । हेशतक्रतो बहुज्ञान अर्कं अरंकं अतिकं अतिशयेनसुखरूपंत्वां गायत्रिणः गायत्रंसामविशेषः । तद्वंतःसामगागायंति । अ र्किणः अर्काऋचस्तद्वंतः ऋग्वेदिनस्त्वामर्चंति । ऋचस्तुतौ । ऋग्भिःशंसंति । किंच । ब्रह्माणो विरिंचा उद्वंशमिव

उच्चंवंशमिव शक्रकेतुमिवोच्छ्रितमितियावत् । त्वां येमिरे व्यजानन् । यद्यपियमिर्नज्ञानेपठ्यते तथाप्युद्येमिरे उदय च्छन् उच्छ्रयंतीतिव्याख्यानस्यपूर्वोक्तन्यायेनदुष्टत्वाज्ज्ञानार्थोव्याख्यातः । यद्वा उद्येमिरे उच्छ्रितमकुर्वन् करणंतु नसंभवतीत्युच्छ्रितंव्यजानन्निति ॥ १ ॥ **यत्सानोः** ॥ **उच्चतः** ॥ अस्पष्टोगूढशक्तिमांस्तत्संबुद्धिःहेअस्पष्ट यद्यस्मा त्तव कर्त्वं कर्तृत्वं करणेसामर्थ्यं । सानोःसानु मारुहत् । सानुशब्दोगिरिशिखरवाची । उपचारेणोच्चतोप्युच्चमभवत् । भूरि ततोप्यधिकंचाभवत् । तत्तेनकारणेन वृष्णिः वर्षिताइंद्रो भवान् अर्थं सर्वपदार्थांश्चेतति जानाति । अतएवचयूथेन मुक्ता मुक्तसमूहेन एजति । एजृर्दीप्त्यर्थः । शोभते नहिपूर्णशक्तित्वमंतरेणसार्वज्ञंसर्वसेव्यत्वंचयुज्यते । ऋचंप्रकारांतरेणव्याचष्टे ॥ **उच्चादिति** ॥ यद्यस्मात्कारणादिंद्रस्यपरमेश्वरस्यकर्त्वंकर्तृत्वंसानोःसानुमारुहत् उच्चादुच्चंविरिंचादि देवताजातं गतं प्राप्तं । परमेश्वरोहितेषुस्थित्वाकरोति । तेनैवकारणेन । तत्कर्तृत्वं भूर्यस्पष्ट अतिशयेनस्पष्टमभूत् । स्पशअज्ञातदृशावितिवक्ष्यति । नह्यन्यांतर्गततयाविनासाक्षादीश्वरगतंकर्तृत्वंमंदैर्ज्ञायते । ततश्चसर्वकर्मकर्तृत्वादेवसइंद्रोऽर्थमशेषार्थांश्चेतति । यूथेनस्व रूपाणांमहायूथेनैजति कंपते चेष्टते । यद्यपिकृत्यार्थेत्वन्विहितस्तथापिकृत्यल्युटोबहुलमितितृजर्थेभवति । सचभावप्रधान इतिकर्त्वंकर्तृत्वं । यद्वातृचोलोपोत्रद्रष्टव्यः । अथवाकर्तव्यमेवकर्त्वं लक्षणयाकर्तृत्वमित्युक्तं ॥ २ ॥ **युक्ष्वाहि** ॥ **कक्ष्या** ॥ हेसोमपाइंद्र केशिना केशिनौ प्र प्रलंबकेशवंतौ वृषणौ सेचकौ युवानौ कक्ष्यप्रा कक्ष्यप्रौ । कक्ष्येतिययारज्ज्वाऽश्वउरसिब ध्यतेसोच्यते । प्रापूरणे पुष्ट्याकारणेनकक्ष्याभिपूरकौ । हरी अश्वौ युक्ष्व युंक्ष्व रथेयोजय । अथ तदनंतरमिहोपगम्य नो

गिरा मुपश्रुति मुपश्रवणंचकुरु । स्तुतिरूपानोगिरःशृणु ॥ ३ ॥ **एहि** ॥ **अभिस्वर** ॥ हेइंद्र एहि स्तोमान् स्तुतिमभिस्व रच स्वीकारानुसारिणंस्वरंकुरु । अभिगृणीहि प्रशंसांकुरु । अस्मदीयामितिशेषः । हेस्तोतारःसाधुकृतमिति । आरुव पुन र्हर्षान्महत्तरंशब्दंचकुरु । सर्वत्रवसति सर्वस्यांतस्थोबहिष्ठश्चवर्ततेइतिवसुः । हेवसो नोऽस्मदीयं ब्रह्म वेदं स्तुतिंच यज्ञंच सचा सहैव सुखेनैववा वर्धय प्रवर्तय ॥ ४ ॥ **उक्थं** ॥ **नित्यवृद्धत्वतः** ॥ इंद्राय परमेश्वराय तस्यैववर्धनं । उक्थं शंस्यं शंसनीयं । अत्रोक्थस्यैंद्रवर्धनत्वंप्रतीयते तत्कीदृशमित्यतआह ॥ **नित्येति** ॥ ततश्चवर्धनंप्रकाशकं । पुरुनिष्षिधइतींद्र विशेषणं । तद्व्याचष्टे ॥ **बहिति** ॥ निषेधतीतिनिष्षित् । पुरुशब्दस्यबहिति व्याख्यानं । शत्रूनितितस्यविशेष्यं । उपपदंद्वि तीयांतमितिदर्शयितुंशत्रूनित्युक्तं । अथवाविभक्तिव्यत्ययेनशत्रूणामित्यर्थः । तात्पर्यार्थमाह ॥ **दनुजघातकइति** ॥ सश क्रो यथासोमेषुसुतेषुसत्सु रारणत् शब्दंकरोति । ऋत्विक्षुस्थितःस्तुतीःप्रवर्तयति एवंनःसख्येषु अस्मत्सख्यायच रारणत् अस्मासुसंस्थितःशब्दंचकारसखाहमस्मीति । रारणदितिरणतेर्यङ्लुगंताल्लेट् । सचलडाद्यर्थे ॥ ५ ॥ **तमित्** ॥ **तमेव** ॥ वयंसखित्वे सखित्वार्थं तमित् तमेवेंद्रं नित्यंशरणमीमहे । राये वित्तार्थंच तमीमहे । सुवीर्ये साधुवीर्यार्थंच तमीमहे । स र्वस्यसंग्रहणोक्तिःसखित्वाद्यर्थमिति । शरणप्राप्तश्चसयस्माच्छक्रः शक्त्यानंदस्वरूपत्वाच्छक्रशब्दार्थः । शक्लृशक्तौ रमुक्रीडा यां द्वाभ्यांडः । उत तस्माच्छकत् सर्वत्रतत्तत्प्रार्थितसंपादनेऽशकत् शक्तोभवत्येव । किंच । सइंद्रो नो स्मभ्यं वसु वित्तं

दयमानः । दयदानगतिरक्षणेषु । ददद्देव सदाप्रवर्ततइतिशेषः । अतश्चतमीमहे ॥ ६ ॥ १९ ॥ सुविवृतं ॥ विस्पष्टं ॥ हेइंद्र त्वादातमित् त्वद्दत्तमेव । सर्वेविधयश्छंदसिविकल्प्यंतइतिदोदद्घोरित्येषविधिर्नभवति । यद्वादापोदैपोवैतद्रूपं । अने कार्थत्वाद्धातूनांदत्तमित्युक्तं । यशः सुविवृतं विस्पष्टं सु सुष्ठु निरजं अजगतिक्षेपणयोः अकाल्यं अक्षेप्यं निरोनिषेधार्थ त्वात् अनपहार्यंच हि यस्मादेवंशुभंत्वदीयंदानंतस्मात्त्वं गवांव्रजं ज्ञानसमूहं स्वरूपभूतमपवृधि विवृणु । विवरणप्रार्थनं चावृतस्यैवसंभवतीतिगूढमित्युक्तं । नो स्माकं राधः ऋद्धिंच कृणुष्व कुरु । अद्रिवइति संबुद्ध्यंतं भगवतिव्याख्याति ॥ अ द्रिरिति ॥ आङ्पूर्वाद्दरतेः कर्मणिकिः । आङश्चह्रस्वत्वं । अद्रिशब्देकर्मण्युपपदेंतर्णीतण्यर्थाद्धृतेरसुन्‌डिच्च । भाष्येतुक्क चिदद्रिवेतिपाठः । तत्रछांदसस्सकारलोपः । इंद्रेव्याख्याति ॥ शक्रइति ॥ छेदनाद्धारणादपीत्यर्थद्वयं । अद्रिशब्दोपप दाद्धृश्चतेरंतर्णीतण्यर्थाद्व्रजोवाऽसुन् डिच्चेति ॥ ७ ॥ नहित्वा ॥ नत्वा ॥ हेइंद्र ऋघायमाणं कंड्वादिः वर्धमानं सर्वगतं त्वा त्वां रोदसी द्यावापृथिव्यौ तदभिमानिन्यौश्रीभूमीअपि उभेसहितेवा नहीन्वतो नैवसंप्राप्नुतोहि । व्याप्तिकर्मसुपा ठात् । तयोरपिसर्वगतत्वात्कथमेतदित्यतआह ॥ अप्रसादतइति ॥ त्वत्प्रसादेनविना । किंच । त्वंस्वर्वतीः सुखवतीः अ पः प्रजाः स्वर्गिणोमुक्ताश्च जेषः अजयः । लङर्थेलेट् । कथं । त्वद्वशत्वतस्तासां । एवंविधश्चत्वंस्वयमस्मभ्यं गाः ज्ञानानि संधूनुहि कंपय । गमय । अस्मान्प्रतिप्रापय । चशब्दात्प्रसिद्धागाश्च । समित्येतद्गवांविशेषणतयाचव्याख्याति ॥ उंचांअपी ति ॥ गाइत्येतदपेक्षयास्त्रीलिंगत्वं । यथायोगंभगवतींद्रेचव्याख्यानं ॥८॥ आश्रुत् ॥ बहुं ॥ हेआश्रुत्कर्ण आसमंताच्छृणुत



इत्याश्रुतौकर्णौयस्य बहुश्रवणकर्णेतियावत् । हवमस्मदाह्वानं । श्रुधिशृणु । आश्रुत्कर्णश्चेत्स्वयमेवश्रोष्यति किंप्रार्थनेनेत्यतउक्त मादरादिति । नुचित् अद्यैव मे मयि गिरो वेदरूपाः दधिष्व धेहि वेदविदंमांकुरु । हेइंद्रइमंममस्तोमं मत्कृतंस्तुतिविशेषं यु जश्चिद्योगादपि समाधिलक्षणादंतरं सन्निकृष्टं प्रियमितियावत् । कृष्व कुरु चशब्दामिथःसमुच्चयार्थाः ॥ ९ ॥ विद्माहि ॥ विद्मत्वा ॥ हि यस्मात् वृषंतमं वृषःशक्तिमान् अतिशयेनवृषोवृषंतमः । छांदसोनकारागमः । नकारां ताद्वातमप् । तत्रनलोपाभावश्छांदसः । तंवृषंतमं शक्तिमत्तमं । वाजेषु युद्धेषु हवनश्रुतं भक्ताह्वानस्यश्रोतारंच त्वा त्वां विद्म विद्मः । तस्माद्वृषंतमस्य शक्तिमत्तमस्य तव सहस्रसातमामूर्तिं सहस्रंसनोतीतिसहस्रसाः । अतिशयेनसहस्रसाःसहस्र सातमा । तां बहुलाभोत्तममवन मतिलाभयुक्तांरक्षां हूमहे आह्वयामः । प्रार्थयामइतियावत् । श्रोतारमितितृन् । तेनद्वि तीयोपपत्तिः । ऋक्शतसमाप्त्यर्थइतिशब्दः । नन्वितउत्तरेअपिऋचौमधुच्छंदसादृष्टे । ऋष्यंतरेप्रमाणाभावात् । तत्कथं तस्यशतर्चित्वमित्यतआह ॥ स्थानांतरेति ॥ येनकारणेनातूनइत्यादिकेऋचौस्थानांतरगते आनुपूर्व्यंतरस्थे तेनकारणेनम धुच्छंदसःशतर्चितानैवविरुद्धा । एकानुपूर्वीनिमित्तत्वात्तस्याः।देशकालावस्थांतरदृष्टत्वाच्चनविरुद्धेइत्याह॥ दृष्टेति॥ याभ्यां तेस्थानांतरगतेइतिसंबधः ॥ १० ॥ आतूनः ॥ मात्रा ॥ अदित्या जन्मनि जन्मसमये । स इंद्रः गाधित्वाद्वाकौशिकः ॥ कुशिकापत्यत्वात्गाधिनः हरिस्तथा कौशिकः । हिरण्यग्रहणंब्रह्मांडद्योतनार्थं कुशशब्दात्गृहीतार्थेकोशशब्दाद्भवार्थेवाठक् । मंदो मदः आधिक्येऽधिकं नित्यसुखं । तस्यसानोलाभोयस्यासौमंदसानोनित्यसुखी । यद्वा सानःसंभजनं । संशब्देननित्य

त्वंलभ्यते। हेइंद्र कौशिक मंदसानस्त्वं नो स्माकं सुतं सोमं तु क्षिप्रमापिब। नव्यं णुस्तुतौ। स्तुत्यमायुश्चनःप्रसूतिर। अतिप्रकर्षेणदेहि। मां सहस्रसां सहस्रलाभयुक्त मृषिंज्ञानिनंच कृधि कुरु ॥ ११ ॥ परित्वा ॥ त्वांइमाः ॥ हेगिर्वणः इमा मदीया गिरः स्तुतिरूपावाचो विश्वतः सर्वदा वृद्धः पूर्णआयोलाभोयस्यासौवृद्धायु स्तंसर्वलाभिनं त्वात्वांपरि परितो भवंतु। अतिशयेनत्वद्विषयाभवंतु। किंच। वृद्धयो वृद्धिरूपास्त्वद्वृद्धिप्रकाशिन्यो जुष्टाः सेव्याः नोगिरो जुष्टयोनुभवंतु त्वत्सेवानुरूपाश्चसंतु ॥ १२ ॥ २० ॥ १० ॥ अष्टावृचइत्यस्यापिपूर्ववच्छंकापरिहारौ। अन्यत्रगा आनुपूर्व्यंतरगाः। अनेनेंद्रमष्टौजेतामाधुच्छंदसइतिजेतानाममधुच्छंदसःपुत्रोष्टाविंद्रंविश्वाइत्याद्याऋचोऽपश्यदित्येतदपिनिरस्तंभवति ॥ उपपत्तिंतूत्तरत्रवक्ष्यति ॥ इंद्रंविश्वा ॥ सम्यक् ॥ सम्यगुद्रिक्तानांगुणानांव्यक्तिर्यस्यसतथाभिधः। समुद्रव्यचाः समुत्पूर्वाद्रिचेर्डः। गुणानांयोग्यतयासंबंधः। व्यचःशब्दोव्याप्तिवद्व्यक्तेरपिवाचकः। समुद्रव्यचसं रथिनांरथितमं वाजानामन्नानांपतिं सत्पतिं सतांपतिं इंद्रं विश्वागिरः सर्वावेदवाचोऽवीवृधन्। प्रकाशितवत्यः ॥ १ ॥ सख्येते ॥ हेशवसस्पते सुखस्यबलस्यवापते इंद्र तेसख्येसति त्वदनुग्रहेसति वाजिनोयुद्धवंतोवयंमाभेम माभैष्म तदर्थंचपरेषांजेतारंस्वयमपराजितंत्वामभिप्रणोनुमः प्रकर्षेणपुनःपुनःस्तुमः ॥ २ ॥ पूर्वीरिंद्रस्य ॥ प्रथमानि ॥ इंद्रस्यतेतवरातयऊतयश्चपूर्वीः पूर्वाः। दानान्यवनानिचप्रथमानि। कथं। महत्त्वेनकारणेन। किंच। नविदस्यंति नविदस्यंते। दसिर्विभेदनार्थः। नभिद्यंते क्षयार्थोवा ननश्यंति। सइंद्रईशो यदिगोमतोवाजस्य गोमदन्नं मघंयशश्चेत्यादिकं स्तोतृभ्यो मंहते मंहतिर्दानार्थः। ददाति तर्हिंता



निदानानिप्रथमानीत्यादिसंबंधः ॥ ३ ॥ पुरांभिंदुः ॥ शरीरपुराणांशंबरस्यपुराणांचभेत्तायुवाकविःसर्वज्ञोऽमितमोजोयस्यासावमितौजाः विश्वस्यकर्मणोधर्ता सर्वकर्मणांप्रेरको वज्री पुरुभिःस्तुतःपुरुष्टुतइंद्रोऽजायत जज्ञे अभिव्यक्तोभवत् ॥४॥ त्वंवलस्य ॥ ऋचंपरमेश्वरेयोजयितुंवलशब्दार्थंतावदाह ॥ वलंइति ॥ वलतिः परिवर्तनार्थः। अतोवलस्तिर्यग्गतिः धियइतिशेषः। धियो मनसोयदर्थवैपरीत्येनविषयीकरणंसवलइत्यर्थः। धियोज्ञानस्यवा। विपरीतज्ञानमितियावत्। इदानीमृचंव्याचष्टे ॥ वाचामिति ॥ हे अद्रिवस्त्वंगोमतः गोसंबंधिनो वलस्यमिथ्याज्ञानस्य वेदवाचामन्यार्थबुद्धेरितियावत्। यद्बिलं मूलं कारणं तमोऽज्ञानं तदपावः अपावृतवानसि। छांदसोविकरणलोपः। उत्सारितवानसि। कथं। प्रदर्श्य विनिवार्यच। तत्वप्रदर्शनेननिराकृत्येत्यर्थः। ततश्चाज्ञानमिथ्याज्ञानयोर्नष्टयोर्देवाः सत्त्वप्रकृतयःपुरुषा अबिभ्युषः। प्रथमार्थेद्वितीया। अबिभीवांसः संसारभयापेतास्तुज्यमानास्त्वयैवप्रेर्यमाणश्चत्वामाविषुः। दैत्यैर्दुष्टगिराछाद्यमानं सद्गिराअरक्षन्निवहि। प्रकाशितवंतइतियावत्। एतामृचमिंद्रपरतयाव्याकुर्वन्नितिहासगर्भत्वात्तमाह ॥ इंद्रस्येति ॥ इंद्रस्यगावः गोसवो यज्ञविशेषः। जगतिचर्तुं चरितुंसमुत्सृष्टाः। इंद्रस्यापीतिसंबंधः। सरमा देवशुनी तस्याःस्वसृत्वमुक्त्वैव स्वसृत्वादिमृषोक्त्या तांप्रलोभ्यहृताः। तदर्थं तन्निमित्तं। सरमाकृतंव्यापारं कथंज्ञात्वा पदाताडयित्वा। ततोपिकथं। वक्त्रात्पयसि सृतेसति। पणिनांसकाशं। गिरिव्रजं गिरिकूटं। ज्ञात्वेत्यादीनांभित्वेत्यंतानां इंद्रेणदैत्यानिहताइत्यन्वयः। इष्टमेवचेत्यंतेनपूर्वार्धोव्याख्यातः। हेअद्रिवस्त्वंगोमतो गोभिर्युक्तस्य बलस्यदैत्यस्य बिलं गिरिकूटाधस्तनंविवरमपावोऽपावृतवानसीति।

तदादेवास्तुज्यमानास्त्वयैवप्रेर्यमाणाअबिभ्युषस्त्वामाविषुः अभीत्यैवस्वपतिंत्वांपरितोजुगुपुः ॥ ५ ॥ **तवाहं** ॥ [१२।२] **तवदानैः** ॥ हेशूर इंद्र अहं तवरातिभि र्दानैर्निमित्तैः सिंधुं नदीं प्रत्यायं प्रत्यागमं । यज्ञदीक्षार्थमुद्यतइतिशेषः । आगत्यपुनरावदन् स्तुतिरूपैर्वेदपदैस्त्वामावदन् सम्यक्स्तुवंश्चजातोस्मि । यद्वा । सर्वदात्वामावदन्नहंपुनःसिंधुंप्रत्यायमितियोज्यं । हेगिर्वणो गिरासंभजनीयवेदगिरोदित तस्यते तंत्वां येविदुस्तेकारवः कर्तारः ऋत्विजस्तत्रोपातिष्ठंत मंत्रैस्त्वामपूजयन् ॥ ६ ॥ **मायाभिः** ॥ [१२।४] **शक्तिभिः** ॥ हेइंद्रत्वं मायिनं शक्तिमंतं व्रीह्यादित्वात्साधुः । शुष्णं शोषकं शुषेर्नङ् । वृत्रमितियावत् । मायाभिः शक्तिभिरवातिरः तिरतिर्वधकर्मा । हतवानसि । तमोवेत्यध्यात्मं मायिनंशुष्णमितितमोऽज्ञानमुच्यते । शेषंसमानमिति । किंच । येमेधिराः मेधारताः । तृतीयस्यातिशयार्थत्वात् । तस्यते तंत्वां विदुः । तेषां श्रूयंतइतिश्रवांसिविद्याः उत्तिरः उच्चैस्तरांदेहि ॥ ७ ॥ **इंद्रमीशानं** ॥ [१२।५] **स्तुवंति** ॥ यस्येंद्रस्य सहस्रमुतवाऽतोपिभूयसीर्भूयस्योरातयोदानानिसंति तमीशानमिंद्रंत्वामोजसा ओजःप्रभृतिभिर्गुणैःसहस्तोमा । स्तुतिविशेषाअनूषत । अभ्यनूषत सदास्तुवंति ॥ ८ ॥ २१ ॥ ११ ॥ ३ ॥ नन्वेवंशतर्चित्वस्यगतिमुक्त्वाप्येतासामृचांमधुच्छंदाःकस्माद्दृषिरुच्यते माधुच्छंदसोजेताकस्मान्नस्यादित्यतआह ॥ [१२।५] **ऋक्संहितायाइति** ॥ तथा शब्दःसमुच्चये । मानादितिप्रत्येकमभिसंबध्यते । तथामानान्मानांतरादितिवा । येत्रग्रंथेस्माभिर्मुनयःप्रोक्तास्तेऋक्संहिताद्यनुसारेणैव अतस्तएवस्युः । यद्वाऋक्संहितादिनामानेनयेत्रमुनयःप्रोक्तास्तएवस्वीकार्याःस्युः । नमानुषरचितग्रंथोक्ताइति । युक्त्यंतरमाह ॥ [१२।६] **श्रुत्यभावादिति** ॥ शुनःशेपोह्यह्वदित्यादिवच्छ्रुत्यभावात् मधुच्छंदसोन्यस्यमुनेर्नामाभावात् । त्रिष्वादित्यंद्धुपदेषु

बद्धइत्यादिवदलिंगाद्दृष्यंतरलिंगाभावाच्च । उपलक्षणंचैतत् । ऋष्यंतरज्ञापकप्रमाणाभावादित्यर्थः । अन्योमधुच्छंदसः । किंच । तदुमाधुच्छंदसमित्यादिवावायवायाहीत्यादिसूक्तानांमधुच्छंदसाद्दृष्टत्वमुच्यते । ततोपिसएवात्रद्रष्टाभ्युपगंतव्यः । एवं तर्ह्यतिप्रसंगइत्यतआह ॥ [१२।७] **श्रुतीति** ॥ श्रुतिलिंगयोरन्यता । अन्यज्ञापकंश्रुतिलिंगादियावद्धवेत्तावदेवपूर्वाप्रमा सामान्यप्रमाणंज्ञापकंभवेत् । एतदुक्तंभवति । तदुमाधुच्छंदसमित्यादिसामान्यवचनं । तच्चापवादभावेप्रमाणं । अपवादेतुसंकोचमर्हति । नचात्रापवादकंश्रुत्यादिकमस्तीति ॥ ७ ॥ अथव्याचिख्यासितानामृचामृषिमाह ॥ [१२।७] **शतर्चिभरिति** ॥ विशेषणसमासोयं । नद्विगुः । समासांतोविधिरनित्यः । वह्निनामानमित्युपलक्षणं । एवंचेत्कस्यनूनमित्यतःप्राक्तनीनामृष्यंतरंवक्तव्यंप्रसज्येतेत्यतआह ॥ [१२।८] **ताभ्यइति** ॥ शतसंख्याभ्यउत्तराएकोनचत्वारिंशदपि स मेधातिथि र्दृक्द्रष्टा यासांतास्तद्दृशः । तर्हिकथंतस्यशतर्चित्वमित्यतआह ॥ [१२।८] **अन्यत्रेति** ॥ अन्यत्रगाइत्यानुपूर्व्यंतरत्वमुक्तं । तपस्यन्नित्यवस्थांतरत्वं । कदाचनेति कालांतरत्वं । स मेधातिथिः । किमतोयद्येवमित्यतआह ॥ [१२।८] **कालेति** ॥ कालांतरत्वंस्थानांतरत्वंचदर्शनस्यचेत्तर्हिशतसंख्यातोभ्यधिकमपितदंतर्भूतमेवभवेत् । कालस्थानांतरत्वमित्युपलक्षणं । अन्यस्थानगतत्वमन्यद्दृष्टत्वंचग्राह्यं । अत्रयुक्तिमाह ॥ [१२।९] **अन्येति** ॥ अत्रापिकालांतरत्वादिकमुपादेयं । ताः कालांतरेदेशांतरेऽवस्थांतरेचदृष्टा ऋष्यंतरेणवादृष्टा आनुपूर्व्यंतरस्थाश्च इतोपगताः अत्रविद्यमानाअप्यविद्यमानकल्पायतः अतःसंख्यांतर्भावमेष्यंति । तासुविद्यमानास्वपिशतमित्येवोच्यतइति यावत् । एकदेशकालावस्थासुतेनैवऋषिणादृष्टामूलवेदेचैकानुपूर्वीस्थाहिशतर्चित्वेविवक्षिताइति ॥ ९ ॥ **अग्निंदूतं** ॥ द्वा

दशर्चमेतदाग्नेयंसूक्तं । अत्राग्नाविष्णवोर्दूतशब्दंघटयति ॥ [१२।१०] यज्ञेति ॥ यतोग्निर्यज्ञभागार्थदेवैःसंप्रेषितस्ततोदूतः। संदेशेनयः प्रेष्यतेसहिदूतउच्यते । अत्रस्थोग्निस्थोवासुदेवश्चतत्तत्प्रार्थितकृद्यतोऽतोदूतइवदूतः । विश्वंवेत्तीतिविश्ववेदाः । विदेःकर्तर्यसुन् । स विष्णुः । अग्नौतूपचारतइतिभावः । यज्ञस्यसुक्रतुमित्यस्यव्याख्यानंयज्ञज्ञइति । क्रतुशब्दस्यज्ञानवाचित्वात् । एवंयोजना । वयंदूतंहोतारंविश्ववेदसमस्यप्रमाणप्रमितस्ययज्ञजातस्य सुक्रतुं सम्यक्ज्ञानिनमग्निंवृणीमहे प्रार्थयामहइतियावत्॥१॥ अग्निं ॥ अत्राग्नीनामनेकत्वादग्निमग्निमितिवीप्सायांद्विरुक्तिर्युज्यते परमेश्वरेतुकथमित्याशंकांपरिहरन् कंचिद्विशेषं चाह ॥ [१२।११] अग्निनामेति ॥ तन्मूलाद्विरुक्तिश्चोपपद्यतएव । ऋत्विजोविशांप्रजानांपतिंविश्पतिं । हव्यंवहतीतिहव्यवाट् तं हव्यवाहं पुरुप्रियं पूर्णसुखमग्निमग्निं हवीमभिः ऋग्रूपैराह्वानैः ऋचांयोग्यतयासंबंधः । सदाहवंत आह्वयंत आहूतवंतः ॥ २ ॥ अग्नेदेवान् ॥ [१२।१२] जज्ञानः ॥ हेअग्ने जज्ञानो जायमानो स्मद्यज्ञेव्यज्यमानस्त्वं वृक्तबर्हिषे वृक्तंप्रस्तृतमुच्यते । वृक्तं प्रस्तृतं बर्हिर्येनासौवृक्तबर्हिर्यजमानस्तस्मै तत्प्रयोजनाय । देवानिह यज्ञे आवह यतस्त्वंहोतासि नोस्माकमीड्यश्चासि॥३॥ तान् ॥ [१२।१३] बोधय ॥ हेअग्ने ईश यद्यस्माद्दूत्यं दूतस्यभावं कर्मवायासि प्रतिपद्यसे । देवानांदूतोयतस्तस्मादुशतः आगंतुमिच्छतस्तान्सुरान्विबोधय विज्ञापय । अमुष्ययज्ञोयुष्माभिर्गंतव्यइति । ततश्चदेवैःसहबर्हिष्यासत्सि आसीदसि उपविशसि उपवेक्ष्यसि ॥४॥ घृताहवन ॥ [१२।१४] यस्यंते ॥ घृतं सुघृतं यज्ञयोग्यं हवनं हविर्यस्यते तव सत्वंघृताहवनः । हेघृताहवन । दीदिवः यङ्लुगंताद्दीव्यतेरसुन् । देदीप्यमानाग्ने त्वं रिषतः अंतर्णीतण्यर्थोयं । नाशकान् रक्षस्विनः रक्षांसियेषांसंतितान्रक्षसांसंबंधिनोजनान्यज्ञघ्नान् प्रतिदहस्म प्रतिदहैव ॥ ५ ॥ अग्निनाग्निः ॥ [१२।१४] यस्यास्ये हविर्हूयते सजुह्वास्यः । जुहु हवनाधिवरण मास्यंयस्येति । कविः सर्वज्ञो गृहाणांपतिर्गृहपतिः । युवा तरुणो हव्यवाट् अग्निना परेशेनत्वया समिध्यते संदीप्तो भवति । अग्न्यादीनांदीप्त्यादिगुणप्रदस्त्वमितियावत् । अथवाप्रसिद्धाग्निविषये जुह्वास्यःआहवनीयोग्निर्मथितेनगार्हपत्ये नाग्निनासहसमिध्यते । अन्यत्समानं ॥६॥२२॥ कविमग्निं ॥ सत्यधर्मामीवचातनपदेव्याख्याति ॥ [१२।१५] सत्यधर्मेति ॥ सत्याः साधवोधर्मागुणायस्यासौसत्यधर्मा सद्गुणभृदित्यर्थः । अमीवंदुःखं । तच्चातयतिनाशयतीत्यमीवचातनोदुःखघ्नः । यद्वाचातनं कालनमपसारणंस्यात् । ततश्चामीवचातनोदुःखस्यापसारयिता । फलतस्त्वेकएवार्थः । कविं सर्वज्ञं । सत्यधर्माणममीवचातनमग्निंदेवमध्वरे उपस्तुहीतिस्वात्मानं स्वांतर्यामिणं होतृगं प्रतिवोच्यते ॥७॥ यस्त्वामग्ने ॥ हेअग्नेदेव योहविष्यति यजमानो दूतंत्वां सपर्यति पूजयतिस्म । तस्य यजमानस्य प्राविता प्रकर्षेणरक्षिताभव ॥ ८ ॥ योअग्निं ॥ देववीतिपदंव्याख्याति ॥ [१२।१६] देववीतिस्त्विति ॥ तद्गतिर्देवानांगतिः । यज्ञंप्रतिदेवानामागमनं । देवताप्राप्तिरूपंफलंवा । वीगतिव्याप्तिप्रजनकांत्यसनखादनेषु तस्यैदेववीतये । योहविष्मान्यजमानोग्निंत्वां आविवासति । आवासयत्याधत्ते॥ पूजयतिच । हेपावक त्वं तस्मै तंयजमानं सर्वदामृळय सुखय ॥ ९ ॥ सनःपावक ॥ अस्यबाह्येस्फुटत्वादध्यात्मंव्याख्याति ॥ [१२।१७] त्वत्पूजेति ॥ पुनातीतिपावकः । हेपावकाग्नेदीदिवःसत्वन्नोस्मदीयंयज्ञं हविश्चप्रतित्वत्पूजारूपयज्ञादिविषये तत्सिध्यर्थमितियावत् । इह शरीरे देवानिंद्रियाभिमानिनउपाव

ह विशेषतःसन्निहितान्कुरु ॥ १० ॥ **सनस्तवानः** ॥ [१२।१८] **गायत्रेण** ॥ हेअग्ने नवीयसा अतिनूतनेन गायत्रेण साम्ना अपौरुषेयत्वाद्वेदस्य इदानीमेवदृश्यमानेन व्यज्यमानेन स्तवानः स्तूयमानः सत्वन्नो स्मभ्यं रयिं वित्तं वीरवतीं पुत्रयुक्तां अथवा वीरं वीर्यं तद्युक्तामिषमन्नंचाभर आवह देहीतियावत् ॥ ११ ॥ **अग्नेशुक्रेण** ॥ [१२।१९] **ज्वलता** ॥ हेअग्ने शुक्रेण शुभ्रेण ज्वलतेतियावत्। शोचिषा तेजसा युक्तस्त्वं विश्वाभिः सर्वाभि र्देवहूतिभि र्देवाह्वानैःसह नो स्माक मिमंस्तोमं स्तुतिं जुषस्व वृणु ॥१२॥ २३ ॥ १२ ॥ **सुसमिद्धः** ॥ द्वादशर्चमेतदाप्रीसूक्तं । प्रत्यृचंभिन्नदेवताकं ॥ [१२।१९] **अस्मत्** ॥ हेहोतः पावकाग्ने सुसमिद्धःअतिसुदीप्तस्त्वं नोहविष्मते अस्मद्धविष्मते अस्मद्यजमानाय तादर्थ्येचतुर्थी । देवानावह आहूय यक्षिच यजच । देवानावहेतिबहुवारमुच्यते । तस्यतात्पर्यमाह ॥ [१२।२०] **आदंरादिति** ॥१॥ **मधुमंतं** ॥ तनूनपादित्यग्निविशेषस्यप्रसिद्धंनाम। तद्विष्णौयोजयति ॥ [१२।२०] **तनूभ्यइति** ॥ वाक् जाता तदाश्रयत्वात् ततो वाचोदेवः परमेश्वरो व्यक्तो ज्ञय इतितत्पुत्रउच्यते। तेनतनूनपात् नपाच्छब्दस्यपौत्रपर्यायत्वात् । हेकवे तनूनपात्त्वं वीतये यजमानस्यदेवताप्राप्त्यै नो स्मदीयं मधुमंतं मधु स्वादुहविरादि तद्वंतंयज्ञं अद्यैवदेवेषुकृणुहि कुरु ॥ देवान्प्रापय ॥ २ ॥ **नराशंसं** ॥ नराशंसपदंविष्णावग्नौचव्याख्याति ॥ [१२।२१] **नरैरिति** ॥ नरैरित्युपलक्षणं । शंसुस्तुतौ । नरैराशंस्यतइतिनराशंसोविष्णुः । अथवा वह्निरिति वक्तव्येवह्नेरन्यातनूरितिवदताऽस्मिन्सूक्तेसुसमिद्धादयोपिपृथगग्निविशेषाइतिसूचितं । इह सर्वप्राणिनां । प्रियं मधुमतीजिह्वायस्यतं मधुजिह्वं हविष्कृतं हविषः कर्तारंनराशंसं अग्निमस्मिन्यज्ञेऽहमुपह्वये आह्वयामि ॥३॥ **अग्नेसुखतमे** ॥ अत्रमनुर्हितपदंव्याख्याति॥ [१२।२१] **मनूनांचेति** ॥



अनेनमनुशब्दपर्यायोमनुस्शब्दोयमित्युक्तंभवति । चतुर्थ्यर्थेषष्ठी । हेअग्ने ईळितः स्तुतस्त्वं सुखतमेरथे सुखतमेना तिशयेनसुखकारिणा रथेन देवानावह यस्मात्त्वंहोतासि । मनुषां मनुभ्यो देवेभ्यो हितश्चासि। अध्यात्मंदेहोरथः । तत्रयथाश्रुतैव सप्तमी ॥ ४ ॥ **स्तृणीत** ॥ [१२।२२] **आनुषक्** ॥ हेमनीषिणोबुद्धिमंतःऋत्विजो यत्रस्थानेऽमृतस्यदेवतासमुदायस्यचक्षणंदर्शनंभवति । चक्षिङःख्याजभावश्छांदसः । छंदस्युभयथेतिवा प्रकृत्यंतरंवा । तद्घृतपृष्टं घृतस्थानात्पश्चिमतोवर्तमानंदेवस्थानं देवस्थाने आनुषक् सर्वतो बर्हिः । स्तृणीत विस्तारयत । अध्यात्मंव्याचष्टे ॥ [१२।२२] **शुद्धस्येति** ॥ घृतः शुद्धोविष्णुः पृष्ठे यस्योपरि तद्घृतपृष्ठमित्यर्थः । यत्र मनसि । अत्रबृहत्त्वाद्बर्हिर्वेदवाक्यं । ततस्तृणीतेति तेनमनःसंयोजयत। अत्रबर्हिर्देवता ॥५॥ **विश्रयंतां** ॥ [१३।१] **ऋतं** ॥ ऋतरूपेण यथार्थज्ञानरूपेणहरिणा वृधो वृद्धाः समृद्धा यास्ता ऋतवृधः । असंगत्वादसश्चतः सश्चतिःसंगार्थः । ततःक्विप् । द्वारोदेवी द्वारोदेव्यः श्रियोदास्यो ऽद्या स्मिन्नहनि तथा नूनं निश्चितं । अद्यैवेतियावत् । यष्टवे यष्टुं । यजनार्थतः यजनंचासावर्थःप्रयोजनंचतस्मै विश्रयंतां नोमानसेमखेबाह्ययज्ञेवावर्ततां । भगवद्विषयेयोजयति ॥ [१३।३] **द्वारभूतंइति** ॥ मुमुक्षतःसाक्षात्द्वारभूतइत्यनेनमोक्षस्यमुख्यसाधनमित्युक्तंभवति । देवशब्दःप्रागेवव्याख्यातः । तस्माद्भगवानपिद्वारोदेव्यः । कथंस्त्रीलिंगादिप्रयोगः स्त्रीरूपश्चसः । चशब्दाद्बहुरूपश्च । ततोबहुवचनंचयुज्यते । ऋतवृधइतिनित्यवृद्धइतिप्रागेवव्याख्यातं ॥ ६ ॥ २४ ॥ **नक्तोषासा** ॥ नक्तेतिरात्रिदेवता उषाइत्यपररात्रिकृज्ज्योतिर्देवतेतिप्रसिद्धं। शब्दद्वयंविष्णौयोजयति॥ [१३।३] **नक्तेति** ॥ यस्मात्सविष्णुःसर्वेणपापादिनानाक्तोनसंगतस्तस्मान्नक्तास्यात् । अंजतेःक्तः।

न समासः (नञ्समासः)। शकंध्वादित्वात्पररूपं । स्त्रीरूपत्वात्स्त्रीलिंगत्वमित्युक्तमेव। वशकांतावित्यस्मात्कसुन् प्रकाशरूप त्वादुषाः अहं सुपेशसौ सुरूपे सुभद्रे नक्ताचउषाश्चतेनक्तोषसौ नोऽस्माकमस्मिन्यज्ञे इदंबर्हिरस्मिन्बर्हिषि आसदे आस दनाय संपदादित्वात्क्विप्। संस्थित्यै उपह्वये उपाह्वयामि ॥७॥ तासुजिह्वा ॥ अत्रैदैव्यौहोतारौनाम काविल्यतआह ॥ [१३।४] होतारावित्ति ॥ अपिपदेनोपह्वयइत्यनेनान्वयंसूचयति । मथ्यमानो गार्हपत्यः । अपर आहवनीयः । तद्वो वह्निर्द्वय गतः द्विरूपोव्यवस्थितोध्यात्मं शोभनाजिह्वाययोस्तौसुजिह्वौ कवी दैव्यौ देवगौ दूतत्वेनदेवसंबंधिनौ होतारौ वह्नी उपह्वये आगत्यच नःइममस्मदीयंयज्ञं यक्षतां देवेषुसदायजतां प्रयच्छतां ॥ ८ ॥ इळा ॥ सरस्वतीशब्दस्यप्राक्भगवद्वि षयतयाव्याख्यातत्वान्महतीतन्महीचेतिमहीशब्दस्यापिव्याख्यास्यमानत्वादिळाशब्दंव्याचष्टे ॥ [१३।६] इळेति ॥ ईडस्तुतौ कर्म ण्यकारप्रत्ययः धातोर्ह्रस्वताच । देवतांतरविषयतयाचेळादिशब्दत्रयंव्याख्याति ॥ [१३।६] श्रीर्वेति ॥ श्रीर्वाइळा ईड्यत्वादेव अपराचेळासरस्वतीभ्यामन्यामहीच साश्रीरेव तत्कथं । भूरूपा । महीशब्देनभारतीचविवक्षितेत्याह ॥ [१३।६] महीत्विति ॥ भारतीचमहीनामेतितुशब्दश्चशब्दार्थः । इळाव्यावृत्त्यर्थोवा । भारतीशब्दस्यब्रह्माण्यामपिप्रसिद्धत्वाद्विवेकार्थमाह ॥ [१३।६] वाय व्येति ॥ वायुभार्या । ब्रह्मणोभार्याऽपरा इळामहीभ्यामन्या सरस्वतीत्यर्थः । स्त्रीलिंगंबहुवचनंचहरौघटयति ॥ [१३।७] तद्गतइ ति ॥ लक्ष्म्यादिगतः तादृशैः स्त्र्याकारैः तथा स्त्रीलिंगबहुवचनविषयइत्यर्थः । इळासरस्वतीमहीत्येता मयोभुवः सुखाश्रय

भूता अस्रिधोऽविनाशा स्तिस्रोदेवीर्दैव्यो बर्हिः बर्हिषिसीदंतु उपविशंतु ॥ ९ ॥ इह ॥ त्वष्टृविश्वरूपशब्दौभगवतियोज यति ॥ [१३।७] त्वष्टेति ॥ त्विषधातोर्दीप्तिवद्बलमपिवाच्यंभवतीत्याशयेनबलत्वाद्वेत्युक्तं । यद्वात्विषदीप्तावित्यत्रैवदीप्तिपदेनते जसोबलस्यचग्रहणं । त्विषेर्देवतायामकारश्चोपधायाअनिट्त्वंचेतितृन् । विश्वरूपकरत्वादित्यनेनविश्वानिरूपाणियस्मादि तिनिर्वक्ति ॥ [१३।८] अथपूर्तितईति ॥ विश्वंपूर्णरूपमस्येति । अहमग्रिय मग्रेभवं प्रधानं विश्वरूपंत्वष्टारं इहयज्ञे उपह्वये स त्वष्टाऽस्माकंकेवलोस्तु अस्माकमेवपालयितास्तु ॥ १० ॥ अवसृज ॥ वनस्पतिशब्दंहरौयोजयित्वा चेतनशब्दार्थमाह ॥ [१३।८] वननीयेति ॥ वननीयाः संभजनीयाः वनतेःकर्मण्यसुन् । वनसांपतिःवनस्पतिः । यद्वावनोऽकारः। पारस्करप्रभृतित्वा त्समासेसुट् । तेनवनानांपतिर्वनस्पतिः । हेवनस्पतेदेव त्वंदेवेभ्योहविरवसृज देहि । तेनचप्रदातुर्यजमानस्यचेतनंज्ञानम स्तु । चितीसंज्ञाने भावेल्युट् ॥ ११ ॥ स्वाहा ॥ स्वाहाशब्दंभगवतित्रेधाव्याचष्टे ॥ [१३।९] स्वाहेति ॥ स्वभागंप्रतिगतिमानि त्यनेनस्वशब्देकर्मण्युपपदेआङ्पूर्वाद्दोहाङ्गतावित्यस्मात्कर्तर्यकारःप्रत्ययः ततस्त्रियांटाबित्युक्तंभवति । अव्ययत्वाच्चस्वाहे त्यनेन सुष्ठ्वासमंतान्नहीयतइतिव्युत्पादितंभवति । ओहाक्त्यागइत्यस्यकर्मणीदंरूपं । अमोषश्चस्वाहेत्यनेन सुष्ठ्वासमंतान्नह्रि यतइति । हरतेःकर्मणिडः । स्वाहादेवी यज्वनोयजमानस्य गृहेवर्तमानंयज्ञमिंद्रायकृणोतन करोतु। इंद्रंप्रापयत्वितियावत्। उत्तमप्रयाजाख्येयज्ञेस्वाहायक्ष्यमाणा नतत्रेंद्रसंबंधोस्तीत्यस्मिन्मतेइंद्राय इंद्रस्यसंबंधिनो यज्वनोगृहेयज्ञंकृणोतनप्रवर्तय त्वितियोज्यं । किंचतत्रयज्ञेदेवानुपह्वये ॥ १२ ॥ २५ ॥ १३ ॥ ऐभिरग्ने ॥ द्वादशर्चमिदंवैश्वदेवसूक्तं । दुवइतिव्याख्या

ति ॥ [१।१।१०] **कामेति** ॥ दुहप्रपूरणे अस्मादुप्रत्ययोडिच्च । कामस्ययोग्यतयासंबंधः । हेअग्ने दुहंतीतिदुवः कामदोहाअस्मदीया स्तुतिरूपागिरःप्रति सोमपीतयेचैभिः प्रसिद्धैःविश्वैर्देवैःसह आयाहि । आगत्ययक्षिच ॥ १ ॥ **आत्वा** ॥ हेविप्र मेधावि न्नग्ने कण्वावयमितियावत् । त्वामाहूषत आहूतवंतः । किंचते तव धियो बुद्धीर्गृणंति स्तुवंति अतिशयेनबुद्धिमानसीत्या दि । सत्वंदेवैःसहागहि आगच्छ ॥ २ ॥ **इंद्रवायू** ॥ प्रागव्याख्यातत्वाद्बृहस्पत्यादिशब्दान्भगवतिव्याख्याति ॥ बृह [१।१।१०] **न्निति** ॥ बृहन्पतिरित्येकंव्याख्यानं । बृहत्याःपतिर्वेतिद्वितीयं । बृहत्याइत्यनुवादेनवाचइतिव्याख्यानं । तथाचश्रुतिः एषउएवबृहस्पतिर्वाग्घिबृहतीतस्याएषपतिस्तेनेति । एवशब्दोविष्णुरेवेतिसंबध्यते । तथाचोक्तंतद्बृहतोःकरपत्योश्चोरदेव तयोःसुट्तलोपश्चेति । एकस्मिन्मित्रेमित्रेतिद्विवचनंकथमित्यतआह ॥ [१।१।११] **मित्रेति** ॥ साहचर्यात्द्वयोरेकंनाम दस्रेतियथा । पुषपुष्टावित्यस्मात्कन्प्रत्ययउपधादीर्घत्वंच । धातोश्चण्यर्थांतर्भावानंतर्भावाभ्यांपोषणात्पूर्णत्वाद्वापूषेतिव्याख्यानद्वयं । भगःप्रोक्तइत्यैश्वर्यस्यसमग्रस्येत्यादिवचनात् । अव्ययात्त्यबित्यत्रत्यबितियोगविभागेनादिस्थत्वादादित्यः । आददानः पृथिवीरसंगृह्णानः आङ्पूर्वाद्दाञइतङ्प्रत्ययः । यातेश्चाकारः । आदिच्चासौयश्चेत्यादित्यः । तथाचश्रुतिः एतेहीदंसर्वमाद दानायंतीति । बहुरूपत्वतश्चशब्दात्द्विरूपत्वतश्चादित्यानित्यादियुक्तं । मा मानं वेदः तेनरुतः शब्दितो मारुतइत्यर्थः । रुशब्दे मरुच्छब्देतुपूर्वपदह्रस्वतोत्तरपदाकारलोपश्चवक्तव्यः । इंद्रवायूइत्यादीनामाहूषतेतिपूर्वेणसंबंधः ॥ ३ ॥ **प्रवः** ॥ म

त्सरादिसोमविशेषणानिव्याख्याति ॥ [१।१।१३] **मत्सराइति** ॥ मत् मदं सरंति सारयंतिगमयंतीतिमत्सराइत्यर्थः । तर्हिमादयि ष्णवइतिपुनरुक्तिरित्यतआह ॥ [१।१।१३] **तच्छील्यादिति** ॥ मदकारित्वशीलत्वमधिकंवक्तुंमादयिष्णवइत्युत्तरंपदमुक्तं । णेःछंद सीतिस्मरणात् । द्रवणात्द्रप्साइत्यनेनद्रुगतावित्यस्येदंरूपमितिदर्शितं । एवशब्देनद्रप्सारसवंतइतिव्याख्यानमपाकरोति । चमूशब्दश्चमसस्यवाचकः तत्रसीदंतीतिचमूषदइत्यर्थः । हेदेवाःमत्सरामादयिष्णवोद्रप्सामध्वोमधवःस्वादवश्चमूषदइदंवः सोमा वोर्थे प्रभ्रियंते संपाद्यंते तान्पिबतेत्याशयः । मत्सरादिशब्दानामध्यात्मंमनोवृत्तिषुसुघटत्वाच्चमसस्थानत्वंघटयति ॥ [१।१।१३] **शिरश्चेति** ॥ इदंतच्छिरइतिहिश्रुतिः । मनश्चशिरसितिष्ठति । ताएताःशीर्षन्नितिश्रुतेः । इंदुशब्दंसोमेषुमनोवृत्तिषुच व्याख्याति ॥ [१।१।१३] **इष्टेति** ॥ इकारःकामवाची इं कामं काम्यं ददतीतींदवः । अध्यात्मंप्रभ्रियंतइत्यस्यसमाधीयंतइत्यर्थः॥४॥ ॥ **ईळतेत्वां** ॥ अत्रावस्युपदंव्याख्याति ॥ [१।१।१४] **अवस्युरिति** ॥ प्रवृत्तिरत्रेच्छा । अवःअवनमात्मनइच्छतीत्यवस्युरित्यर्थः । क्याच्छंदसीतिस्मरणात् । ननुमेधातिथावेकस्मिन्यजमानेकथंबहुवचनमित्यतआह ॥ [१।१।१४] **आत्मस्थमिति** ॥ अस्मदोद्वयोश्चे तिवचनादितिभावः । बहवोमुनयोत्रवा । तेनापिबहुवचनंयुक्तं । वाशब्दावितरेतरसमुच्चये । तेचबहवःकण्वासः कण्वप्रभृ तयएवविवक्षिताः । नन्वस्यवाक्यस्यविष्ण्वादयोप्यृषयोभवंति तत्कथंकण्वावयमित्याद्युपपद्यतइत्यतआह ॥ [१।१।१५] **उत्तराणा मिति** ॥ उच्छब्दात्तरबयं नत्वखंडंप्रातिपदिकं । तेनसर्वनामसंज्ञाभावादुत्तराणामितियुक्तं । उत्तराणामूर्ध्वतराणांमेधाति थ्यादीनामित्यर्थः । चशब्दाद्ब्रह्मादयश्च । तस्यांतस्यामवस्थायामित्युक्तस्योदाहरणप्रदर्शनार्थमिदमुक्तमित्यदोषः । अरंकृत

इतिव्याख्याति ॥ अरंकृतइति ॥ अतिकर्तारोतिशयेनकर्मणांकर्तारः । अलंकर्तारोदेवादीनांभूषयितारइतिवारंकृतः । ल
स्यरेफादेशः । हेदेवहविष्मंतोऽवस्यवोवृक्तबर्हिषोऽरंकृतःकण्वासो वयमितियावत् । त्वामीळते स्तुवंति ॥ ५ ॥ घृतपृष्ठाः॥
॥ स्निग्धपृष्ठाः ॥ हेअग्ने येघृतपृष्ठाः घृतमिवस्निग्धंपृष्ठंयेषामिति । अथवाघृतःशुद्धोहरिःपृष्ठेयेषांतेघृतपृष्ठाः । विदोषिणा
हरिणासमारूढाइतियावत् । विशब्दोनञर्थे तस्मादिनिप्रत्ययस्यावैयर्थ्यं । मनोयुजः सारथेर्मनोमात्रेणरथेयोज्याः वाहक
त्वाद्वह्नयोऽश्वाः सोमपीतयेत्वांदेवांश्चयज्ञंप्रत्यावहंति । यच्छब्दस्योत्तरत्रसंबंधः ॥६॥ २६ ॥ तान्यजत्रान् ॥ तैर्देवान् ॥
हेअग्ने यएवंविधाअश्वास्तैर्यजत्रान्विष्णुंयजतः । स्तुत्यर्थोवायजिः । तस्यस्तोतॄन्वाऋतवृधः ऋतेनसम्यग्ज्ञातेनब्रह्मणैधितांस्ता
न्देवान्पत्नीवतस्कृधिकुरु । यज्ञंप्रत्यागंतुंपत्नीभिःसहयोजय । पत्नीसहितानुक्तलक्षणैरश्वैरिहानयेतिभावः । आनीयचहेसु
जिह्वा मध्वो मधुं स्वादुं सोमंपायय । विष्णुपक्षेतुयजत्रानिज्यानितिव्याख्येयं ॥ ७ ॥ येयजत्राः॥ अत्रवीप्सयायेयइतिद्वि
र्वचनंदृश्यते यजत्राणामीड्यानांचापृथक्त्वात् । तेनतेतइत्यपिद्विर्वचनमितिप्रतीतिःस्यात् तांनिराकर्तुमाह॥ तेषष्ठीति॥अत्र
द्वितीयस्तेशब्दःषष्ठी । षष्ठ्येकवचनांतस्ययुष्मदःपदस्यादेशः । कुतः । अतएवह्यनुदात्तःस्वरःस्यात् । अनुदात्तंसर्वमपादादावि
त्यादेशस्यैवानुदात्तत्वस्मरणात् । आद्यस्तेशब्दोबहुवाचकः । प्रथमाबहुवचनांतस्यतच्छब्दस्यरूपं । कुतः । यतउदात्तः ।
अन्यथासोप्यनुदात्तःप्रसज्येतेति । तर्हियेयइत्यनेनान्वयोनस्यादित्यतआह ॥ आवृत्तस्त्विति ॥ योबहुवाचकस्तेश
ब्दःसद्विरावृत्तःकरिष्यते । ततश्चार्थोन्वितो(भवति)भवेत् । हेअग्नेयजत्रायजंतइज्यावा ईड्याःस्तुत्याश्चयेयेदेवाःसंति तेते

सर्वे वषट्कृति संपदादित्वात्क्विप् । वषट्कृतौसत्यां ते त्वदीयया जिह्वया मधोः मधु पिबंतु ॥ ८ ॥ आकीं ॥ सूर्य
स्य ॥ आकीमित्याङर्थेनिपातः । होताविप्रोऽग्निः प्रकाशनादुषःशब्देनब्रह्मोच्यते । तद्विदस्तद्बुध्यंति तेउषर्बुधः ता
न्विश्वान्देवानिंदुपान् सोमपान्सूर्येणातिशयतःप्रकाश्यमानत्वात्सूर्यस्यरोचनात्स्वर्गादिहयज्ञंप्रत्यावक्षत्यावहेत् ॥ ९ ॥ वि
श्वेभिः ॥ अत्रमित्रस्यधामभिरित्येतद्व्याचष्टे ॥ देवाइति ॥ विष्णुधामत्वात् मित्रस्यविष्णोरधिष्ठानत्वात् । धामशब्दंपु
लिंगमाश्रित्यमित्रधामानइत्युक्तं । (यद्वाविष्णुधामत्वान्मित्रधामानइतिबहुव्रीहिद्वयं । तथासतिमित्रेणधाम्नाधामभिर्धामव
द्भिरितिव्याख्येयं) । अग्नेमित्रस्यधामभिर्विश्वेभिर्देवैरिंद्रेणवायुनाचसहसोम्यंसोमस्वरूपंमधुपिब । इंद्रवाय्वोःप्राधान्यात्पृथ
ग्ग्रहणं ॥ १० ॥ त्वंहोता ॥ अग्नेमनुर्हितोहोतात्वंयज्ञेषुसीदसि यज्ञानामधिष्ठाताभवसि । तस्मात्सत्वंनइममध्वरंयज
देवेभ्योदेहि ॥ ११ ॥ युक्ष्व ॥ अत्रारुषीरित्यादिनाग्नेर्वाहनान्युच्यंते । तद्विवृणोति ॥ अग्नेर्वाहाइति ॥ हेअग्नेदेवत्वं
रथे अरुषीररुणाअग्निसप्रभाअश्वतरीर्युक्ष्व संयोजय । अथवा । अरुषीर्लोहिताअश्वाश्चयुक्ष्व । हरितोहरिद्वर्णादूर्वासप्र
भाअश्वतरीश्चयुक्ष्व । अथवा । रोहितोरोहिन्मृगीर्वायुक्ष्व । ताभिरश्वतरीभीरोहिद्भिर्वायुक्तेनरथेनदेवानिह यज्ञे आवह ।
पद्मसप्रभाइत्यन्यत्रोक्तस्यविवरणं ॥ १२ ॥ २७ ॥ १४ ॥ इंद्रसोमं ॥ द्वादशर्चमेतत्सूक्तमृतव्यं । अवांतरदेवताभेदश्चत
त्रतत्रद्रष्टव्यः । अस्मिन्नृतुशब्दोबहुशःश्रूयते । तस्यतावत्सामान्यतोर्थमाह ॥ ऋतुर्मार्गइति ॥ ऋगतौ । अस्मात्करणेकु
प्रत्ययः । मार्गश्चादित्यस्येतिविशेष्टुंतुशब्दः । तथाचादित्यमार्गस्थाःकालदेवताऋतुशब्दाइत्यर्थः । अभियज्ञमित्यस्यामृचि

नेष्टः पिबेत्युच्यते । ऋत्विग्विशेषस्यचनेष्टुःसोमपानप्रार्थनंनसंगतमित्यतआह ॥ नेतृत्वादिति ॥ नयतेःषुगितिनयतेस्तृन् षुगागमश्च । ईष्टेनकश्चिदस्येत्यतश्चनेष्टाहरिः । नविद्यतेईष्टाईशितायस्यासौनेष्टेत्यर्थः । तस्यामेवर्चिग्नाशब्दंव्याचष्टे ॥ ग्नाइति ॥ चशब्दाद्धरिश्च । तत्कथमित्यतआह ॥ गंतीति ॥ गमेस्ताच्छील्येनइतिप्रत्ययोडिच्च । ज्ञातॄणांनेतृत्वतः ज्ञातृत्वतो नेतृत्वतश्चेतिवा गमेर्नयतेश्चडः । अनेनैवगमनान्नयनाद्वाग्नाइत्युक्तार्थं । स्त्रीलिंगंबहुवचनंचहरौव्याख्यातमेव । ऋतुशब्दे नयदिदेवताःस्वीक्रियंते तर्हिमत्सरासस्तदोकसइत्यनुपपन्नंस्यात् । तदितिपरामर्शस्यविषयाभावादित्यतआह ॥ ऋतुपात्रमिति ॥ सत्यमृतुशब्देनदेवतोच्यते । किंतूपलक्षणयात्रतद्देवतापात्रमपिगृह्यते । ततश्चकिमित्यतआह ॥ तथेति ॥ तथा तथासति ऋतुशब्देनऋतुपात्रग्रहणेसति यत्सोमास्तदोकसःप्रोक्तास्तद्युक्तमेव । कथमित्यतआह ॥ ऋतुपात्रेति ॥ नेष्टाग्निरितिनेष्टृदेवतात्वाभिप्रायेणाप्युक्तं । तथाचवक्ष्यति । तत्रनेष्टापिकस्मान्नेष्टोच्यतइत्यतआह ॥ पत्नीति ॥ अनेन ग्नाशब्दस्यस्त्रीवाचित्वव्याख्यानमपिनिरस्तंभवति । स्त्रीनामसुपठितत्वेपिग्नावोनेष्टरित्यनर्थांतरत्वप्रसंगात् । ऋतुशब्दोमार्गवाची तत्रत्यादेवतालक्षणयातच्छब्दाइत्युक्तं । इदानीमृतुशब्दंदेवतास्वेवंनिर्वक्ति ॥ ज्ञापयंतीति ॥ अनेनधातुरंतर्णीतण्यर्थइत्युक्तंभवति । यद्वाकरणएवप्रत्ययो ज्ञापयंतीतितुतात्पर्यार्थः । स्वलिंगानि कुसुमोद्भवादीनि । अथवा । पूर्वमृतुशब्दो मार्गएवनिरुक्तः इदानींपुनर्ऋतुदेवतास्वितिभेदः । मरुतःपिबतेत्यत्रमारुतेनपात्रेणेतिवक्तव्यं पोत्रादितिकथमुच्यते । मैवं । पोतृशब्देनमरुतांविवक्षितत्वात्तदीयस्यपात्रस्यपोत्रशब्दार्थत्वादित्याशयेनाह ॥ पावनादिति ॥ पोतृदेवताः अतश्चपो



तारः । नेष्टृशब्दस्याग्नाविष्णवोःप्रवृत्तौकारणमुक्तं कारणान्तरंचवदन्नभिधेयांतरमप्याह ॥ अग्निस्त्विति ॥ ततश्चायमर्थः ॥ इंद्रसोमं ॥ हेइंद्रऋतुनामार्गेणागत्यऋतुनापात्रेणऋतुनाऋतुदेवतयासहसोमंपिब । तदोकसस्तदृतुपात्रमोकोयेषांते ऋतुपात्रस्थिताइतियावत् । मत्सराइंदवःसोमास्त्वामाविशंतु त्वदुदरस्थाभवंतु ॥ १ ॥ मरुतः ॥ हेमरुतः ऋतुना पूर्ववत् । पोत्रात्पोतॄणांभवतांसंबंधिनः । पात्राच्च तृतीयार्थेपंचमी पिबत सोममितिशेषः । पीत्वाचयज्ञंपुनीतन पावयत । ततश्चयूयंहि यस्मात्सुदानवः सुदानशीलाःस्थ तस्मादस्मभ्यमभिमतंदत्तेति ॥ २ ॥ अभियज्ञं ॥ हेनेष्टः विष्णो इंद्र अग्ने त्वष्टर्वा ग्नान व्यस्ताअस्यसंतीतिग्नावान् तस्यसंबुद्धिर्ग्नावः । नदीदेवताभिःसहित । ऋतुना पूर्ववत् । पिबसोमं पीत्वाचनोयज्ञमभिगृणीहि साधुरयमिति । त्वंहियस्माद्रत्नधाः रतिधारकोसि तस्मादस्मभ्यंरतिंदेहीतिभावः ॥३॥ अग्नेदेवान् ॥ हेअग्नेदेवानिहयज्ञेआवह । आगतांश्च त्रिषु तिसृषु योनिषुस्थानेषु सादयोपवेशय । तत्रकास्तायोनयइत्यतआह ॥ वेद्युत्तरेति ॥ एवशब्देनस वनत्रयंनिराचष्टे । स्थानशब्दस्यकालेऽनिरूढत्वात् । भूषेत्येतदंतर्णीतण्यर्थमितिदर्शयंस्तस्य कर्मापेक्षत्वात्तद्दर्शयति ॥ ॥ भूषेति ॥ देवानामुपवेशनेननोयज्ञंपरिभूषय । पिबऋतुनेतिगतार्थं ॥ ४ ॥ ॥ ब्राह्मणात् ॥ ब्राह्मणाच्छंसि ॥ हेइंद्रत्वंराधसः । नोराधसोर्थेऋतूननुऋतुदेवताअनु अत्रऋतुदेवतानामिंद्रस्यचसाहित्यमात्रंविवक्षितं नपुनरिंद्रस्याप्राधान्यमित्यभिप्रायेणत्वामन्वृतुदेवताइतिव्यत्यासेनव्याख्यातं । ऋतुदेवताभिःसहेतियावत् । ब्राह्मणात् ब्रह्मेतिब्राह्मणाच्छंस्युच्यते तस्येदंब्राह्मणं ब्राह्मणाच्छंसिपात्रेणसोमंपिब । हियस्मात्तवेत्तवैवसख्यमस्तृतं । स्तृतंछिन्नमितिप्रोक्तं । अस्तृतमच्छिन्नंत

स्मादस्मत्सखात्वंसोमंपिबेति ॥ ५ ॥ युवंदक्षं ॥ [१४।५] अस्तभ्यं ॥ हेमित्रावरुणौधृतंव्रतंजगद्रक्षादिकंकर्मयाभ्यांतौधृतव्रतौ युवं युवामेव ऋतुना ऋतुपात्रेण सोमंपीत्वेतिशेषः । दुर्दभंमस्तभ्यं स्वकर्मणितिष्ठंतं दक्षाख्यंयजमानंच यज्ञंचाशाथे ईशाथे त दीयसोमपानेनप्रसन्नौपुनस्तंप्रवर्तयथः । ऋतुनेत्येतत्सोमंपीत्वेत्यध्याहारेणयोजितं । अध्याहारमंतरेणापिव्याचष्टे ॥ [१४।६] सहवेति ॥ ऋतुना ऋतुदेवतया सापियजमानस्ययज्ञस्यचेष्टइति ॥ ६ ॥ २८ ॥ द्रविणोदाः ॥ अत्रपदद्वयंव्याख्याति ॥ [१४।६] होताचे ति ॥ यथासंख्यंव्याख्यानं । एवशब्देनद्रविणोदाइतिप्रथमांद्वितीयात्वेनविपरिणाम्याग्निमितिव्याख्यानंनिराकरोति । यद्यत्रहोताद्रविणोदास्तदाद्रविणोदाददातुनइत्यादिकमयुक्तंस्यादित्यतआह ॥ [१४।७] अग्निश्चेति ॥ यद्यप्यत्रहोताद्रविणोदास्त थापितद्देवतात्वेनाग्निरपिद्रविणोदाइतिनकोपिविरोधः । अत्राप्यग्निरेवकिंनस्यात् । मैवं । देवतास्तुतौकर्तृत्वेनश्रवणादिति भावेनदेवमीळतइत्येतद्याचष्टे ॥ [१४।७] विष्णुमिति ॥ विभक्तिव्यत्यासेनव्याख्यानंत्वगतिकागतिः । द्रविणोदाहोताद्रविणसो होतृकाश्चाध्वरे अध्वरेषु यथाविध्यनुष्ठितेषु यज्ञेषु ग्रावहस्तासः सोमसवनार्थंग्रावहस्ताःसंतो देवं विष्णुमग्निभिःसहितंप्रधा नाग्निंवेळते स्तुवंति ॥ ७ ॥ ॥ द्रविणोदाददातु ॥ द्रविणोदाअग्निः यानिवसूनिशृण्विरे श्रूयंते प्रसिद्धानीतियावत् । तानिनोस्मभ्यंददातु । तानिचवयंदेवेषु देवनिमित्तमेव वनामहे संभजामः । नतुस्वशरीरपोषणार्थं । यद्वातानिवयंदेवेषु देवेभ्यो वनामहे वनतिर्दानार्थः । दद्मः ॥ ८ ॥ द्रविणोदाःपिपीषति ॥ [१४।७] पातुं ॥ सद्रविणोदाअग्निःपिपीषति पीङ्पाने सोमंपातुमिच्छति सोमाश्चतस्मैप्रतिष्ठत प्रातिष्ठंत तदुद्देशेनैवप्रतिष्ठिताःसंति । अतस्तांस्तस्मैजुहोत जुहुत । किंच । नेष्ट्रा

त् नेष्टुःसंबंधिनापात्रेण ऋतुभिः ऋतुपात्रैश्च ऋतुदेवताभिःसहेतिवा । एनमग्निमिष्यत अभीप्सत पूज्यत्वेनेतिशेषः ॥ ९ ॥ ॥ यत्त्वा ॥ [१४।८] चतुर्थं ॥ द्रविणोदः अग्ने ऋतुभिर्ऋतुपात्रैस्तद्देवताभिःसहवा तुरीयं चतुर्थवारमपि यद्यस्मात्त्वां यजामहे । चतुर्थीहीयमृग्द्राविणोदसी । अधअथ तस्मा न्नोऽस्मभ्यं ददि दाता भवस्म ॥ १० ॥ अश्विना ॥ अत्रदीद्यग्नीइतिव्या चष्टे ॥ [१४।९] दीद्यग्नीइति ॥ दीव्यतेर्यङ्लुगंताड्डिप्रत्ययः । हेअश्विनौ दीद्यग्नी दीप्ताग्नी अतिशयेनदीप्ताग्निसदृशौ शुचि व्रतं कर्म ययोस्तौशुचिव्रतौ यज्ञवाहसौ यज्ञानांप्रवर्तकौ युवामृतुना पूर्ववन्मधु सोमं पिबतं ॥ ११ ॥ गार्हपत्येन ॥ सं त्यपदमग्नाविष्णवोर्योजयति ॥ [१४।९] संत्यइति ॥ संपूर्वात्तनोतेर्ड्यः ॥ संततत्वतः अग्नेरजस्रत्वाद्विष्णोर्व्याप्तत्वात् । अत्रप्रा क्ऋतुशब्देनदेवताविवक्षिता कासावित्यतोधिदेवतामाह ॥ [१४।१०] ऋत्वधिपइति ॥ एकैकस्यर्तोर्मासभेदेनद्वेद्वेरूपे । तत्कुतइ त्यतआह ॥ [१४।१०] ग्रहानिति ॥ सुपर्णंविप्राःकवयोवचोभिरेकंसंतंबहुधाकल्पयंति ॥ छंदांसिचदधतोअध्वरेषुग्रहान्त्सोमं स्यमिमतेद्वादशेतिश्रुतौतस्यैव विष्णोरेव ऋत्वाधिपत्यंकथ्यते । तथाहि । कवयो विप्राः सुपर्णंसुष्ठुपरमानंदरूपंविष्णुमेक मेवसंतं वचोभिः ऋतुशब्दैरेव बहुधा केशवादिद्वादशधास्थितं कल्पयंति चिंतयंति । किंच । तंद्वादशधास्थितं प्रत्यध्वरेषु छंदांसिमंत्रान् दधतोदधानाः सोमस्यग्रहान् मिमतेनिर्मिमतइति । गार्हपत्यदेवयच्छब्दौव्याख्याति ॥ [१४।१०] गार्हपत्येनेति ॥ हेसंत्याग्नेत्वं गार्हपत्येनपात्रेण ऋतुनाऋतुपात्रेणच सोमंपीत्वेतिशेषः । ऋतुदेवतयासहेतिवा । यज्ञनीर्यज्ञानांप्रवर्तकोसि ।

सचत्वंदेवान्यातीतिदेवयन्यजमानस्तस्मैतत्प्रयोजनाय देवान्यज ॥१२॥२९॥१५॥ **आत्वा** ॥ नवर्चमेतदैंद्रंसूक्तं ॥ अत्रसूरचक्षसइत्येतद्व्याख्याति ॥ **सुष्ठ्विति** ॥ ऊरशब्दऊरीशब्दार्थश्छंदसिधातुनाविनापिप्रयुज्यते । सुष्ठु ऊराणि विषयानूरीकुर्वंति गृह्णंतीतिसूराणि चक्षांसि चक्षूंषियेषांतेसूरचक्षसइत्यर्थः । चक्षूषि हरीणामितिशेषः । हेइंद्रवृषणंवर्षितारं त्वात्वां सोमपीतयेसोमपानाय सूरचक्षस स्त्वातव हरयआवहंतु ॥ १ ॥ **इमाः** ॥ अध्यात्मंव्याख्याति ॥ **भक्तीति** ॥ हेहरी मनोबुद्धी इंद्रार्थमिमाघृतस्नुवः स्नेहसाम्याद्धृतंभक्तिः तयास्नुताः ष्णुप्रस्रवणे आर्द्राः धानाः बुद्धेर्धानानि वृत्तिविशेषाः संति तस्मादिह सुखतमेरथे शरीरे इंद्रं उपवक्षतः उपवहतं सन्निधापयतं । बाह्येत्वाह ॥ **धानाइति** ॥ धानाशब्देनप्रसिद्धाधनाअपीत्यर्थः । हेहरी अश्वौ युवयोरर्थे इमाघृतस्नुवोधानाःसंति । तस्मादिंद्रंसुखतमेरथेस्थितं सुखतमेनरथेनेतिवा इह यज्ञमुपवक्षतः ॥ २ ॥ **इंद्रं** ॥ ऋचस्तात्पर्यमाह ॥ **प्रातरिति** ॥ कथंसोमपीतिशब्देनतृतीयंसवनमुच्यते सोमपानस्यान्यत्रसद्भवात् अतआह ॥ **समाप्तत्वादिति** ॥ सोमपानस्यान्यत्रसद्भावेपितृतीयसवनेतस्यसमाप्तत्वात्पूर्णत्वादसाधारण्येनच्यपदेशाभवंतीतितद्विवक्षयासोमपीतिशब्देनतृतीयसवनंस्मृतं । अभिप्रायमाह ॥ **सदेति** ॥ ततश्चवयं प्रातः प्रातःसवने इंद्रंहवामहे अध्वरेयज्ञेप्रयति प्रवर्तमाने माध्यंदिनेसवनइतियावत् । इंद्रंहवामहे । सोमस्यपीतये तृतीयसवनेपि सोमपानायेंद्रंहवामहे । एवंसदातंहवामहइति । अन्यथापुनरिंद्रमितिव्यर्थंस्यात् । क्रियाशब्दोयमितिचेन्न पूर्वस्यापितथात्वेनविशेषणत्वायोगात् ॥ ३ ॥ **उपनः** ॥ हेइंद्र केशिभिःकेशवद्भिःप्रलंबकेशैः हरिभि रश्वैः नःसुतं सोमं उपागहि



उपागच्छ । हि यस्मात् त्वा त्वां सोमेसुतेसति हवामहे । तस्मात् ॥ ४ ॥ **सेमं** ॥ हेइंद्र सत्वं नइमंस्तोमं स्तुति मिदंसवनंच सुतंसोमंचोपागहि । आगत्यच तृषितोगौरोन गौरोमृगविशेषः। सइवसोमंपिब ॥ ५ ॥ ३० ॥ **इमेसोमासः** ॥ हेइंद्र इमेइंदवः इष्टदाः सुतासः अभिषुताः सोमासः सोमाः अधिबर्हिषि बर्हिष उपरिसंति तान्सोमान्सहसे बलार्थंपिब । इदंप्रसिद्धेंद्रेघटते । सोमपानादिनातस्यबलवृद्धिसद्भावात् । परमेश्वरेतुयोजनांतरंसूचयति ॥ **विष्णिवति** ॥ इंद्रशब्देनविष्णुविवक्षायांयजमानबलंसहः । कथंतर्ह्यन्वयइत्यतआह ॥ **तदिष्टस्येति** ॥ सहसे बलाय यजमानस्ययदिष्टंबलंज्ञानादिरूपंतस्य दानाय सोमंपिबेतियोजनीयमित्यर्थः । अथसहःशब्देनपरमेश्वरबलमंगीकृत्यघटयति ॥ **तदिति** ॥ तस्यविष्णोर्योगुणोबलाख्यस्तस्यव्यक्तिर्वात्रोच्यते । सहसे बलाय तवबलव्यक्त्यै । व्यक्तिश्चबलसाध्यमभीष्टसंपादनं । एवशब्दाभ्यांपरमेश्वरबलस्यसोमेनवृद्धिंनिराकरोति । तत्कुतइत्यतआह ॥ **पूर्णमिति** ॥ अनुग्रहइतिपराभीष्टसंपादनमुच्यते ॥ ६ ॥ **अयंते** ॥ हेइंद्र शंतमः स्तोतॄणामतिशयेनसुखप्रदो ऽयंस्तोमः स्तुतिः तेहृदिस्पृक् हृदयंगमोस्तु । अथस्तुत्याप्रीतस्त्वं सुत मभिषुतं सोमंपिब ॥ ७ ॥ **विश्वमित्** ॥ वृत्रहा इंद्रः मदाय यजमानहर्षाय स्वगुणस्यव्यक्तयेवा सोमपीतये विश्वं सर्वं सवनं सर्वेष्वपिसवनेषु सुतंसोमंप्रतिगच्छति ॥ ८ ॥ **सेमं** ॥ अत्रपृणेति स्वाध्यइतिपदद्वयंव्याख्याति ॥ **पृणेति** ॥ हेशतक्रतोसत्वंनोऽस्माकमिमंगवादिविषयंकाममभिलाषंगोभिरश्वैश्चगवाश्वंदत्वा आपृणसंपूरय । धातूनामनेकार्थत्वात् । पृणप्री

णनइत्यस्येदंरूपं । वयंतुस्वाध्यः स्वाङ्पूर्वाद्ध्यायतेःक्विप् । यणादेशश्छांदसः । नभूसुधियोरितिनत्रानिर्दिष्टमनित्यमिति वा । रूपग्रहणाद्वा । सुधीतयोभूत्वात्वात्वां । स्तवाम ॥ ९ ॥ ३१ ॥ १६ ॥ **इंद्रावरुणयोः** ॥ नवर्चमिदमैंद्रावरुणसूक्तं । अत्रेदृशइत्येतद्व्याख्याति ॥ **अविकारेणेति**[१४।१७] ॥ अहंसम्राजोःसम्यग्दीप्तयोरिंद्रावरुणयोः तत्कर्तृकमितियावत् । अवो ऽवनं रक्षा मावृणे प्रार्थये । तौचेंद्रावरुणौनोऽस्मानीदृशे भावप्रधानोनिर्देशः । इदानींयथासर्वदातथाभावोऽविकारेणसं स्थानं ईदृक्त्वं । तस्मै मृळातो रक्षेतां ॥ १ ॥ **गंतारा** ॥ अत्रमावतइतिपदंचर्षणिशब्दंचव्याख्याति ॥ **मावंतइति**[१४।१८] ॥ हेइंद्रावरुणौ । चर्षणीनांप्रजानां धर्तारौयुवां मावतोज्ञानयुक्तस्य विप्रस्यहवमाह्वानंप्रत्यवसे तस्यरक्षायै गंतारौस्थो हियस्मा त्तस्मादागच्छतमिति ॥ २ ॥ **अनुकामं** ॥ अत्रनेदिष्ठमितिपदंव्याख्याति ॥ **नेदिष्ठत्वमिति**[१४।१८] ॥ तर्हिकथमन्वय इत्यतआह ॥ **क्षिप्रमिति**[१४।१९] ॥ तच्चसमीपत्वमिहकालतोविवक्षितं । ततश्चक्षिप्रमितिभवति । तस्यचेमहइत्यनेनसंबंधइ त्यर्थः । हेइंद्रावरुणावस्मान् रायो वित्तस्यविषये अनुकामं यथेष्टमातर्पयेथां तृप्तान्कुरुतं । वयंच तौवां युवां नेदिष्ठं क्षिप्र मीमहे शरणमितिशेषः ॥ ३ ॥ **युवाकु** ॥ **युवयोः**[१४।१९] ॥ हेइंद्रावरुणौ वयं युवाकु । लुप्तषष्ठीबहुवचनांतमेतत् । युवयोरेवसंबं धिनीनां शचीनां वाक्यानां साधवोयूयमित्येवंरूपाणां तथायुवाकु सुमतीनां शोभनानांमतीनां सर्वशःकाले विषयाभूया म भवेम विकरणस्यलुक् । किंच वाजदाव्नां अन्नप्रदातॄणां सर्वदाविषयाभवेम । सर्वपूज्याभवेमेति ॥ ४ ॥ **इंद्रः** ॥ अत्र क्रतूक्थ्यशब्दार्थमाह ॥ **क्रतुरिति**[१४।२] ॥ क्रतुरिवक्रतुः यथाक्रतुःकर्ममध्येविशिष्टस्तथाप्रधानःक्रतुः । उक्थानि शस्त्राणि तैः



स्तुत्यउक्थ्यः । तर्हिशंस्यानांक्रतुरित्यनेनपुनरुक्तिरित्यतआह ॥ **विशेषतइति**[१४।२] ॥ शंस्यानांक्रतुरितिसामान्येनोक्तं । उक्थ्य इतिविशेषतः । अतोनदोषः । इंद्रःसहस्रदाव्नां भूरिदातॄणां शंस्यानां स्तुत्यानांच क्रतुर्भवति । उक्थ्यश्च । एवंवरुणोपीतियो ज्यं ॥ ५ ॥ ३२ ॥ **तयोरित्** ॥ **रक्षणेन**[१४।२] ॥ वयंतयोरिंद्रावरुणयोरिदेव अवसा रक्षणेन सनेम वित्तंज्ञानंवासदाग्नुमः । निधी महिच निखायस्थापयामच । सदा ताविंद्रावरुणौचिंतयामेतिवा । किंच । अस्माकंप्ररेचनं विसर्जनमर्थिनेदान मुतस्या देव ॥ ६ ॥ **इंद्रावरुण** ॥ अत्रेंद्रावरुणेतिसंहितायांह्रस्वांतंपठ्यते पदंतुदीर्घांततयाविच्छिद्यते तत्रतात्पर्यमाह ॥ **ह्रस्वतेति**[१४।२१] ॥ देवतयोरिंद्रावरुणयोरैक्यंविभागेनदर्शयति ॥ **स्वरूपेति**[१४।२२] ॥ तद्ध्रस्वतयाप्रकाशितमैक्यं हरौ विवक्षिते स्वरूपैक्यंज्ञेयं । अन्ययोस्त्विंद्रावरुणयोर्विवक्षायांमत्यैक्यंज्ञातव्यमित्यर्थः । अपिशब्दोर्थद्वयसमुच्चयार्थः । हेइंद्रावरुणावहं चित्राय भद्राय राधसे वां युवां हुवे आह्वयामि । युवामस्मान्सुजिग्युषः सुजितवतः कृतं कुरुतं ॥ ७ ॥ **इंद्रावरुणनु** ॥ **अद्य**[१४।२२] ॥ हेइंद्रावरुणौ नु अद्य वां युवां नु नुमः णुस्तुतौ स्तुमः । ननुकथमेतत् मस्प्रत्ययस्यादर्शनात् । धातुमात्रस्यचप्रयोगायोगात् कारकालाभाच्च अतआह ॥ **लोपइति**[१४।२२] ॥ लोपः मसूप्रत्ययस्य स्तुत्यादौपरमेश्वरस्यैवस्वातंत्र्यंनस्तोतुर्जीवस्येत्येतदर्थप्र तिपादनायेत्यर्थः । सूत्रतश्चिरंतनव्याकरणसूत्रात् । हिशब्देनास्यार्थस्यानुभवसिद्धतांचदर्शयति । प्रत्ययेनहिस्तोतुर्जीवस्य स्वातंत्र्यलक्षणंकर्तृत्वंवक्तव्यं । तल्लोपेनचकर्तृत्वस्यापिलोपोज्ञापितोभवति । धीष्वस्मद्बुद्धिषुवांयुवांसिषासंतीषु साधयतेःस्वा र्थेसन् धातुलोपइडभावश्च । साधयंतीषु सम्यक्प्रकाशयंतीषुसतीष्वेव अस्मद्बुद्धयोयुवांप्रकाशयंतियतस्तस्मादितियावत् ।

अस्मभ्यंशर्मयच्छतं ॥ ८ ॥ **प्रवां** ॥ **यथास्थित** ॥ हेइंद्रावरुणावहंयांहुवे आह्वयामि संपादयामि । यद्वातृतीयार्थेद्वितीया । ययावांहुवेसासुष्टुतिः शोभनास्तुतिर्वांप्राश्नोतु सम्यक्प्राप्नोतु । तस्यांच नममस्वातंत्र्यं किंतु यांसधस्तुतिं सधेतिसहार्थे अर्थसहितांस्तुतिं यथास्थितस्तुतिं मेसदैव ऋधाथे । ऋधवृद्धौ विकरणव्यत्ययोंतर्णीतण्यर्थताच । वर्धयेथे प्रवर्तयथः । सावांप्राश्नुतामितिसंबंधः ॥ ९ ॥ २३ ॥ १७ ॥ ४ ॥ **सोमानं** ॥ नवर्चमिदंसूक्तं ॥ अत्रपंचब्राह्मणस्पत्याः चतुर्थ्यामिंद्रश्च सोमश्च । पंचम्यांदक्षिणाच शिष्टाश्चतस्रःसादसस्पत्याः । अंत्यानाराशंसीवा । ब्राह्मणस्पत्यादिशब्दार्थस्तुभाष्ये ॥ **सौम्यं** ॥ हेब्रह्मणस्पते सुवाक्पते ब्रह्मणोवेदस्यपतेविष्णो वायोवा त्वंनोस्मान्प्रतिकारुण्यात्सोमानंस्वरणं सौम्यंशब्दं कृणुहि कुरु । यः शब्दःप्राक्कक्षीवंतमृषिंप्रतिदत्तः तादृशं । कःकक्षीवान् यऔशिजः यउशिक्सुतः सः । कक्षीवंतमितिपरोक्षत्वोक्त्यान्यत्वमाशंक्यपरिहरति ॥ **विवक्षितइति** ॥ योत्रमुनिर्विवक्षितोमेधातिथिःसएवकक्षीवानपि तस्मात्कक्षीवंतंप्रतीत्यस्यमांप्रतीत्येवार्थोभवति ॥ १ ॥ **योरेवान्** ॥ **वित्तवान्** ॥ योरेवान् रैशब्दस्यरयेर्मतावितिसंप्रसारणं वित्तवान् । यश्चामीवहा रोगहा वसुवित् ज्ञानवसुवेत्ता ज्ञातव्यंसर्वंजानातीतियावत् । यश्चपुष्टिवर्धनो भक्तानां । एवंभूतोयस्तुरः तुरत्वरणइत्यस्येदंरूपं । वेगान्निमित्ताद्धरिर्वायुर्वा सनोऽस्मान्सिषक्तु षचसमवाये अस्माभिःसयुग्भवेत् ॥ २ ॥ **मानः** ॥ **अररुष्ट** ॥ चरस्त्वर्थः । यस्त्वतिरोषणादररुष्ट । अरशब्दोलंशब्दार्थे । अलंरुष्यतीतिक्किप् । तस्याररुषोमर्त्यस्यधूर्तिःशंसोधूर्तिर्वचः । धुर्वीहिंसार्थः । उपद्रवकारिवचनं । नोस्मान्माप्रणक् प्रापूरणइत्यस्येदंरूपं । नपूरयेत् । स्वार्थेणिः । नप्रविशेत् । माप्रापदित्यर्थः । हेब्रह्मणस्पतेहरेवायोवानोस्मात्रक्ष । यथातद्वचोस्मान्नप्राप्नुयात्तथारक्षेत्यर्थः ॥ ३ ॥ **सघ** ॥ **घेति** ॥ घेतिशब्दोहेत्यस्यार्थे प्रसिद्धिद्योतकइत्यर्थः । एवार्थेवा । ततश्चावधृतिस्तस्यप्रतिपाद्येत्यर्थः । सोमशब्दंहरौव्याख्याति ॥ **सोमइति** ॥ सौम्यत्वमक्रौर्यं उना उद्रेण मया लक्ष्म्याच उश्चमाचउमेसहोमाभ्यांवर्ततइतिसोमइत्यर्थः । ऊमै र्भूतैः । भूतानिवैविश्वऊमाइतिश्रुतेः । सहऊमैर्वर्ततइतिसोमः । सर्वभूतानिप्रेरयतीत्यर्थः । नविद्यतेमाप्रमाइयत्तायस्यासावमः सारत्वात्सः सरतेर्डः । सश्चासावमश्चेतिसोमः प्रथमायाअलुक् । डस्वाप्रत्ययः । सघ सएव वीरोविक्रांतोनरिष्यतिनहिंस्यते ह । यंमर्त्यमिंद्रोब्रह्मणस्पतिःसोमश्चहिनोति हिगतौवृद्धौच । गच्छतिवर्धयतिच ॥ ४ ॥ **त्वंतं** ॥ अत्रदक्षिणाशब्दार्थमाह ॥ **साक्षादिति** ॥ साक्षाच्छ्रीरितिसरस्वत्यादिव्यावृत्त्यर्थं । दक्षेदक्षिणभागेइनःस्वामीविष्णुरस्याइतिदक्षिणेत्यर्थः । शकंध्वादित्वात्पररूपत्वं । दक्षिणेसरलोदारावित्यभिधानाच्चतुरत्वात्स्वयमेवजनार्दनोवादक्षिणेत्यर्थः । अत्रतच्छब्दश्रवणाद्योग्यार्थोयच्छब्दोध्याहार्यः । हेब्रह्मणस्पतेयस्त्वद्भक्तस्तंमर्त्यंत्वमंहसःपापात्पाहि । सोमइंद्रोदक्षिणाच पात्वितिप्रत्येकंसंबंधः ॥ ५ ॥ ३४ ॥ **सदसस्पतिं** ॥ अत्रसदसस्पतिशब्दार्थमाह ॥ **सदसस्पतिरिति** ॥ साक्षादितिमुख्ययावृत्त्या । सहिसदसःपालयिता । साक्षाद्वायुर्मुख्योवायुरपि । अथवा । साक्षादग्निर्मुख्योग्निःसदसस्पतिः । सनिमेधाशब्दार्थमाह ॥ **लाभेति** ॥ अयासिषमित्येतच्छेषोक्त्यापूरयति ॥ **शरणमिति** ॥ अहमद्भुतमाश्चर्यमिंद्रस्यप्रियंसर्वजनानामपिकाम्यंसनिंलाभरूपंमेधांज्ञानस्वरूपंसदसस्पतिमयासिषं शरणंगतोस्मि ॥ ६ ॥ **यस्मात्** ॥ यस्मात्सदसस्पतेर्ऋते विपश्चितश्चन ज्ञानिनोपि यज्ञोन

सिद्ध्यति सधीनांबुद्धीनांयोगंसंबंधमिन्वति । प्राप्तिकर्मायं । अत्रसदसस्पतेर्धियायोगःकथमित्यतआह ॥ **धीप्रेरकईति** ॥ यस्मात्सधीप्रेरकोयस्माच्चध्येयस्तस्माद्धीभिर्योगमाप्नुतइतियुक्तं ॥ ७ ॥ **आत्** ॥ **तस्मात्** ॥ सदसस्पतिंविना यज्ञोनसिध्यतीत्येतदत्रोपपाद्यते । यस्माद्विभुःसदसस्पतिःहविष्कृतिमृध्नोति हविष्कृतोयजतःस्वृधिंकरोति । यस्माच्चाध्वरं यज्ञंप्रांचंउत्तमंप्रकृष्टतयांचतिप्रवर्ततइतिकृणोतिकरोति यस्माच्चदेवेषु देवविषयाणि होत्रा होत्राणि । ह्वयतेरूपमेतत् । देवाह्वानानिगच्छति प्राप्नोति स्वीकरोति । आत्तस्मात्तेनविनायज्ञोनसिध्यति । अत्रवृद्धिकरणंसफलीकरणं । उत्तमकरणंतुदेवोपभोग्यतापादनं । त्रयाणांचोत्तरोत्तरोहेतुः ॥ ८ ॥ **नराशंसं** ॥ अत्रनराशंसशब्दार्थमाह ॥ **नरैरिति** ॥ नरैः पुरुषैः ब्राह्मणादिभिः आशंस्यतेस्तूयतइतिनराशंसः । सुधृष्टमशब्दार्थमाह ॥ **धृष्टेति** ॥ समानेलोपइतिसूत्रात्तशब्दस्यलोपइत्युक्तंभवति । तमबर्थेमप्रत्ययइतिवा । सप्रथस्तमशब्दार्थमाह ॥ **गुणानामिति** ॥ प्रथप्रख्याने । ततोभावेऽसुन् । सह प्रथसागुणानांप्रथिम्नावर्ततइतिसप्रथाः । आधिक्येनसप्रथाः सप्रथस्तमइत्युक्तंभवति । तृतीयपादंयोजयति ॥ **यस्येति** ॥ अत्रयस्येतिप्रियमित्यपिचाध्याह्रियते । गृहंमखइत्यनेनमखस(स्)शब्दोमखपर्यायोनपुंसकलिंगः कर्मधारयश्चसमासइत्युक्तंभवति । यद्वागृहंमखइत्यनेनद्वंद्वैकवद्भावंसूचयति । तदयमर्थः । यस्यनराशंसस्यसद्ममखसंगृहरूपोमखः । यद्वा अग्निगृहंमखश्चदिवः स्वर्गादप्यतिशयेनप्रियमिवेयते प्रतीयते तंसुधृष्टमं प्रगल्भतमं सप्रथस्तमं अतिशयेनगुणविस्तारयुक्तंनराशंसं



अहमपश्यमिति ॥ ९ ॥ ३५ ॥ १८ ॥ **प्रतित्यं** ॥ नवर्चमाग्निमारुतमिदंसूक्तं ॥ **यज्ञं** ॥ हेअग्ने गोपीथायरक्षणाय चारुंभद्रं सम्यक्शास्त्रोक्तलक्षणं त्वं तं प्रसिद्धमध्वरंयज्ञंप्रतिप्रति प्रतिरयंवीप्सायांकर्मप्रवचनीयइतिदर्शयितुंद्विर्वचनं । सर्वान्यज्ञान्प्रतिप्रहूयसे आहूयसे यस्मात्तस्मान्मरुद्भिःसहागहि आगच्छ ॥ १ ॥ **नहि** ॥ **महान्** ॥ हेअग्नेक्रतुं प्रत्यागंतुमितिशेषः । तवसकाशात्परो न्यस्त्वदन्योदेवोवा महोमहान्पूज्योनहिनैवास्ति । मर्त्यस्तुनैवास्तीतिकिमु । तस्मान्मरुद्भिःसहागहि । अत्राग्नेःसर्वोत्तमत्वमुक्तंतद्विभागेनव्याख्याति ॥ **विष्णौहीति** ॥ अयमर्थ स्त्वदन्योमहान्नैवेत्ययमर्थोऽग्निशब्देनविष्णौ विवक्षिते मुख्यतः संकोचेनविना व्याख्यातव्यः । प्रसिद्धाग्नौतुविवक्षितेकांश्चित्सुरान्विनेतिसंकोचेनव्याख्यातव्यइत्यर्थः ॥ २ ॥ **येमहः** ॥ **महतः** ॥ येअद्रुहोनद्रुह्यंतीति अद्रोग्धारः साधूनामितिशेषः । विश्वेदेवासोमरुतो महो महतो रजसो रंजकात्स्वर्गादितियावत् । ल्यब्लोपनिमित्तापंचमी । स्वर्गमधिष्ठायैवविदु रखिलमितिशेषः । तैर्दूरदर्शनादिमद्भिर्मरुद्भिरग्नआगहि ॥ ३ ॥ **यउग्राः** ॥ अत्रार्कमानृचुरित्येतावद्व्याख्याति ॥ **प्राप्ताइति** ॥ सर्वगतस्यहरेरर्कप्राप्तिः कस्माद्विशेषेणोच्यतइत्यतआह ॥ **विशेषेणेति** ॥ तत्रार्के तस्माद्विशेषोक्ति युक्तेतिशेषः । येउग्राःक्रूरादैत्यान्प्रति ओजसासामर्थ्येनानाधृष्टासोऽनाधर्षिताअनभिभूताअर्कमानृचुःप्राप्ताः । अर्चतेर्गत्यर्थस्येदंरूपं । अर्केविशेषेणसंनिहिताः तैर्मरुद्भिरग्नआगहि ॥ ४ ॥ **येशुभ्राः** ॥ **शुद्धाः** ॥ शुभ्राः शुद्धाः । घोरंदैत्यान्प्रतिक्रूरंवर्पोबलंयेषांतेघोरवर्पसः । सुक्षत्रासः क्षिनिवासगत्योरित्यतो

धिकरणेडः । क्षं क्षेत्रं तस्मिन्नुपपदेत्रायतेरातोनुपसर्गेकइतिकः । सुष्ठुक्षेत्रत्रातारः । क्षतितोपित्रातारइतिवा सुक्षत्राः । क्षिक्ष यइत्यस्यक्षमितिरूपं अन्यत्समानं । रिशादसः रमेर्डिः । रि रम्यं । कथं सत् निर्दोषं शं सुखं । तददंतीतिरम्यसत्सुखभोक्ता रः । एवंभूतायेमरुतोमाभिःवेदैःरुतत्वतःकारणात् । तैर्मरुद्भिरग्नआगहि । अत्रमरुदग्निशब्दाभ्यांमुख्यतोविष्णुरभिधीयत इतिसिद्धमेव । रूपविशेषंतुप्रतिपादयन्नाह ॥ **एतादृशानीति** ॥ इदमध्यात्ममुक्तं । एतादृशानीत्युक्तगुणकानि । प्राण स्थानींद्रियस्थानि प्राणादिवायुस्थानिवा । मरुच्छशब्दानि अग्निस्थानि जाठराग्निस्थान्यग्निशब्दानि पृथगधिष्ठानांतरस्थ तांविनेत्यर्थः । देवगानीतिमरुदग्निगतानि । अनेनबाह्यमुक्तं ॥ ५ ॥ ३६ ॥ **येनाकस्य** ॥ **स्वर्गोपरि** ॥ येदेवासःसुरा मरुतो नाकस्याधिस्वर्गोपरिदिविरोचने रुचदीप्तौ सूर्यादौप्रकाशे आसते । तैर्मरुद्भिरग्नआगहि । अत्रनाकस्याधिदिवीति पुनरुक्तिरित्यतोर्थभेदमाह ॥ **नाकइति** ॥ कं सुखं । तद्विरुद्धंदुःखमकं । नविद्यतेअकमस्मिन्निर्दुःखरूपत्वान्नाकः । द्यौः प्रकाशस्वरूपतः । दीव्यतेर्हिरूपमेतत् ॥ ६ ॥ **यईखयंति** ॥ **प्रतोलयंति** ॥ येपर्वतान्गिरीनींखयंति । ईखिर्गत्यर्थः । गमयंति प्रतोलयंतीतियावत् । तथार्णवमुदकवंतंसमुद्रंसागरंचतिरस्तिरस्कृत्यवर्तंते । विष्णुविषयेपर्वतान्समुद्रंचेतिव्याच ष्टे ॥ **पुरुषानिति** ॥ कथंपुरुषाःपर्वतशब्दार्थाइत्यतआह ॥ **पर्ववंतोहीति** ॥ यस्मात्पुरुषाज्जन्मनापर्ववंतोजन्मलक्षणपर्व वंतःतस्मात्पर्वताः । मत्त्वर्थेतः । प्रकृतिःकथंसमुद्रशब्देत्यतआह ॥ **सुसमुद्रेकादिति** ॥ अर्णवत्वंचतस्याजलादिभूताधा रत्वं पुरुषादीनामींखनादिकंव्याकुर्वन्मरुद्भिरग्नआगहीत्येतदपिव्याख्याति ॥ **प्रकृतेरिति** ॥ मरुद्भिरितिसहयोगलक्षणा



तृतीया ततःसहयुक्तेऽप्रधानइतिमरुतामप्राधान्यंप्रसक्तं तन्निरासार्थमाह ॥ **समसद्गुणैरिति** ॥ ७ ॥ **आये** येरश्मिभि स्तेजोभिःसर्वमातन्वंति व्याप्नुवंति । तथाओजसासमुद्रंतिरस्कुर्वंति । तैर्मरुद्भिरग्नआगहि ॥ ८ ॥ **अभित्वा** ॥ अहं त्वाअभि त्वांप्रति पूर्वपीतये प्रथमपानाय सोम्यंसोमरूपंमधुस्वादुद्रव्यं सृजामि निर्मिमामि । तस्मान्मरुद्भिरग्नआगहि ॥ ९ ॥ ३७ ॥ १९ ॥ **इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमदृग्भाष्यस्यविवरणेश्रीमज्जयती र्थमुनिविरचितेप्रथमोध्यायः** ॥ १ ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ हरिः ॐ ॥ **अयंदेवाय** ॥ अष्टर्चमिदमार्भवंसू
क्तं । यद्यपित्रयाणामृभुनामैकएव । विभ्वा वाजश्चापरौ । तथापिसाहचर्यादेकस्यनाम्नात्रयोप्युच्यंते । तत्राद्यामृचंविष्णौ
व्याख्याति ॥ [१५।२०] **सर्वजन्मेति** ॥ विप्रेभिः विप्रैःमेधाविभिः । कैः काण्वाद्यैः । कण्वपुत्रोमेधातिथिस्तदाद्यैः । जन्मने
जनेःकर्तरिमनिन् । सर्वजन्मकृते सर्वेषांकार्याणांजनयित्रे । देवाय देवशब्दोव्याख्यातः । तस्याभिधेयंविष्णुदेवाय । अ
स्यंतेक्षिप्यंतेवर्णाअनयेत्यासा तया मुखेन । नकेवलंमनसाकिंतुवचसापीतिभावः । अयंस्तोमः इयंबुद्धिस्थास्तुति रका
रिकृता । देवायजन्मनइतितादर्थ्येचतुर्थी । षष्ठ्यर्थेवा । तेचैकस्यापिबहवइत्युक्तत्वाद्विप्रेभिरितिबहुवचनं । अनादि
त्वादकारीति । कस्मात् । रत्नधातमः । यत् यस्मात्साविष्णुस्तुतिरेवरतिधातमा अतिशयेनसुखदात्री । डुधाञ्दान
धारणयोः । तस्मादकारि । ऋभुविषयेतु देवायजन्मनइतिदेवेभ्योजातेभ्यइतियोज्यं । मानुषाएवहितेदेवाजाताइतिनि
गमः ॥ १ ॥ **यइंद्राय** ॥ [१५।२१] **वाङ्मात्रेणैव** ॥ येऋभवः इंद्रायेंद्रस्यार्थे वचोयुजावचसायुज्येतेइतिसारथेर्वाङ्मात्रेणैवरथे
योज्यौ । हरी वाजिनौ । मनसा संकल्पमात्रेण । ततक्षुः तक्षतिःकरोतिकर्मा चक्रुः । येचशमीभिः विष्णुनिष्ठाभिः । शमोम
न्निष्ठताबुद्धेरितिवचनात् । स्त्रीलिंगंङीप्‌च्छांदसः । यज्ञं यज्ञभागं । आशत अशूव्याप्तौ । आश्नुवत लेभिरे । तेभ्यः
स्तोमोकारीतिपूर्वेणसंबंधः । नन्विंद्रस्यकर्मकराऋभवइति तेष्विंद्रार्थंहरिनिर्माणमुपपद्यते । अदेवाश्चदेवत्वंप्राप्ताइतिशमी
भिर्यज्ञमाशतेत्यपि । विष्णौतुकथमित्यतआह ॥ [१५।२२] **भगवांश्चेति** ॥ एतद्धरिनिर्माणादिकं । एतदित्यनेनैवसिद्धेऽऽखिलमिति

वचनमागामिनोरथनिर्माणादेरपिसंग्रहार्थं । कथं । ऋभुषुस्थितः । तास्ताःक्रियास्तत्तदंतर्गतेनभगवतैवक्रियंतइतिहिशास्त्रं ।
पक्षांतरमाह ॥ [१६।१] **पृथग्वेति** ॥ ऋभुषुस्थितेनरूपेणविनापिपृथगीश्वररूपेणैवैतदखिलंकृतवान् । कथं । फलदातृत्वात् इंद्रादिभ्य
इतिशेषः । अत्रैवंयोजना । येभगवद्रूपविशेषाइंद्रानुष्ठिताभिःशमीभिःप्रसन्नाःसंतस्तदीयंयज्ञमाशत ऋभुभिःकरणैरिंद्रायह
रीचततक्षुरिति । एवमुत्तरत्रापि । अध्यात्मंतु । ये इंद्राय परमेश्वराय तंविषयीकर्तुं भक्तानांहरी मनोबुद्ध्याख्यौ वचोयुजौ
वेदानुसारिणौ ततक्षुः तदीयाभिःशमीभिस्तदीयंज्ञानयज्ञंचाशतेति ॥ २ ॥ **तक्षन्** ॥ अत्ररथविशेषणंपरिज्मानमित्येतद्व्या
ख्याति ॥ [१६।१] **परितइति** ॥ ज्मांभूमिं वृत्तौक्रियायाअंतर्भावाच्चरेदित्युक्तं । सबर्दुघामित्यत्रसबरित्यस्यार्थमाह ॥ [१६।१] **काम्यमि
ति** ॥ कुतइतितत्राह ॥ [१६।१] **बकामनइति** ॥ अस्मा द्धातुव्याख्यानात् । सशब्दस्तुकर्मार्थप्रत्ययसन्नियोगेनधातोरागमइति
हृदयं । ऋभवो नासत्याभ्यां । अश्विनोरेकोनासत्यः । साहचर्यादुभावपिनासत्यावुच्येते । यथादस्राविति । अतएवान्यत्रना
सत्यदस्रावित्याचार्याः । अश्विनोरर्थे परिज्मानं सकलपृथिवीगामिनं अप्रतिहतगतिं सुखंरथं । तक्षन् अतक्षन् अकुर्वन् । सब
र्दुघां काम्यस्यसर्वस्यदोग्ध्रीं धेनुंचातक्षन् ॥ ३ ॥ **युवाना** ॥ इहऋभवःस्वीयौपितरौपुनर्युवानावक्रतेत्युच्यते तत्रकएषांपि
तेत्याकांक्षायामाह ॥ [१६।२] **सुधन्वेति** ॥ ऋभु र्विभ्वा वाज इतिसुधन्वनआंगिरसस्यत्रयःपुत्रारथकाराबभूवुरितिहिवक्ष्यते । पूर्व
स्यामृचिसबर्दुघांधेनुमतक्षन्नित्युक्तं कस्यासौकामधेनुरित्यपेक्षायामाह ॥ [१६।२] **बृहस्पतेरिति** ॥ बृहस्पतिर्विश्वरूपामुपाजतेति
वक्ष्यमाणत्वात् । ऋजूयवइतिव्याचष्टे ॥ [१६।२] **ऋजुभक्ताइति** ॥ ऋजून्ब्रह्मपदयोग्यान्देवान्कामयंतइतिऋजूयवः । सुपआ

त्मनःक्यच् । तदंतात्ताच्छीलिकउकारः । भक्ताहिस्वामिनंकामयंते । विष्ट्यक्रतेतिव्याख्याति ॥ अवे[१।६।३]तनमिति ॥ यद्य पिविष्टिरितिकर्मसामान्यनामसुपठितं । तथापिरूढिवशात्वेतनेनविनास्वामिनोबलाद्यत्कर्मक्रियतेतद्विष्टिरित्युच्यते । तत्ते ऽक्रत । ऋभवःस्वीयौपितरौ मातापितरौ जीर्णौसंतौ युवानावक्रतअकुर्वन् । कथं । सत्यमंत्राः अमोघमंत्राः । तदपिकथं । ऋजू यवः । किंचविष्टी सुपांसुलुक्पूर्वसवर्णेतिविष्टिशब्दात्परस्याःद्वितीयायाःपूर्वसवर्णः । देवानांविष्टिं एकंचसमंचतुरःकृणोतने त्यादिवक्ष्यमाणमक्रत । ऋभुशब्दंभगवतिनिर्वक्ति ॥ ऋ[१।६।३]तंभूमिरिति ॥ ऋगतौ । ततःपरस्यक्तस्यलोपः । भूशब्दस्यचह्रस्वः । निर्वचनत्वात् । भूमिराश्रयः । ऋतंभूमिरित्यस्यैवव्याख्यानंज्ञानभूमिरिति । यस्मात्तस्मादित्यध्याहारः । ऋभुशब्दंदेवतां तरेनिर्वक्ति ॥ ये[१।६।३]षामिति ॥ येषांदेवानांऋतं कर्म भूतं सत्यं तेप्यृभवईरिताः । पूर्ववदत्रापिलोपविकारौद्रष्टव्यौ । यज्ञ भागाप्तितोपीतिनिर्वचनांतरं । ऋताभागंऋभवः । ऋतशब्दस्यऋकारः भागशब्दस्यचभुशब्दः पृषोदरादित्वात् । यद्वा ऋत शब्दोयज्ञनामा तस्यऋकारादेशः । भूतशब्दोभूप्राप्तावित्यस्यरूपं । ऋतं यज्ञभागं भूताः प्राप्ताइत्यृभवः ॥ ४ ॥ सं[१।६।४]वः ॥ सहेंद्रेण ॥ हेऋभवो मदासोमदहेतवः इंदवःसोमाः मरुत्वतेंद्रेणसह राजभिः आदित्यैश्चसह वः युष्माकं । द्वितीयार्थे षष्ठी । समग्मत संप्राप्ताः ॥ ५ ॥ १ ॥ उत्तत्यं ॥ कथागर्भेयमृक् । अतःकथामाह ॥ ए[१।६।४]कमिति ॥ चतुर श्चमसान् । तानृभून् । एवशब्दएकमित्यनेनसंबध्यते । तद्दुष्करमपि तै ऋभुभिः । त्वष्टुरित्युपलक्षणं देवैःप्रेषितौत्वष्टाग्निश्चऋभूनाहतुः इममेकं जीर्णंचमसं नवानेतत्प्रमाणान्चतुरश्चमसान्कुरुतेति । तेब्रुवन्द्वौवात्रीन्वाकरिष्यामः । चत्वारोदुष्कराइति । पुनश्चाग्निनात्व



ष्ट्राचनिर्बंधेकृतेद्व्यादिस्वोक्तंपरित्यज्यचतुर्निर्माणरूपंत्वष्ट्रादीनांशुश्रूषणंतैःकृतमिति । ऋचंव्याख्याति ॥ त[१।६।५]मिति ॥ उत अन्यच्च । ऋभव स्त्यं तं । पूर्वकृतं । जीर्णमेकमेवचमसं पुनः नवं नवान् चतुरश्चमसानकर्त अक्रत अकुर्वत । एवंत्वष्टुर्देवस्य निष्कृतं शुश्रूषणं अक्रत ॥ ६ ॥ तेनः ॥ स[१।६।६]प्तसंख्यानि ॥ यएवंभूताऋभवस्ते नोऽस्माकं सुन्वतेयजमानाय त्रिःत्रिकाले ष्वपि साप्तानिसप्तसंख्यानि स्वार्थिकोत्रतद्धितः सप्तैवसाप्तानि । सप्तनोऽणछंदसीतिवर्गेवाऽण् । छांदसत्वादाद्युदात्तत्वं । सप्तनो ञ्छंदसीतिसूत्रपाठे नविरोधः । रत्नानिधत्तन दत्त । देवतांतरपक्षे चक्रंरथोमणिर्भार्यानिधिरश्वोगजस्तथा । एतानिसप्तरत्ना निपूर्वेषांचक्रवर्तिनामितिपुराणोक्तानिसप्तरत्नानि । विष्णुपक्षेत्वाह ॥ पु[१।६।६]राणेति ॥ वेदांश्चतुरः । हरिः चेद्विवक्षित स्तदे तिशेषः । तथाशब्दोवक्ष्यमाणसमुच्चये । अथापिवेतिनिपातसमुच्चयःपक्षांतरद्योतकः । सप्तछंदांसिवा गायत्र्यादीनि । उत्तरार्धव्याख्याति ॥ एकै[१।६।७]कमिति ॥ एषांरत्नानांमध्येएकमेकं एकैकंरत्नंसुशस्तिभिः प्रशंसाहेतुभिःतत्तद्गुणैरखिलैःसहव र्तमानं । तथाभूतानि ॥७॥ अधारयंत ॥ सु[१।६।८]कर्मणा ॥ जगतोधारकत्वेनस्वयंस्थिरत्वेनचवह्नयः वह्निनामानः । अनेकार्थ त्वाद्धातूनांवहतिरत्रधृतौवर्तते । ऋभवःसुकृत्यया सुकर्मणा देवेषु देवानांमध्येभूत्वा । यज्ञियंभागं यज्ञार्हभागं यज्ञभागं । अभ जंत अभजन् प्राप्ताः । अधारयंत अधारयन्नपि । भजनातिरिक्तंधारणंनास्तीत्यतःपौनरुक्त्यं तत्राह ॥ य[१।६।८]थाऽगतिरिति ॥ यथा येनप्रकारेणप्राप्तस्यभागस्यागतिरविच्छेदस्तथाऽधारयन् । ततश्चेदानीमभजंत । अधारयंत कालांतरेपिस्थिरीकृतवं तइत्यर्थः । यद्वा यथाविश्वस्यगतिःप्रवृत्तिर्भवतितथाधारकत्वेनेतियोज्यं । एवंचधातोरर्थद्वयमंगीकृतंभवति ॥ ८ ॥ २ ॥

॥१॥ इहेंद्राग्नी ॥ षळर्चमिदमैंद्राग्नंसूक्तं । अत्रपदानिव्यवहितानीत्यन्वयंदर्शयन्व्याख्याति ॥ [१६।९] ह्वयेसोममिति ॥ अहमि हयज्ञे इंद्राग्नीउपह्वये । कस्मात् । यस्मात्तयो रिंद्राग्न्यो रित् एव । स्तोमं स्तुतिं । उश्मसि सर्वेवयंकामयामहे । अनेन स्तोमंप्रत्युपह्वयइत्युक्तंभवति । किंच ता तौ सोमपातमा अतिशयेनसोमानांपाताराविंद्राग्नी सोमंचोप प्रति ह्वयेइति पूर्वेणसंबंधः ॥ १ ॥ तायज्ञेषु ॥ शुंभतेत्यत्रप्रकृतेरर्थमाह ॥ [१६।९] शुंभनमिति ॥ हेनरः ऋत्विजः । तौ प्रकृताविंद्राग्नी । यज्ञेषुप्रशंसत प्रकर्षेणस्तुत । शुंभत भूषयतच । शुभशुंभशोभार्थे । अंतर्भावितण्यर्थः । किंच ताविंद्राग्नी गात्रेषु सामसु गायत । तृतीयार्थेसप्तमी । गायत्रैःस्तुतेत्यर्थः ॥ २ ॥ तामित्रस्य ॥ प्रथमपादंव्याख्याति ॥ [१६।९] ताविति ॥ यौ तौ प्रसिद्धौ मित्रस्य हरेः प्रशस्तये प्रशंसार्थौभवतः । देवैर्हिपरमेश्वरस्यप्रशंसालोकेषुज्ञाप्यते । तौसोमपाविंद्राग्नी । सोमपीतये हवामहे ॥३॥ उग्रासंता ॥ वयमुग्रौ क्रुरौशत्रूणां । संतौ प्रशस्ताविंद्राग्नी । इदंसवन मिमंयज्ञं । सुतं सोमंचप्रति हवामहे । तदवधार्यें द्राग्नीइहागच्छतां ॥ ४ ॥ तामहांता ॥ रक्षइत्येकवचनंजाताविल्याशयेनाह ॥ [१६।१०] रक्षांसीति ॥ नन्वप्रजाःसंत्वत्रिणइत्य त्रप्रकृतरक्षोग्रहणेलिंगवचनव्यत्यासःस्यात् तदग्रहणेतुविशेष्यांतरंनदृश्यतइत्यतोभिन्नविषयतांतावच्चशब्देनसूचयति । न नूक्तंतर्हिविशेष्यांतरंनदृश्यतइतितत्राह ॥ [१६।१०] रक्षोरक्ष्याःप्रजाइति ॥ इदमुक्तंभवति । यद्यप्युत्तरार्धेपिरक्षइत्येवानुवर्तते । तथापितच्छब्देनतदीयाःप्रजाःलक्ष्यंते । उक्तानुपपत्तेरेव । रक्ष्यरक्षकभावसंबंधस्यचविद्यमानत्वादिति । रक्षोभीरक्ष्याःरक्षो रक्ष्याः । प्रजाः उत्तरार्धेलक्ष्यंतइतिशेषः । तास्वत्रिणइत्येतद्व्याख्याति ॥ [१६।१०] यस्मादिति ॥ यस्मान्मार्गत्रयोज्झितास्तस्मादत्र्यः

वेदेतुत्रयएषांसंतीतित्रिणःव्रीह्यादिलक्षणइनिः नत्रिणः अत्रिणः । जनाइतिपुलिंगप्रयोगः । भाष्येतुप्रजाइत्यभिधेयांतरकथन एवतात्पर्यं नलिंगे । नविद्यंतेत्रयोयासामितिबहुव्रीहेर्ङीप् । मार्गत्रयोज्झितत्वंकथमित्यतआह ॥ [१६।११] पितृदेवेति ॥ पितृणांग तिःस्वर्गः । देवानांगतिर्मोक्षः । मनुष्याणांगतिःपृथिवी । एतदपिकथमित्यतआह ॥ [१६।११] अधोगतेरिति ॥ हेइंद्राग्नी यौयुवां महांतौ पूज्यौ सदसस्पती सदसोयज्ञगृहविशेषस्यस्वामिनौ तौ रक्षो रक्षांसि उब्जतं । यद्यप्युब्जआर्जवइतिपठ्यते तथाप्यत्र सामर्थ्याद्वधार्थोग्राह्यः । हतं । किंचात्रिणो गतित्रयरहिताः रक्षस्संबंधिनोजनाअप्रजास्संतु ॥ ५ ॥ तेनसत्येन ॥ प्रथ मपादंप्रसिद्धेंद्राग्न्योर्योजयति ॥ [१६।११] सत्येनेति ॥ विष्णौयोजयति ॥ [१६।११] स्वगुणैरेवेति ॥ विष्णुर्विवक्षितश्चेत्तदासत्येनेत्यस्य स्वगुणैरित्येवार्थइत्यर्थः । प्रचेतुनइत्येतद्व्याख्याति ॥ [१६।१२] प्रकृष्टइति ॥ पदइत्यस्यार्थमाह ॥ [१६।१२] पदइति ॥ अधीत्येतद्व्याचष्टे ॥ [१६।१२] सम्यगिति ॥ सम्यक्त्वंकिमित्यतआह ॥ [१६।१२] तस्मिन्नेवेति ॥ स्वभावतः फलानपेक्षया । नन्विंद्राग्नीसदापरमेश्वरेजागरणवं तावेव तत्कथंजागृतमित्युच्यतइत्यतआह ॥ [१६।१२] तथेति ॥ स्वभावतइत्येतदत्रापिसंबध्यते । स्वभावतो विधानेनविना । तथा स्थितौतु । जाग्रतौ स्थितावेवेंद्राग्नीजागृतमितिलकारव्यत्ययेनोक्ताविति । नन्विदंविष्णौदुर्घटं करणाधिकरणकर्तृत्वा दीनांभेदसमानाधिकरणत्वादित्यतआह ॥ [१६।१३] विष्णुरिति ॥ विशेषतः भेदप्रतिनिधिविशेषशक्त्या उक्तः । करणत्वा दिनेतिशेषः । हेइंद्राग्नीयुवांतेन प्रसिद्धेन सत्येन गुणपूर्णेनविष्णुना । तत्प्रसादनेतियावत् । प्रचेतुने प्रकृष्टचेने । आ

धिक्यार्थउकारः । पदे गम्ये । पदगतौ । कर्मण्यकारः । हरावधिसम्यगनन्ययोगेनस्वभावतो वाजागृतं तद्विषयेजागरणवंतौस्थः । एवंभूतावस्मभ्यंशर्मसुखंयच्छतं । यद्वा हेइंद्राग्नी युवां तेनसत्येन प्रसिद्धेनेच्छादिनागुणेन स्वविषयेजागृतं स्वसामर्थ्येनैवस्वप्रकाशौस्थइति ॥ ६ ॥ ३ ॥ २ ॥ **प्रातर्युजा** ॥ एकविंशत्यृचमिदंसूक्तं । तत्राद्याश्चतस्रआश्विन्यः । प्रातर्युजावित्येतदश्विनोर्व्याख्याति ॥ **प्रातःस्तुतत्वेनेति**[१६।१३] ॥ प्रातःसवनेस्तुतत्वेन । भगवतिव्याख्याति ॥ **भगवांश्चेति**[१६।१३] ॥ प्रातर्योगेन हंसोपास्तिलक्षणेन गम्यतइति प्रातर्युगितिप्रोक्तइत्यर्थः । उपायोपेययोरभेदोपचारात् । विबोधयेत्येतदज्ञानसूचकं । अतःसयुक्तिकमन्यथाव्याख्याति ॥ **स्तुतिशब्दइति**[१६।१४] ॥ यस्मात्स्तुत्यर्थःशब्दःस्तुतौ गुणसंकीर्तनएवव्याख्येयोनदोषसूचकतया प्रकरणासंगतेः । अतोबोधयेतियदुक्तंतत्त्र लोट्प्रत्ययोबुध्यतइतिवर्तमानकोवर्तमानार्थोव्याख्येयइत्यर्थः । यथास्थितव्याख्यानेकथंस्तुतित्वव्याघातइत्यतआह ॥ **परतइति**[१६।१४] ॥ सर्वज्ञत्वादितिशेषः । परतो ऋत्विगादितः । हेहोतः प्रातर्युजावश्विनौविबोधय । विबुद्धावेववर्तेते तौप्रार्थयस्वेतियावत् । ताविहास्यसोमस्यपीतयेआगच्छतां ॥ १ ॥ **यासुरथा** ॥ यावश्विनावुभौदेवौ । सुरथौ शोभनरथौ । रथितमौ अतिशयितरथिनौ । दिविस्पृशौ दिविवर्तमानौ । तौहवामहे ॥ २ ॥ **यावां** ॥ अत्रकशयायज्ञस्यमेक्षणंप्रार्थ्यते । तत्किंनिमित्तमित्यतआह ॥ **कशयेति**[१६।१५] ॥ कुरुतो श्विनौ । इतिप्रार्थितमितिशेषः । मिमिक्षतमित्यत्रप्रकृत्यर्थमाह ॥ **स्पर्शइति**[१६।१५] ॥ सूनृतावतीत्येतत्कशायां योजयति ॥ **वेदेति**[१६।१६] ॥ यज्ञस्यक्रियारूपस्यकथंकशयास्पृष्टिः कथंचमधुरत्वमित्याशंकांपरिहरन्व्याख्याति ॥ **तयैवेति**[१६।१६] ॥ हे



अश्विनौ या वां युवयोःसंबंधिनी । मधुमती स्वादुमती स्वादुत्वकारिणी । सूनृतावती सूनृतावेदवाणी तद्वती तत्स्तुता । कशा अश्वादिनोदिनी । तया अस्मदीयंयज्ञं यज्ञसंबंधिघृतसोमादिवस्तु । मिमिक्षतं स्पृशतं ॥३॥ **नह्विवां** ॥ हेअश्विनौ यत्रसोमिनो यजमानस्य । गृहं गृहे । यत्रेतिद्वितीयार्थेसप्तमी । रथेनगच्छथः आगच्छथः ।तद्वांयुवयोर्दूरके दूरे नास्तिहि । दूरंनभवतीहि तस्मादागच्छतं ॥ ४ ॥ **हिरण्यपाणिं** ॥ अतःपराश्चतस्रःसावित्र्यः । विष्णौहिरण्यपाणिशब्दंव्याख्याति ॥ **हितत्वादिति**[१६।१७] ॥जगतइतिशेषः। नारायणस्वरूपमेव नतुपाणिमात्रं । हितत्वाद्रमणीयत्वाद्धिरण्यं । आदेशादिकमूह्यं । वर्णतोपिच(वा) । हिरण्यसदृशत्वाद्धिरण्यं । अतोसौहिरण्यपाणिरुच्यतइत्यर्थः । पाणिशब्दोरूपार्थः । कथमित्यतआह ॥ **पाणीति**[१६।१७] ॥ सवितृशब्दव्याख्यानंस्मारयति ॥ **स्रष्टृत्वादिति**[१६।१७] ॥ सपदंचेत्तेतिव्याख्याति ॥ **संज्ञातेति**[१६।१८] ॥ पदं स्वरूपं । एकवाक्यत्वेसदेवतेत्यनुपपन्नंस्यादित्यतोवाक्यभेदेनव्याख्याति ॥ **सएवेति**[१६।१८] ॥ अत्रदेवताशब्दोदेवपर्यायोगृहीतः । यद्वा । अयंभावेतल् । देवस्यभावोदेवता । देवशब्दप्रवृत्तिनिमित्तं । कथंतर्हिसदेवतेतिव्यपदेशइत्यतआह ॥ **तद्गुणैक्येनेति** ॥ सएवेत्यनुवर्तते । तस्यपरमेश्वरस्यगुणानांचक्रीडादीनामैक्येनकारणेनदेवता देवत्वं सएवेतियुक्तमित्यर्थः । अहंहिरण्यपाणिंहितंचरमणीयंचेतिवाहिण्यवर्णत्वाद्वाहिरण्यंपाणिशब्दंरूपंयस्यतं । सवितार मूतये रक्षाद्यर्थ मुपह्वये । कुतः ससविता पदं स्वरूपं स्वस्यान्यस्यचचेत्ता ज्ञाता । चितीसंज्ञाने तृन् । सएवदेवता देवः । अन्येतुदेवाभासाः । यद्वादेवता देवशब्दप्रवृत्तिनिमित्तंगुणजातं । सएवतदभिन्नमेव ॥ ५ ॥ ४ ॥ **अपांनपातं** ॥ परमेश्वरेअपांनपाच्छब्दंघटयति ॥ **व्यक्तत्वादिति**[१६।१८] ॥ नपाच्छ

ब्दः पौत्रपर्यायः । अद्भ्यः पृथिवीतिश्रुतेः । पृथिवीतावदपांपुत्री । तदात्मकत्वाद्देहोपि । तत्रचपार्थिवदेहेव्यक्तत्वाज्जनार्दनः पृथिवीपुत्रइत्येवमपांनपादित्यर्थः । सो जत्वेनप्रसिद्धः । अतएवहिजनार्दनः । एवंसविताप्यपांकार्येंडेजातत्वादपांनपात् । हेहोतः अपांनपातंसवितारं अवसे रक्षार्थमुपस्तुहि । कुतः तस्य सवितुर्व्रतानि कर्माणि उश्मसि सर्वेवयंकामयामहे ॥ ६ ॥ ॥ विभक्तारं ॥ [१६।१९] सदा ॥ वयंचित्रस्यराधसः उत्तमराधसः उत्तमसिद्धिरूपस्य । वसोः वसुनः । विभक्तारं सदा विभज्यदातारं । यस्ययावद्योग्यंतस्मैतावतोदातारं । नृचक्षसं नृणांजीवानांद्रष्टारं । अशेषपुण्यपापादिविशेषैर्धर्मैःसहचितिदर्शकं जीवचैतन्यसाक्षिणं सवितारंहवामहे आह्वयामः ॥ ७ ॥ सखायः ॥ अत्राराधांसिशुंभतीत्येतद्व्याख्याति ॥ [१६।१२] सराधांसीति ॥ हेसखायः ऋत्विजः । आ अस्मत्समीपमागत्य निषीदत किमिति । नु इदानीं नो स्माकं दाता अभिलषितस्य । सविता स्तोम्यः स्तोमार्हः स्तोतव्यः । यः ससविताहरिः राधांसि सिद्धीः । शुंभति अंजसाशोभयति । स्वराधांसीतिक्वचित्पाठः । तत्रस्वेनदत्तानिराधांसीतिव्याख्येयं । सेश्वराहिसिद्धयःशोभावत्योभवंति ॥ ८ ॥ अग्नेपत्नीः ॥ आग्नेय्यौक्ष्वे इतिकेचित् तदनुपपन्नमिवभाति । अग्नेरत्रप्रैषगोचरत्वात् । तस्यचानैकांतिकत्वात् । अन्यथातिप्रसंगात् । तस्मादावोढुरग्नेरेवात्रप्राधान्यमित्यनुपपन्नं । विशेषप्रमाणेसतित्वाग्नेयत्वंननिवार्यते । अतोयथाप्रतीत्येवातःपरंदेवताः । हेअग्ने उशतीः कामयमानाः । यज्ञागमनमितिशेषः । देवानांपत्नीस्त्वष्टारंच सोमपीतये इहोपावह ॥ ९ ॥ आग्नाः ॥ [१६।२१] नदीश्च ॥ हेयविष्ठ युवन् । अग्ने । ग्नाः नदीश्च आहुतिरूपतः आह्वानमंत्राभिमानित्वतो होत्रां हुदानादनयोः अस्मात्करणेत्रप्र



त्ययः । वरणीयत्वात्त्राणाच्चजगतोवरूत्री । वृणोतेःकर्मण्यूकारः । त्रायतेःकर्तरिटः । ततः कर्मधारयः । धिषणां बुद्धिस्वरूपिणीं बुद्ध्यभिमानिनीं भारतींचावसेऽस्मद्रक्षणायेहावह । ग्नाशब्दोविष्णौपूर्वंनिरुक्तः । भारतीशब्दंतत्रनिर्वक्ति ॥ [१६।२१] विष्णुश्चेति ॥ द्वितीयेनचशब्देनदेवानांपालकत्वाद्देवानांपत्नीतिचोदितइतिसमुच्चिनोति । यज्ञसंयोगइतितु नाश्रितं । प्राणसंबंधाद्भारतीतिकथंलभ्यतइत्यतआह ॥ [१६।२२] प्राणस्त्विति ॥ भरोभारस्तेनततत्वात् । तेनोतेर्डः । निरवधिकगौरवादित्यर्थः । भर्तृरूपतः जगतइतिशेषः । डुभृञ्भरणे अस्मादतच् । भरतस्येयं स्वामिनी भारती । विष्णोरभिमानित्वाभावात्कथंतत्रहोत्राशब्दइत्यतआह ॥ [१६।२२] होत्रेति ॥ अस्मिन्पक्षेकर्मणित्रप्रत्ययइत्यर्थः । ह्वयतेर्वोभयत्रत्रप्रत्ययः । एवं धिषणाशब्दोपिबुद्धिप्रेरकत्वेनयोज्यः । पूर्वंधिषणाशब्दोभारतीविशेषणत्वेनैवव्याख्यातः । इदानींभिन्नविषयतांचदर्शयति ॥ [१६।२२] श्रीर्वेति ॥ १० ॥ ५ ॥ अभिनः ॥ [१७।१] शर्मदत्वा ॥ नृपत्नीः नरोदेवाः प्रधानपुरुषत्वात् । तेषांपत्न्यः नृणांपालयित्र्योवा । देवी र्देव्यो वसा वनकर्त्राप्राणेनसाकमेव । महो महतः सर्वोत्तमस्यविष्णोः । शर्मणा तत्संबंधिमोक्षादिरूपंशर्मदत्वैव । नोस्मानभि अभितः । सचंतां रक्षंतु । अच्छिन्नपत्राइतिदेवीनांविशेषणंव्याख्याति ॥ [१७।१] यस्मादिति ॥ अवैधव्येनकथमच्छिन्नपत्रत्वंलभ्यतइत्यतआह ॥ [१७।२] सदेति ॥ पत्रशब्देनहिताटंकमुच्यते । ततश्चाच्छिन्नपत्राइतिसदाकर्णभूषणयोगोलभ्यते । सचाविधवानामेवसंभवतीत्यतोयुक्तमुक्तमिति ॥ ११ ॥ इहेंद्राणीं ॥ अहमिंद्राणी मिंद्रस्यपत्नीं । वरुणानीं

वरुणस्यपत्नीं । अग्नायी मग्नेःपत्नींच । सोमपीतयेस्वस्तये सोमंपीत्वास्मभ्यंसंततसौख्यंदातुमितियावत् । इहोपह्वये ॥ १२ ॥ महीद्यौः ॥ [१७१२] भरणैर्नः ॥ मही महती द्यौःपृथिवीच नो स्मदीयमिमंयज्ञंमिमिक्षतां स्पृशतां आगच्छतां । आगत्यचभरीमभिः । भावेइमन् । भरणै र्नो स्मान् पिपृतां पारयेतां । दुःखेभ्यइतिशेषः । अत्रकेद्यावापृथिव्यावित्यतआह ॥ [१७१३] श्रीश्चेति ॥ ते द्यावापृथिव्यौ । अन्ये श्रीभूमिभ्यां । भगवतश्च लोकदेवते लोकाभिमानिन्यौ । रोदसीच द्यावापृथिव्यौ ॥१३॥ तयोरित् ॥ तयोःपयइत्येतद्व्याख्याति ॥ [१७१३] तयोरिति ॥ द्यावापृथिव्योः । पीयतेमुमुक्षुभिःसेव्यतइतिपयोविज्ञानं । घृतवदित्येतद्व्याख्याति ॥ [१७१४] घृतवदिति ॥ घृक्षरणदीप्त्योः भावेक्तः । घृतंदीप्तिरपरोक्षज्ञानं । तेनसहितंघृतवदित्यर्थः । परोक्षापरोक्षज्ञानेकथंतयोःसंबंधिनीइत्यतआह ॥ [१७१४] यदिति ॥ यद्यस्माद्धारत्यपिलोकदेवता द्यावापृथिव्योर्देवतास्यात् सैवच ज्ञानदेवतास्यात् तस्मात्तयोरितियुक्तमिति । इदानीमृचंव्याचष्टे ॥ [१७१४] विष्णोरिति ॥ यत्पयोज्ञानंगंधर्वस्य विष्णोः ध्रुवेपदे नित्यपदस्थं नित्यस्वरूपविषयं यच्चोक्तप्रकारेणघृतवत् तज्ज्ञानं विप्रा मेधाविनो धीतिभिः बुद्धिभिः । वृत्त्यपेक्षंबहुवचनं । रिहंति लिहंति सेवंते । प्राक्तयोरित्येतत्पयसोविशेषणत्वेनव्याख्यातं तयोःप्रसादतोरिहंतीत्यपिव्याख्येयमित्याह ॥ [१७१५] तत्प्रसादतइति ॥ गंधर्वशब्दंविष्णौनिर्वक्ति ॥ [१७१५] गामिति ॥ गोपदोपपदाभ्यांधृञ्अवस्थाने वृतुवर्तनइत्याभ्यांडः । उपपदस्यचगंभावः । गां वाचं ॥१४॥ स्योनापृथिवि ॥ स्योनाभवेत्यस्यार्थमाह ॥ [१७१५] स्योनेति ॥ स्योनाशब्दःसुखनामसुपठ्यते । स सुखमासनमितिवत्तत्कारिण्यपिवर्तते । अनृक्षरेत्यस्यार्थमाह ॥ [१७१६] यतइति ॥ ततोऽनृक्षरेतिशेषः । नृवत्क्षरति मनुष्यवन्नश्यतीतिनृक्षरा । ननृक्षराअनृक्षरा । नश्यतीतिवक्तव्येनश्यसीतिवचनेनयात्वमनृक्षरेतियोजनांसूचयति । निवेशनीतिव्याख्याति ॥ [१७१६] निवेशनीति ॥ सा पृथिवी । निविशंतेऽस्यामित्यधिकरणेल्युट् । उत्तरार्धंव्याख्याति ॥ [१७१६] शर्मेति ॥ हेपृथिवि यात्वमनृक्षरानिवेशनीच सास्माकंस्योनाभव । नोस्मभ्यं सप्रथः प्रथोविस्तारः सहप्रथसावर्ततइतिसप्रथः । महत्तरं शर्म गृहंच यच्छ प्रयच्छ ॥१५॥ ॥ ६ ॥ अतोदेवाः ॥ षट्वैष्णव्यः । आद्यादैवीच । अत्राद्यामृचंकथितहेतुहेतुमद्भावंघटयन्व्याख्याति ॥ [१७१७] असुरेभ्यइति ॥ यतःकारणाद्विष्णुर्जगत्पतिः । पृथिव्याः पृथिवीमारभ्य । सप्तधामभिः सप्तलोकैःसाकं । त्रिभिःक्रमैः पादविक्षेपैः । इदमिति वक्ष्यमाणंजगत् । विचक्रमे असुरेभ्योजहारेतियावत् । हत्वाचसुरान्स्वस्वपदस्थानपिचक्रइतिशेषः । अतः एवंविष्णुप्रसादालब्धपदत्वेनसमर्थत्वात् । देवाःनोस्मानवंतु रक्षंतु । विष्णुशब्दंभगवतिनिर्वक्ति ॥ [१७१८] विशिष्टेति ॥ भवतुविशब्दोविशिष्टवाची षकारणकारयोस्तुचेष्टाबलवाचित्वंकुतइत्यतआह ॥ [१७१८] प्राणमिति ॥ परमेश्वरस्यप्राणं चेष्टां षकारं षशब्देनाक्रियमाणं बलंच णकारं णशब्देनाक्रियमाणमाहेत्यर्थः । श्रुतिः णकारोबलंषकारःप्राणआत्मेत्येषा ॥ १६ ॥ इदंविष्णुर्विचक्रमे ॥ पूर्वार्धर्चः पूर्वेणैवव्याख्यातः । द्वितीयंव्याख्याति ॥ [१७१९] रमंतीति ॥ रमंति शोभंते । यद्वा पांसुशब्देनतदाश्रितादेवाविवक्षिताः । समूढमित्यनेनसमूढ्हमित्येतद्व्हतेरूपमित्युक्तंभवति । प्रापितमित्यर्थः । अत्रापीदमितिसंबध्यतइत्यतोविश्वमित्युक्तं । पदइत्यनु

क्त्वापांसुरइत्युक्तस्यतात्पर्यमाह ॥ **पांसुवदिति** ॥ विष्णुर्भगवान् इदंविश्वंविचक्रमे विक्रांतवान् । कथं । त्रेधापदंनिदधे तदाऽस्य जगतःपतेः । पांसुरेपदे । इदंविश्वं समूळ्हं प्र( विष्ट )तिष्ठितमितियावत् ॥ १७ ॥ **त्रीणिपदा** ॥ प्रथमपादंव्याख्याति ॥ **वेदानिति** ॥ विष्णुः त्रीणिपदा सर्वाणित्रिविधानिपदानिस्वरूपाणि । विचक्रमे अतिक्रांतः । कानितानि । वेदांस्त्रीन्कालानतीतानागतवर्तमानान् गुणान्सत्त्वादीं ल्लोकान्भूर्भुवःस्वराख्या न्देवमानुषदानवान्जीवान्चेतनाचेतनान्मिश्रान्सकलपदार्थान् । तत्रचेतनाश्रीर्मुक्ताश्च । अचेतनाघटादयः । मिश्राःसात्मकादेहाः । कथंविचक्रमइत्यतउक्तंगोपाइति । तदुपलक्षणपरमित्याशयेनव्याख्याति ॥ **रक्षकत्वेनेति** ॥ सर्वाणीत्यस्यपूर्वत्रसंबंधउक्तः । विभुःविचक्रमइतिपूर्वेणान्वयः । अदाभ्यइत्यस्यार्थमाह ॥ **स्तंभनीयइति** ॥ स्तंभनीयो निवारणीयः । पोरदुपधादितिदंभेर्ण्यः । उत्तरार्धंव्याख्याति ॥ **धारकानिति** ॥ यतएवंमहामाहात्म्योविष्णुः अतःकारणाद्धर्माणि जगतोधारकानपिवाय्वादीन् सएवधारयन् वर्ततइतिशेषः ॥ १८ ॥ **विष्णोःकर्माणि** ॥ **जानीथ** ॥ हेजनाः विष्णोःकर्माणिपश्यत जानीथ । कथंभूतानि व्रतान्यशेषतःप्राणिकर्माणिच यतो येभ्यःकर्मभ्यो जातानीतिशेषः । विष्णोर्वैतद्विशेषणं । अनुपलंभबाधितमेतदित्यतउक्तंपस्पशेभगवान्सर्वदैवाविज्ञात श्चशब्दाज्ज्ञातश्च । तदुपपादयति ॥ **स्पशेति** ॥ यस्मादेवंधातुव्याख्यानंतस्मादुक्तंयुक्तं । अज्ञातदृशौ प्रत्यक्षायोग्यस्यार्थस्यदर्शने । ततश्चपस्पशइतिलिडंतस्यप्राकृतैरदृश्यएवयोगिभिर्दृष्टोबभूवेत्यर्थः । उत्तरार्धंव्याख्याति ॥ **इंद्रस्येति** ॥ युज्यः सर्वदायोगार्हः । तस्यार्थःसहितइति । अत्रयःपस्पशे यश्चेंद्रस्ययुज्यःसखा तस्यविष्णोरित्येकवाक्यतयायोजना । इंद्रशब्दस्यप्रसिद्धेंद्रस्तावदर्थः अर्थांतरंचाह ॥ **प्राणस्यैवेति** ॥ सखेतिसंबंधः । एवशब्देनायमेवमुख्योर्थइत्याचष्टे । तत्कुतइत्यतआह ॥ **कस्मिन्निति** ॥ कस्मिन्न्वहमुत्क्रांतउत्क्रांतोभविष्यामिकस्मिन्वाप्रतिष्ठितेप्रतिष्ठास्यामीतिसप्राणमसृजतेतिश्रुतेर्विष्णुप्राणयोरेवनित्ययोगदर्शनादित्यर्थः । इंद्रशब्दस्यप्राणवाचित्वंकुतइत्यतआह ॥ **त्वयेदिंद्रेति** ॥ त्वयेदिंद्रयुजावयमित्यस्यामृचींद्रशब्दस्यप्राणेप्रयोगदर्शनात् । इयंहि तंदेवाअब्रुवन्नित्यत्रार्थेसंमतित्वेनोपनिषद्युदाहृता ॥ १९ ॥ **तद्विष्णोः** ॥ **रमाब्रह्म** ॥ परमत्वस्यप्रतियोगिसापेक्षत्वाद्रमाब्रह्मशिवादिभ्यइत्युक्तं । पदमित्यनुवादेनरूपमितिव्याख्यानं । सूरयइत्यस्यार्थःसंसारान्निर्मुक्ताइति । तेहिमुख्यतःसूरयः । दृष्टांतस्यतात्पर्यमाह ॥ **अदृश्यमिति** ॥ यथाहिचक्षुराकाशेव्याप्तमपिनदृश्यते केवलंविषयोपलब्धिलक्षणेनफलेनानुमीयते तथापरमेश्वरस्वरूपंसर्वगतमपिनदृश्यं किंत्वस्वतंत्राणांपदार्थानांसत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायतइति ॥ २० ॥ **तद्विप्रासः** ॥ **संदीपयंति** ॥ इंधीदीप्तौ । संदीपयंति जानंति ज्ञापयंतिवा । विज्ञानैरितिशेषः । करणेल्युट् । जागृवांसःप्राप्तजागराः । केते । संसारात् मुक्ताइतिशेषः । विपन्यवइत्यस्यव्याख्यानंज्ञानितमाइति । पनतिरत्रज्ञानार्थः । ततोयुः । नन्वेतदृगर्थःपूर्वस्यामृच्युदितएव अतःकिमर्थंपुनरुच्यतइत्यतआह ॥ **तात्पर्येति** ॥ सर्वेषामपिवेदानामस्मिन्नर्थेतात्पर्याधिक्यमित्यस्यार्थस्यविज्ञप्त्यै । एतमर्थं विष्णोःसर्वोत्तमत्वादिकं । जगौ वेदः ॥ २१ ॥ ७ ॥ ३ ॥ **तीव्राःसोमासः** ॥ चतुर्विंशत्यृचमिदंसूक्तं । तत्रा

द्यावायव्या । यच्छब्दाध्याहारेणैकवाक्यतयाव्याख्याति ॥ [१७।१७] वीर्यवंतइति ॥ हेवायोयइमेतीव्रास्तिग्माआशुकारिणोवीर्यवंत इतियावत् । आशीर्वंतः । आशीरित्याशास्यमानोर्थः । तद्वंतस्तेनसहसाध्यसाधनभाववंतइत्यर्थः । यजमानेष्टसाधकाश्च । सुता अभिषुताः । सोमासः सोमाःसंति । तान्प्रस्थितान्प्रस्थितनामकांस्त्वदभिमुखान्वा प्रत्यागह्यागच्छपिबच ॥ १ ॥ उभा ॥ द्वेऐं द्रवायव्यौ । अत्रदिविस्पृशेतिव्याख्याति ॥ [१७।१७] सर्वदेवानामिति ॥ निर्धारणेषष्ठ्येषा । द्यौरितिदीव्यतेर्द्युत्यर्थस्यगत्यर्थस्यवा रूपं । उभयथापिज्ञानवाचकं । विषयसप्तमीचेयं । ततश्चदिविस्पृशतइतिदिविस्पृशौ । ज्ञानसंबंधिनावितिलभ्यते । देवशब्दसन्नि धानसामर्थ्याच्चदेवानांमध्यइत्यपि । ज्ञानेनाधिक्यंययोरितिव्यधिकरणोबहुव्रीहिः । ज्ञानस्याधिक्यमितितत्पुरुषाद्वाऽर्शआदि भ्योच् । आधिक्यग्रहणंनिर्धारणसामर्थ्यलभ्यं । उभौदेवौदिविस्पृशाविंद्रवायू वयमस्यसोमस्यपीतयेहवामहे ॥ २ ॥ इंद्र वायू ॥ अत्रमनोजुवावितिव्याख्याति ॥ [१७।१८] मनसइति ॥ जुवतिःप्रेरणार्थःसौत्रोधातुः । अर्थांतरसमुच्चयार्थश्चशब्दः । मनो जुवौ मनोवेगिनौ । सहस्राक्षशब्दंव्याख्याति ॥ [१७।१८] बहुज्ञानाविति ॥ सहस्रशब्दोऽपरिमितनाम । अक्षशब्देनचतज्जन्यसाक्षा त्कारोलक्ष्यते । एकःसहस्राक्षः अपरस्मिंल्लक्षणेतिव्याख्यानंमुख्येसत्ययुक्तमित्येवशब्देनाह । किंचास्मद्व्याख्यानेधियस्पतीइत्ये तदपिहेतुत्वेनसंगच्छतइत्याशयेनाह ॥ [१७।१८] धियस्पतीति ॥ मनोजुवौ सहस्राक्षौधियस्पतीइंद्रवायू विप्रा मेधाविनः ऊतये रक्षायै हवंते आह्वयंति ॥ ३ ॥ मित्रं ॥ तृचोमैत्रावरुणः । जज्ञानापूतदक्षसेतिपदद्वयंक्रमेणव्याख्याति ॥ [१७।१८] जज्ञानाविति ॥ वयं मित्रंवरुणंचसोमपीतयेहवामहे । यावाहूतौजज्ञानौ यज्ञेषुव्यज्यमानौभवतः । व्यक्तौपूतदक्षसौ पूतोदक्षोयजमानोयाभ्यांतौत



थोक्तौ ॥४॥ ऋतेनयौ ॥ [१७।१९] परेण ॥ यावृतेन सकलवेदावगतेन ज्ञानरूपेणवापरेणब्रह्मणा ऋतवृधौ ऋतेतस्मिन्नेवब्रह्मणिवृद्धौ ऋत स्यपती सत्यपती । तौमित्रावरुणावहंहुवे । परमेश्वरविषयेवृद्धिःकादाचित्कीनसंभवतीत्यतःसदेत्युक्तं । ऋतस्यज्योतिषइतिसा मानाधिकरण्यं । तत्रसत्यस्यज्योतिष्ट्वंकथमित्यतआह ॥ [१७।१९] सत्यमिति ॥ प्रकाशत्वात् प्रसिद्धत्वात् । सत्यमेवहिप्रमाणप्रसिद्धंभवति ॥ ५ ॥ ८ ॥ वरुणः ॥ अत्रोत्तरार्धंव्याख्याति ॥ [१७।२०] संसिद्धानिति ॥ वरुणोविश्वाभिरूतिभिः सर्वाभीरक्षाभिः प्राविता प्रक र्षेणास्माकंरक्षकोभुवत् भवेत् । तथामित्रश्च । किंचतौमित्रावरुणौ । नोऽस्मान्सुराधसः शोभनसिद्धिमतः । संसिद्धान्करतां कुरुतां ॥ ६ ॥ मरुत्वंतं ॥ तृचोमरुत्वतीयः । अत्रोत्तरार्धंव्याख्याति ॥ [१७।२०] सगणइति ॥ वयंमरुत्वंतं मरुद्भिःसहितमिंद्रं । सो मपीतये आहवामहे । आहूतश्चेंद्रोहरिर्गणेन मरुद्गणेन । सजूः सहसगणस्तृंपतु तृप्यतां ॥ ७ ॥ इंद्रज्येष्ठाः ॥ पूषरातयइत्य स्यार्थमाह ॥ [१७।२१] पूषेति ॥ पुषपुष्टौ । समित्रंयेषांतेतन्मित्राः । हेइंद्रज्येष्ठाः इंद्रोज्येष्ठोयेषांतेइंद्रज्येष्ठाः । पूषा विष्णुः राति मित्रं येषांतेपूषरातयोमरुद्गणाः । सप्तसप्तकाहितेइतिबहुवचनं । देवासो देवाः । विश्वे सर्वे । ममहवं आह्वानं श्रुत शृणुत ॥ ८ ॥ हत ॥ [१७।२२] सहसा ॥ हेसुदानवः दाणदाने । अस्मात्ताच्छीलिकोनुः । अतीवदानशीलाः सुराः मरुतः सहसा बलरूपेण बल वताबलाभिमानिनाचेंद्रेण । युजासता शक्रेणसहिताइतियावत् । वृत्रं सम्यग्ज्ञानावरणत्वादज्ञानं । अभ्यर्हितत्वान्मदज्ञानं । हत नाशयत । किंच । दुःशंसोदुष्टंशंसनं दुर्वाक् । यद्वा दुष्टःशंसोयस्यासौदुःशंसः दुर्वाग्वान्पुमान्नोस्माकं माईशत नशक्नुयात् ।

अज्ञानमुत्पादयितुंशक्तोनभवेत् ॥ ९ ॥ विश्वान् ॥ वैश्वदेवरतृचः । अत्रपृश्निमातरइत्यस्यार्थमाह ॥ [१७।२२] भारतीत्यादिना ॥
कथंभारतीपृश्निरुच्यतइत्यतआह ॥ [१८।१] गोरूपाचेति ॥ पृश्निशब्दोहिगोनामसुपठ्यते । चशब्दोवक्ष्यमाणापेक्षया । क्वचित्काले
कार्यविशेषार्थेवा । तत्सुताअखिलाःसुराः तस्मात्पृश्निमातरइतिशेषः । किंच । अन्यत्रवेदाद्यभिमानित्वेपिपृश्निशब्दोवागादि
नामापिभवति । वयंविश्वान्देवान्मरुतश्चसोमपीतयेहवामहे । कुतः । हियस्मात्पृश्निर्गोरूपावाग्रूपाद्युरूपाभारतीमातायेषांते
पृश्निमातरोविश्वेदेवाः उग्राः अप्रसह्याः शत्रुभिः ॥ १० ॥ ९ ॥ [१८।२] जयतामिव ॥ हेनरोविश्वेदेवाः यद्यदाशुभमुत्तमंविष्णुंवायुं
वाप्रतियाथन यूयंयाथ । तदामरुतां युष्माकं तन्यतु ध्वनिः । तद्ध्वनिस्तेषांयुष्माकंध्वनिः । संग्रामेजयतामिव । धृष्णुया
ञिधृषाप्रागल्भे अस्मात् त्रसिगृधिधृषिक्षिपेःक्नुः । ताच्छीलिकः । ततोभावप्रधानात्तृतीयायाःपंचम्यावासुपांसुलुगित्यादिनाया
देशः । धृष्णुत्वेनधैर्यात् एति याति प्रवर्तते ॥ ११ ॥ हस्कारात् ॥ हस्कारशब्दंव्याख्याति ॥ [१८।२] दोषेति ॥ ओहाक्त्यागे ।
अस्मात्कः । त्यजतिदोषानितिहः । स्वेनसहकरोतिगुणानितिस्कारः । अकारलोपः । हश्चासौस्कारश्चहस्कारः । विद्युच्छब्दार्थ
माह ॥ विद्युदिति ॥ विपूर्वात्द्योततेःक्विप् । ऋचंव्याख्याति ॥ [१८।३] तत्सुताइति ॥ येसर्वेदेवामरुतश्चहस्काराद्वायोर्विद्युतोभार
त्याश्चपरिसम्यग्जातास्तत्सुताहिते । अतः सम्यग्जातत्वादेव नोवंतु रक्षंतु । नोस्मान्मृळयंतु सुखयंतुच । पुनर्नइतितात्पर्यार्थं ।
हरावेतद्घटयति ॥ [१८।३] एतादृशइति ॥ हरिरपितत्तन्मरुदाद्यंतर्गतत्वेनकारणेनैतादृशो भारतीवायुपुत्रउच्यते ॥ १२ ॥ आपूषन् ॥
पौष्णोयंतृचः । पूषाघृणिशब्दौव्याख्याति ॥ [१८।४] पूषेति ॥ आसमंताद्घृणयोरश्मयोयस्यासावाघृणिः । ऋचंव्याख्याति ॥ आ

जेति ॥ हेआघृणेपूषन् चित्रं विचित्रं बर्हिः बृहतेर्वृद्ध्यर्थस्येदंरूपं । नानाविधंपूर्णत्वंयस्यासौचित्रबर्हिः तंचित्रबर्हिषं ब्रह्माणं
त्वंनोस्मान्प्रत्याज । अजेरंतर्णीतण्यर्थस्यलोटिरूपं । गुरुत्वेनागमय । दिवोदेव्याः भारत्याः । धरुणं धर्तारं भर्तारंवायुंचाज । क
मिवनष्टंपशुं गतंगांयथाऽऽगमयंति । यद्वा आजेतिलिङर्थे । नोस्मदर्थेभवानाज आदिकालेप्राप्तवानसीति ॥ १३ ॥ पूषा ॥
जगद्राजं ॥ आघृणिःपूषाभगवान् राजानं जगद्राजं गुहाहितं गुहायांनिहितं । ततएवापगूढं स्वकुक्षिगूढमितियावत् । चित्र
बर्हिषं ब्रह्माणं सुतमविंदत् ॥ १४ ॥ उतोसः ॥ मह्यं ॥ उतो अन्यच्च । सपूषेंदुभिःसौमैस्तर्पितइतिशेषः । मह्यं मदर्थे । षड्
इंद्रियाणि । युक्तान् अर्थैःसन्निकृष्टानि । अनुसेषिधत् साधयामास । अनुदात्तत्वंछांदसं । चर्कृषच्चकारच । यङ्लुडंताल्लेट् ।
किमिव । गोभिर्वाभिर्यवंन यवंयथाकुर्वंतिसाधयंतिच । करणातिरिक्तंसाधनंकिमित्यतआह ॥ साधनमिति ॥ साधनंत्वि
त्यन्वयः ॥ १५ ॥ १० ॥ अंबयः ॥ एताआप्याः ॥ अंत्याध्यर्धाग्नेयीत्येके । दर्शनात्तुपयस्वानित्यर्धर्चेआग्नेयआप्यश्च । सं
माग्नइत्यृक्सर्वदेवत्या ॥ अंबयः ॥ अंबापर्यायोंबिशब्दः । अतोंबयोमातरः । काः आपः । कुतः प्रकरणादितिहिशब्देनाह ।
कथंमातृत्वमपां । जगतःकारणत्वात् । जामयः सहोदराश्च । कस्य । जगतः । कथं । यस्मात्ताभिस्सहविवर्धते । पार्थिवादिभाग
चतुष्टयात्मकंजगद्वर्धमानमाप्यभागेनसहैववर्धतेयस्मात्तस्मात्सहोदराः । आध्वरीयतामित्यादिव्याख्याति ॥ अध्वरमिति ॥
यद्यप्यध्वरीयच्छब्दोध्वरमिच्छतआह । तथापितस्यांदशायांसोमादिसंबंधानुपपत्तेरिच्छयाकरणमुपलक्ष्याध्वरंकुर्वतामित्युक्तं ।
क्षीरसोमयोःसमुच्चयेचशब्दः । अपिशब्दस्त्वपांविशेषणसमुच्चये । अंबयोजगतोमातरो जामयोभगिन्यश्च अध्वरीयतामध्वरमि

च्छतामध्वरंकुर्वतामितियावत् । मधुनासोमेनसह । पयःक्षीरंसोमंचेत्यर्थः । प्रपृंचतीः पृचीसंपर्के । प्रपृंचंत्यः संपृक्ताआपोऽध्व
भिर्मार्गैर्यंतिगच्छंति । नद्योनेनाभिप्रेयंते ॥ १६ ॥ **अमूर्याः** ॥ याअमूरापउपसूर्ये सूर्यसमीपे सूर्यस्यसमीपस्थाः । वाशब्दः
समुच्चये । सूर्यश्चयाभिःसहवर्तते । अन्योन्यसाहित्योक्तेःतात्पर्यसहिताअपि सूर्येणसहिताएवसदावर्तंते । यद्वा व्याख्यानमेवै
तत् । ससूर्योपिताअपःप्राप्यैववर्ततेहीति । तानोस्मदीयमध्वरंहिन्वंतु । हिगतौवृद्धौच । गच्छंतुवर्धयंतुच ॥ १७ ॥ **अपः** ॥
**ह्वयामि** ॥ यत्र द्वितीयार्थेसप्तम्येषा । याः नोस्मदीयागावःपिबंति ताअपोदेवीरहमुपह्वये ह्वयामि । कस्मात् । यतोनोस्मा
कंसर्वथाहविःसोमादिलक्षणंसिंधुभ्योनदीभ्यः । तादर्थ्येचतुर्थ्येषा । तदुद्देशेन पंचमीवा । कर्त्वं कार्यं । कृत्यार्थेतवैकेन्केन्यत्वन
इतित्वन् ॥ १८ ॥ **अप्स्वंतः** ॥ **तास्वं१तः** ॥ अमृतं मरणाभावस्यकारणंद्रव्यंयदुच्यतेतत्तास्वप्सु तासामपामंतर्मध्येस्थितं । कं
पसूचितमर्थमाह ॥ **अदृश्यमिति** ॥ यद्वा अमृतंतास्वप्सुस्थितं । कथं । अंतरंतर्हितंअदृश्यं । तेननानुपलंभबाधः । भेषजंच
रोगनिवर्तकंद्रव्यमप्स्वेवस्थितं । तासामपामुत अपामेव । प्रशस्तये प्रशंसार्थं । वाजिनो न्नवंतो देवाः सुराः भवत संतु । पुरुषव्य
त्ययःकेवलाब्दैवत्यज्ञापनार्थः । नःसहायाइतिशेषः । अपांप्रशंसांकुर्वतामस्माकंवाङ्मनसादिप्रेरयंत्विति ॥ १९ ॥ **अप्सुमे** ॥ पूर्वस्या
मृचिकथितमेवात्रकस्मात्कथ्यते अप्सुविश्वानिभेषजानीत्युक्त्वापुनरापश्चविश्वभेषजीरितिकिमर्थमुच्यतइत्यतआह ॥ **तात्पर्यार्थ
मिति** ॥ प्रमाणोपन्यासाद्यर्थत्वेनाप्यपुनरुक्तिर्द्रष्टव्या । अग्निंचविश्वशंभुवमित्यस्यार्थमाह ॥ **सुखाधारइति** ॥ सोमोराजेदंमे
ब्रवीत् । किं अप्स्वंतर्विश्वानिभेषजानिसंतीति । किंचविश्वशंभुवं संपूर्णसुखभूमिमग्निंचाप्स्वंतःस्थितमब्रवीत् । आपश्चविश्वभे



षजीः विश्वानिभेषजानियासुताविश्वभेषजीः । केवलमामकेतिङीप् । इत्यब्रवीत् । यद्वा सकलभेषजरूपाएवेत्यब्रवीत् ॥ २० ॥
११ ॥ **आपःपृणीत** ॥ अत्रवरूथशब्दार्थमाह ॥ **वरूथमिति** ॥ उत्तरार्धंव्याख्याति ॥ **ज्योतिरिति** ॥ सूर्यशब्दंविष्णौनि
र्वक्ति ॥ **सूरीति** ॥ तृतीयांतसूरिशब्दोपपदाद्यातेःकर्मणिकः । सूरिशब्दात्तृतीयासमर्थात्प्राप्यार्थेवातद्धितोयः । पृणीतेत्यस्यधा
तुंपठति ॥ **पृणदानइति** ॥ हेआपोमह्यंभेषजंपृणीत दत्त । ममतन्वे शरीराय । षष्ठ्यर्थेचतुर्थी । वरूथं गृहंचदत्त । भेषजस्यै
ववैतद्विशेषणं । सूर्यं विष्णुं दृशे द्रष्टुं । दृशेविख्येचेत्यव्ययं । यद्वासूर्यमितिषष्ठ्यर्थे दृशइतिचतुर्थी । विष्णुदृशे ज्योक् ज्योति
र्ज्ञानंचपृणीत ॥ २१ ॥ **इदमापः** ॥ **अखिलं** ॥ हेआपोयत्किंचमयिदुरितमिदंनोऽस्माकमखिलमपिपापंप्रवहत अपनयत ।
किंतत् । अहंयदभिदुद्रोहवा हिंसाजमित्यर्थः । यद्वाशेपे । शेपशब्दोत्रशेफःशब्दपर्यायः । निमित्तसप्तम्येषा । शेफजंच । उता
नृतं अनृतसंभवंच । तत्सर्वंप्रवहतैव । वाशब्दावुतशब्दश्चसमुच्चये ॥ २२ ॥ **आपः** ॥ **रसेन** ॥ हेआपोऽद्यवयंयस्माद्वोऽन्वचा
रिषं । एकवचनंबहुवचनार्थे । वोनुचराअभूम तस्माद्रसेनसुखेनसमगस्महि संगताःस्मः । हे अग्ने अग्निंचविश्वशंभुवमित्युक्तः । पय
स्वानद्भिःसहितआगहि अस्मानागच्छ । आगत्यच तं एवंस्तुवंतं । मा मां । वर्चसा तेजसा । संसृज संयोजय ॥ २३ ॥ **संमाग्ने** ॥
हे अग्ने मा मां । वर्चसासंसृज संयोजय । प्रजयाचसंसृज । आयुषाचसंसृज । उत्तरार्धंव्याख्याति ॥ **कुर्युरिति** ॥ अनेनविद्यु
रित्यंतर्णीतण्यर्थस्यरूपं । अस्य मे इतिद्वितीयार्थेषष्ठ्याविरुक्तंभवति । देवाः अग्न्याद्याः । अस्यमे एतंमां । विद्युः विद्वांसमपि
कुर्युः । ऋषिभिःसहेंद्रश्चमांविद्याद्वेदयेत् । प्रकारांतरेणव्याख्याति ॥ **मदर्थमिति** ॥ अनेनयेदेवाःसर्वेविद्युः यश्चेंद्रःसर्वेवि

द्यात् तेसर्वेसहऋषिभिःसुराअस्यमेसंतु सर्वदामदर्थसंतु । ममोपकारकाःसंत्वित्युक्तंभवति।प्रकारांतरेणव्याचष्टे॥ एतंमिति॥ अनेनषष्ठ्यौद्वितीयार्थे विद्युरितितुयथाश्रुतमेवेत्युक्तंभवति । देवाअग्न्याद्याअस्यमेएतंमांकृपापात्रंविद्युर्जानीयुः । ज्ञात्वाचकृपांकुर्युरितियावत् । इंद्रश्चसहऋषिभिर्विद्यात् जानीयात् । प्रकारांतरेणव्याख्याति ॥ अनुजानंत्विति ॥ अनुमोदंतामित्यर्थः । अत्रदेवाअस्यमेउदितंविद्युरितियोज्यं ॥ २४ ॥ १२ ॥ ४ ॥ ५ ॥ व्याख्यातामेधातिथिदृष्टाऋचः । व्याचिख्यासितानामृषिमाह ॥ शुनःशेपइति ॥ परं उत्तमं । यद्वाऽतउत्तरंत्र्यूनंशतं परंत्रयंचेत्यृकृशतं । यूपादित्यादिनाहरिश्चंद्रोहवैधसइतिब्राह्मणोक्तांकथांस्मारयति । तच्च उदुत्तमंवरुणपाशमित्यादेःसुबोधत्वाय । एवंसतित्वमग्नेप्रथमइत्यादीनामपिशुनःशेपदृष्टत्वंप्रसक्तमित्यतउक्तमतउत्तरंपरमिति । तद्विवृणोति ॥ त्र्यूनमिति ॥ इह कस्यनूनमित्याद्यायामानुपूर्व्यां त्र्यूनमेव शतमस्ति अन्यत्रत्रयंचतुर्थेपंचमेपिचमंडलेऽस्ति । अतोन त्वमग्नेप्रथमइत्यादीनांशुनःशेपदृष्टत्वं । नापितस्यशतर्चित्वहानिः । ननुकस्मादेवंकल्प्यते शुनःशेपइदानींत्र्यूनमेवशतंदृष्टवानित्यस्तु । शतर्चित्वंतुसामीप्याद्भविष्यतीत्यतआह ॥ ब्राह्मणोक्तस्त्विति ॥ ब्राह्मणेखल्वेकस्मिन्नेवकालेदेशेवस्थायांचशुनःशेपस्यान्यूनऋकृशतदर्शनंसप्रजापतिमेवेत्यादिनोक्तं । सब्राह्मणोक्तोह्यृचांक्रमोत्राप्यनुसर्तव्योभवेत् । अन्यथातद्विरोधःस्यात् । अथवा अत्रापि त्र्यूनेशतेपि । ब्राह्मणोक्तएवक्रमोभवेन्नतुयथाश्रुतः । तथाहि । यच्चिद्धिसत्यसोमपा इत्यादिकाभिरिंद्रेश्विनोरुषसिचस्तुतायांविमुक्तपाशंशुनःशेपमधिकृत्यब्राह्मणं।तमृत्विजऊचुस्त्वमेवनोस्याह्नःसंस्थामृच्छेत्यादि। तत्रचयत्रग्रावेत्यादीनांस्फुटंपरत्वमवगम्यतइति ॥ कस्यनूनं ॥ पंचदशर्चमिदंसूक्तं । प्रजापतेरियमृक् । कर्तुरित्यादिनाविष्णौ



तावद्योजयति । ईशश्चेत् अत्रविवक्षितःतदैवंयोज्यमितिशेषः । वयंकस्य करोतेर्डः । कर्तुः । अमृतानांसुराणांमध्येकतमस्य सुखतमस्य परानंदतनोर्देवस्यविष्णोः । चारु भद्रंनाम । नूनमिदानीं । मनामहे। अत्रायंधातुःसामर्थ्यादुच्चारणाद्यर्थेवर्तते । सको नोस्मान्मह्यैअदितयेइंदिरायैपुनर्दात् दद्यात् । ततश्चपितरंतंदेवं मातरंतांदेवींचदृशेयं पश्येयं । अमृतानांकतमइत्येतत्प्रकारांतरेणव्याख्याति ॥ सइति ॥ अमृतानामित्यनुवादेनमुक्तानामितिव्याख्यानं । मुक्तानां सकाशादितिशेषः । सुखादावित्यनेनकशब्दोन्येषामपिगुणानामुपलक्षणार्थइत्याचष्टे । प्राञ्मह्याअदितयइतींदिराविषयंव्याख्यातं इदानींपरमेश्वरविषयंचभवतीत्याशयेननिर्वक्ति ॥ अखंडितत्वादिति ॥ दोअवखंडने । अस्मात्कर्मणिक्तिन् । ततोनञ्समासः । यस्मान्महती ततूतस्मान्महीचस्त्रीरूपःसइत्यर्थः । महत्त्वमखंडितत्वंचैकमेव । अतःपुनरुक्तिंपरिहरति॥ देशानंत्यादिति॥ अखंडितत्वंत्वितिसंबंधः। द्वितीयश्चोवधारणे । पितरंमातरंचेतिव्यधिकरणंप्राग्व्याख्यातं इदानींद्वयमपिपरमेश्वरविषयंचेत्याह ॥ सएवेति ॥ पुनःशब्दस्यतात्पर्यमाह ॥ तस्मिन्निति ॥ यस्मात्सदातस्मिंस्थिताः तत् तस्मात्पुनर्दादित्युक्तमित्यर्थः । अदितिशब्दंविष्णौप्रकारांतरेण व्याख्याति ॥ अत्तीति ॥ अदेःकर्तरिक्तिन् । जग्ध्यादेशाभावइडागमश्च सर्ववाअत्तीतिश्रुतेरनुसरणीयइत्येवशब्देनाचष्टे । मह्याअदितयइतींदिराविषयमुक्तं तत्केननिर्वचनेनेत्यतआह ॥ श्रीर्वेति ॥ वाशब्दश्चशब्दार्थे । श्रीश्चानेनैवनिर्वचनेनमहीचादितिश्चोक्तेत्यर्थः । विष्णावृचंव्याख्यायप्रजापतावपिव्याख्याति ॥ ब्रह्मेति ॥ ब्रह्माप्येवं कर्तृत्वादिनाकइत्यादिशब्दैः

प्रोक्तः । रूढश्चासौशब्दस्तस्मिन्नित्याह ॥ [१८।२०] कथंएवेति ॥ नन्वमृतानांकतमस्येत्येतद्ब्रह्मणिनयुज्यते । विष्णुरमास्वसमानेभ्योधि कत्वाभावादित्यतआह ॥ [१८।२०] गुणांश्चेति ॥ जीवेभ्यः स्वसमानव्यतिरिक्तेभ्यः तत् तस्मात् । उत्तरार्धंब्रह्मणियोजयति ॥ [१८।२०] ददां त्विति ॥ पुनःशब्दतात्पर्यार्थमाह ॥ [१८।२०] प्राप्तांनिति ॥ तयोःसर्वगतत्वात्तौप्राप्तानप्यस्मान्पुनर्ददातु । कथंतर्हिप्रार्थनमित्यतआ ह ॥ [१८।२१] विशेषेति ॥ चतुर्थ्यर्थेतसिः । तस्यसर्वगतस्यचाप्तिः प्रार्थ्यतइतिशेषः । कोसौविशेषदेशइत्यतआह ॥ [१८।२१] वैकुंठादिरिति ॥ उक्तो विशेषदेशत्वेन । हरेश्चसर्वगतस्यापि हरेर्व्यक्तिस्थानत्वादित्यर्थः ॥ १ ॥ अग्नेर्वयं ॥ आग्नेयीयं । तस्याःस्पष्टत्वादभिधे यमाह ॥ [१८।२२] तस्यैवेति ॥ उक्तं अस्यामृचि । कथंतर्हि प्रजापतिरुवाच । अग्निर्वैदेवानांनेदिष्ठस्तमेवोपधावेति । सोग्निमुपससारा ग्नेर्वयंप्रथमस्यामृतानामित्येतयर्चेतिब्राह्मणमित्यतःसएवाग्न्याख्यउक्तइत्यनुक्त्वातस्यैवान्यद्रूपमित्युक्तं । किंतद्रूपमित्यतआह ॥ [१८।२२] यइति ॥ यज्ञेशोहूयतइत्यनेनाग्न्यादिशब्दानांप्रवृत्तिनिमित्तमुक्तं । अमृतानांप्रथमस्येतिव्याचष्टे ॥ [१८।२२] सइति ॥ नन्वत्रपूर्वत्रच नाममनामहइतिहेतुः कोनःसनइतिफलंप्रार्थ्यते । तदयुक्तं । नामस्मरणादिमात्रस्यवैकुंठादिप्राप्तिसाधनत्वस्यप्रमाणविरुद्धत्वादि त्यतआह ॥ [१८।२२] नामेति ॥ यद्वाचारुत्वस्योपपादनमेतत् ॥ २ ॥ अभित्वा ॥ सावित्रोयंतृचः । तत्रकःसविता विष्णुरेवमुख्यतः। कथंतर्हि तमग्निरुवाचसवितावैप्रसवानामीशेतमेवोपधावेति ससवितारमुपससाराभित्वादेवसवितरित्यनेनतृचेनेतिब्राह्मणमित्यत आह ॥ [१९।१] सवितेति ॥ जगत्कारणमितिसवितृशब्दप्रवृत्तिनिमित्तं वार्याणामीशानमित्यस्यार्थमाह ॥ [१९।१] वित्तानामिति ॥ वित्तं



कथंवार्यशब्दमित्यतआह ॥ [१९।१] वार्यहीति ॥ वरणीयत्वतः । अवद्यपण्येत्युपाधेरविवक्षितत्वाद्दहलोर्ण्यदितिभवत्येवेतिहेरर्थः । शिष्टंव्याख्याति ॥ [१९।२] रक्षन्निति ॥ हेसवितर्देव सदा नित्यं । अवन् रक्षन् । कं । अभ्यर्हितत्वादात्मानं । अहंवार्याणां वित्तानां । ई शानं स्वामिनं । भागं भगऐश्वर्यादिगुणाः । तेषांसमूहोभागं । ऐश्वर्यादिसमितिरूपं । त्वा त्वां अभीमहे । अवन्नित्येकवचनादेत दप्येकवचनार्थे । एमि आत्मानंरक्षितुंत्वांशरणंगच्छामि । यद्यप्यवन्नित्येतत्संबुद्ध्यंतंव्याख्यातुंशक्यते । तथापिसाक्षात्प्रयोजनो क्तिलाभायवचनव्यत्यासेनव्याख्यातं । लक्षणहेत्वोःक्रियायाइतिस्मरणात् ॥ ३ ॥ यश्चित् ॥ [१९।२] योपि ॥ हेदेव विष्णो । इत्था अ विकारित्वादित्थंभूतः । इदानींतनप्रकारएव सर्वदाशशमानः । शशब्दःसुखवाची । द्विर्वचनमतिशयार्थे । अधिकंसुखंशशं त न्मन्यतेऽनुभवतीतिशशमानः । सुखाधिकइतियावत् । निदो नेदीयसः परस्मात्ब्रह्मणोहिरण्यगर्भादपि । पुरा पूर्वः । अद्वेषः उपलक्षणमेतत् । द्वेषादिदोषवर्जितः । एवंभूतोयश्चित् योपितेभगः परमैश्वर्यादिरूपोविग्रहस्तत्वानामयंरूपं तमहं हस्तयोर्दधे पु त्रइवपितरं । निदइत्यव्ययंक्वचित्सामीप्येव्याख्यातं निदस्तस्यसमीपगाइति । अत्रतुदूरत्वे । तत्कथमेतदित्यतआह ॥ [१९।४] निदइति ॥ यथाऽऽराच्छब्दोविरुद्धार्थद्वयवाची तथैतावपिप्रत्येकंविरुद्धार्थद्वयस्याभिधायकौ । मूलविभुजादित्वात्कः । तदिदमुक्तमुभावपी ति । विरुद्धार्थद्वयाभिधायित्वस्यैवविवरणंदूरसामीप्यवचनाविति । दूरेतिभावप्रधानं । महोदधौनाम महोदधिनामकेग्रंथे । कथितमेतदितिशेषः । एवंविष्णावृचंव्याख्यायदेवतांतरेव्याख्याति ॥ [१९।४] यदेति ॥ अत्रविवक्षितस्तदैवंयोजनेतिशेषः । हेसवित

देवयश्चियोपितेतवस्वामीइत्थाशशमानोनिदःपुराभगऐश्वर्यादिरूपोऽद्वेषोहरिस्तमहहस्तयोर्दधइति । कुतएषांविशेषणानांविष्णुविषयत्वमित्यतआह ॥ अद्वेषइति ॥ ग्रंथांतरेऽद्वेषोविष्णुरित्यद्वेषत्वस्यविष्णुलिंगत्वोक्तेः । निर्विकारत्वादेरपिविष्णुलिंगत्वे वचनान्युदाहर्तव्यानि ॥ ४ ॥ भगभक्तस्य ॥ विष्णुभक्तस्य ॥ हेसवितर्वयंतवाऽवसारक्षणेनाऽऽरभे आरभामहे । विद्यां त्वदीयामितिशेषः । तत्फलंच भगभक्तस्य भगऐश्वर्यादिरूपोविष्णुः । तद्भक्तस्यतत्सेवकस्य तेसंबंधिनंरायोमूर्धानं । मूर्धशब्दो गौण्यावृत्त्योत्तममाह । रायउत्तमं प्रसिद्धाद्वित्तादुत्तमं । वित्तंसुखमुदशेम उच्चैरश्नामि अश्नीमः । एवंदेवतांतरेव्याख्यायविष्णौ व्याख्याति ॥ ऐश्वर्यादीति ॥ हेहरेतवावऽसा तवरक्षाबलाद्वयमारभे । त्वदीयांविद्यामारभामहे । ततश्चभगभक्तस्य भगऐश्वर्यादिगुणाः भक्तमन्नंभोग्यंयस्यपरमात्मनःसतथोक्तः । तस्यते रायोमूर्धानं प्रसिद्धाद्वित्तादुत्तमंमोक्षाख्यमुदशेम उच्चैरश्नामि । अश्नीमः ॥ ५ ॥ १३ ॥ नहिते ॥ इतःपराएकत्रिंशद्वरुणदेवताः ॥ क्षत्रंत्राणं ॥ हेवरुण । ते क्षत्रं प्रजानांक्षताद्धानेस्त्राणं । वयश्चन विशब्दोविशिष्टवाची । चनशब्दोप्यर्थः । विशिष्टाअपि । अमी परोक्षाः येमुक्तिगास्तेपिनापुर्हि । तथातेसहोबलंचनापुः । मन्युं मनुअवबोधने । संविदंचनापुः । क्रोधस्यगुणत्वाभावात् । त्वदीयक्षत्रादिसदृशक्षत्रादिमंतोमुक्ताअपिनसंभवंतीत्यर्थः । प्रमाणबाधपरिहारार्थमुक्तंपूर्णमिति । किंचयेपतयंतः स्वार्थेणिच् । स्वयंसंसृतेरुत्पतंतोजीवन्मुक्तास्तेपिनापुः । यद्वाहेतुमतिणिच् । अन्यान्शिष्यभक्तान्संसृतेरुत्पतयंतउद्गमयंतोयेउदाराआचार्यास्तेपिनापुः । किंच । अनिमिषंसदाचरंतीः शुभान्याचरंतः । इमाआपः इमेप्रसिद्धादेवाअपि नापुः । अप्शब्दस्यसर्वदेववाचित्वंकुतइत्यतआह ॥ आपइति ॥ यद्यस्मादापोवैसर्वादेवताइतिश्रुतिरस्तितस्मादुक्तंयुक्तमिति । अप्शब्दःसर्वदेवतावाचित्वेनव्याख्यातः । तद्विशेषवाचित्वेनापिद्वेधाव्याख्याति । अब्देवताअबभिमानिदेवताः गंगाद्यानद्योवाआपइत्युक्ताः । किंच । येदेवसंघाः वातस्य वायुदेवस्य विष्णोः । पंचम्येषा । अभ्वं उत्पत्तिपर्यायोयं उत्पात्तिं । प्रमिनंति जानते । तेपिमहाज्ञानानापुः । वायुदेवस्येत्यनुवादेनविष्णोरितिव्याख्यानंवा । उत्पात्तिं प्रादुर्भावं । वयइत्यनुवादेनसुपर्णाइत्यपिवेतिव्याख्यानांतरं ॥ ६ ॥ अबुध्नेराजा ॥ अबुध्नेप्रकाशतः ॥ पूतदक्षोवरुणोराजा अबुध्ने बुधअवगमनेक्विप् । तत्प्रतिषेधोबुध्नं । नञःपरनिपातादिछांदसं । तस्यापिप्रतिषेधोऽबुध्नं तृतीयार्थेसप्तमी । प्रकाशतो ज्ञानेन ज्ञानपूर्वं । वनस्य वनषणसंभक्तौ पचाद्यच् । स्वंसंभजतः स्वात्मानंसेवमानायोर्ध्वमुच्चैः । स्तूपंस्थानमुत्तमंस्थानंददते । दददाने । किंचयेनीचीनानीचस्थाःपुरुषास्तेपि तेन वरुणेनसेवितेननिमित्तेनउपरि ऊर्ध्वगाः स्वर्गगाःस्थुः तस्थुः । यद्वायेनीचीना नीचामानुषाद्यास्तेपिउपरिस्थुः मुक्तिगाबभूवुरितिव्याख्यानांतरं । अर्थद्वयेकथंतेनीचीनाः । तत्राद्ये ये(ए)षां तेषां स्वर्गगमिष्यतां बुध्नोऽधोभागःसुरेभ्योनीचलोकोह्यावासः । द्वितीयेतुबुध्नशब्दोधस्तनत्वमाह । एषांमानुषादीनांबुध्नःसुरेभ्योधस्तनप्रकारोगुणानीचाः । अथवैषांमानुषादीनांबुध्नउक्तप्रकारेणाप्रकाशोऽज्ञानमस्ति । नतुदेवानांतस्मात्तेनीचाः । तृतीयपादंप्रकारांतरेणव्याख्याति ॥ नीचोच्चत्वमिति ॥ अस्यवरुणस्याज्ञया यएवजीवाःकिंचिदपेक्षयानीचीनास्तएवकिंचिदपेक्षयोपरिस्थुः । किंनिरत्रधिकमेतत् । न । एषांजीवानांबुध्नोमूलभूतःकश्चिदस्तिविरिंचिइति । तस्येदंतात्पर्यं । विरिंचादा यत्क्रमशोजीवानांनीचोच्चत्वंतच्चवरुणेनेति । तस्यवरुणस्यप्रसादादस्मे अस्माकं । शेआदेशः । अंतर्हृदयेकेतवोनिहिताःस्युः ज्ञानानिनित्यंनिहितानिभूयासुः । ज्ञानिनोवयं

भूयास्म । ननुसंत्येवज्ञानानि तत्कथंतत्प्रार्थना । अतोविद्यमानेभ्योप्यधिकानीति । तर्ह्ययोग्यप्रार्थनयाप्रत्यवायोभवेदित्यतो भिप्रायमाह ॥ भवंतीति ॥ येकेतवोभविष्याआगामिनोस्माकंभवितुमर्हाभवंतिवासंत्येवतेस्युरित्यनेनयेकेतवोऽस्मेऽस्माकंअं तर्निहितानिगूढाःसंति तेस्युः व्यक्ताइतियोजनांतरंसूचितंभवति । अतोधिकानीतियद्व्याख्यानंतत्कथंलभ्यमित्यतआह ॥ द्विग्रहइति ॥ पदकारेणात्रस्युरितिस्युरितियोद्विर्ग्रहःक्रियतेतेनद्विर्ग्रहे द्विर्ग्रहेण द्विरुच्चारणेन प्रार्थनैवाधिकार्थे धिकार्थद्योतनाय भवतीति ॥ ७ ॥ उरुंहि ॥ उरुंराजा ॥ रंजनात् अनुरागजननात् । राजनात् दीपनाद्वाराजा । रंजरागे । राजृदीप्तौ असौराजा । अन्वेतवै स्वाज्ञानुसारेणगत्यै । उशब्दएवार्थे । तस्याध्याहृतेनसदाशब्देनसंबंधःकृतः । सूर्याय सूर्यस्य । उरुंविस्तीर्णं । पंथां पंथानं । चकार सूर्यसंचारायमूर्तांतरप्रतिघातरहितमंतरिक्षंचकार । किंच । अपदे अपदायपुरुषाय प्रतिधातवे धावुगतिशुद्ध्योः । गंतवे गंतुं । पादा पादौ । अकः अकरोत् । विकरणलोपात् । यद्वा अपदे पदगतौ गत्यर्थाःज्ञानार्थाः । संपदादित्वात्क्विप् । नविद्यतेपद्यस्यतस्मै अज्ञाय । पादौ घञंतः विज्ञानंज्ञानंचेतिशेषः । सवरुणःप्रतिधातवे आत्मानंप्रतिगंतुमकइत्येषोर्थइहपादेंऽजसा मुख्ययावृत्त्योक्तः । माहात्म्यातिशयस्यसूचकत्वात् । उत किंचवरुणोविष्णुर्हृदयविधः हृदयंबुद्धिस्तांविशेषेणधत्तइति विध् विच् । आकारलोपः । तस्यबुद्धेर्धातुःशंकरस्यचिदपि अपवक्ता दोषान्वक्ता । कथं ज्ञानात्सूक्ष्मविज्ञानवत्त्वात् । शिक्षकत्वाच्च । शिक्षकोहित्वयेदमवद्यमाचरितमितिदोषंवक्ति । अनेनविज्ञानंशिक्षकत्वंचाभिप्रेतं । नदौर्जन्यमित्यभिप्रायः ॥ ८ ॥ शतंते ॥ जगद्रक्षा ॥ हेराजन् ईश । ते तव । शतमनंतानि सहस्रं पुनरपिप्रत्येकमनंतधाभूतानि । भिषजो रक्षकत्वगुणयोगाज्जगद्रक्षासाधनानिसंति । अतोमम उर्वी महती । गभीरा अगाधरूपा । सुमतिः शुभामतिस्ते तवत्वद्विषयेतियावत् । सदास्तु । किंच । निर्ऋतिं ऋगतौ । निर्निषेधे । ऋतिर्ऋतंज्ञानं तत्प्रतिरूपत्वहेतोर्निर्ऋत्याख्यांदुर्मतिंदूरएवबाधस्व । बाधृलोडने । कथं । पराचैः पराकृत्य दुर्ज्ञानिजनंस्वर्गादिस्थानाच्छ्श्वदेवनिरस्य नरकेक्षिप्स्वाचेत्यर्थः । किंच । कृतं मयेतिशेषः । एनश्चित्पापंचास्मन्मत्तः । प्रमुमुग्धि प्रमोचय ॥ ९ ॥ अमीये ॥ ऋक्षाण्यमी ॥ येऽमीऋक्षा यान्यमूनिऋक्षाणि नक्षत्राणि । तान्युच्चा उच्चैरंतरिक्षेनिहितासो निहितानि त्वयैवेतिशेषः । यच्चतानिनक्तं रात्रौ ददृश्रे ददृशिरे इरयोरे दृश्यानि दिवा कुहचित् कदाचिदेव ईयुः प्रतीयुः प्रतीयंते । यच्चदिवासर्वदानप्रतीयंतेकदाचिदेवप्रतीयंते तदपित्वयैव । वरुणस्यपरानंदतनोर्विष्णोस्तवैवव्रतानि इत्यादीन्युक्तानिकर्माण्यदब्धान्यनिरोधितानि अप्रतिहतानि । किंच । चंद्रमाश्चंद्रोविचाकशत् चकाशृदीप्तौ दीप्तिश्चदर्शनं पश्यन् समस्तमितिशेषः । नक्तं उपलक्षणमेतत् । नित्यमेति याति तच्चत्वयैव । वरुणस्यादब्धानिव्रतानिविचाकशदित्येकवाक्यतयावायोज्यं । विचाकशदित्यस्यार्थांतरं दृश्यमानइति । चंद्रमानक्तंविचाकशत् दीप्यमानोदृश्यमानएतितदपित्वयैवेतियोजनांतरंसूचयति ॥ संप्रेरितइति ॥ योविचाकशत्चंद्रमाः सत्वयैवसंप्रेरितोनक्तमेति । उपलक्षणमेतदित्यभिप्रायेणाह ॥ परेचेति ॥ त्वदाज्ञायाःकरणाः । कृत्युल्युटोबहुलमितिकर्तरिल्युट् । व्यधिकरणोवाबहुव्रीहिः ॥ १० ॥ १४ ॥ तत्त्वायामि ॥ तदितिपरामर्शस्यविषयंदर्शयन्व्याख्याति ॥ एवंगुणइति ॥ यद्यस्मात्त्वमेवंगुण स्तदतः । शरण्यं त्वा त्वां यामि सदाशरणंव्रजामि । कथं । ब्रह्मणा वेदवाचा । वंदमानोनमन्स्तुवन्नभिवादयंश्चेत्यर्थः । किंच । यजमानः उपलक्षणमेतत् । मत्तोन्योवि

द्वान् । हविर्भिर्हविःप्रदानादिभिः । तदेवाशास्ते वांछति। किंतत् । यामीत्युक्तधात्वर्थपरामर्शोयमित्याह ॥ त्वदिति ॥ त्वद्गतिं त्वच्छरणप्राप्तिं । हेवरुणदेवदेव इहास्मासु । अहेळमानोऽवज्ञामकुर्वन् । नरमात्रमितिबुद्ध्यास्मांछरणंप्राप्तानानिंदन्नितियावत् । बोधि संबोधय । हेशुनःशेपश्रांतोसीति । हेउरुशंस उरुभिःपुरुषैःशंस्यतइति उच्चैःस्तुत । नआयुरस्मदायुः । माप्रमोषीः माछे त्सीःनछिंद्याः ॥ ११ ॥ तदित् ॥ नक्तंदिवसेच ॥ नक्तं रात्रौ । मह्यंतदित् तदेव । एतदेवब्रह्मणावंदमानइतिप्रकृतंत्वदीयं स्तोत्रंप्राहुराचार्याः । सुकार्यमितिशेषः । दिवा दिवसेच । तदेवकार्यमाहुः । किंच । हृदो हृदिस्थः । अणिवृद्ध्यभावश्छांदसः । प्रत्ययांतरंवा ल्यब्लोपनिमित्तापंचमीवा । हृदधिष्ठायेति तस्यतात्पर्यार्थोहृदिस्थः । केतः ज्ञानरूपः । तेन्यरूपमयंनारायणः । त देवकार्यमाविचष्टे सम्यग्वक्ति। पश्यत्यपि उभयत्रापिप्रयोगात् । एवंस्तुवन्गृभीतो गृहीतः।शुनःशेपोयंसमह्वत् समाह्वयत् समाह्व यति। सराजेशोवरुणोदेवोनोस्मान्मुमोक्तु मोचयतु। अद्ग्यदुःखात्सांप्रतमुपस्थितात्संसारदुःखाद्वेतिशेषः ॥१२॥ शुनःशेपोह्व ह्वत् ॥ अत्रप्रथमपादोनिगदेनैवव्याख्यातइतिदर्शयन्गृभीतपदंव्याख्याति ॥ शुनःशेपइति ॥ हृग्रहोर्भश्छंदसि। त्रिषुद्रुपदेषु बद्धइत्येतत्द्वेधाव्याख्याति । स्थानत्रयेसुबद्धः विक्रयाद्यैःसुबद्धइति । स्थानत्रयंयूपस्य द्रोर्वृक्षस्ययूपस्यपदानिस्थानानितेष्वि तिप्रथमोर्थःस्यात् । द्वितीयेतुकेविक्रयाद्याः कथंचद्रुपदानीतत्यआह ॥ द्रुतमिति ॥ संज्ञपनमालंभः । आदित्यशब्दंविष्णौयो जयति ॥ आदित्यंइति ॥ अव्ययात्त्यबित्यत्रयोगविभागादादिशब्दात्त्यप् । पूर्वन्यायेनात्रसूक्तेसर्वत्रवरुणोप्युच्यतइतिशंकां



निवारयति ॥ परेशंइति ॥ नतुवारीशइत्यर्थः । किंसर्वथापिनेतत्यआह ॥ शुनःशेपइति ॥ यत्रवरुणःसंभवतितत्रसोपिग्राह्यः । नहितेक्षत्रमित्यादौतदसंभवाद्विष्णुरेवेत्याशयः । द्रुपदशब्दस्यार्थांतरमाह ॥ गुणाइति ॥ यत्र येषुगुणेषु । तृतीयपादतात्पर्य माह ॥ करोत्विति ॥ चतुर्थस्यार्थमाह ॥ प्रसन्नइति ॥ त्रिषुपदेषुयूपस्थानेषुबद्धः । यद्वाद्रुतंपद्यंतइतिद्रुपदानिविक्रयादीनि तेषु । तृतीयार्थेसप्तमी । तैर्बद्धः । यद्वाजीवानांद्रवस्यसंसरणस्यपदानिद्रुपदानिसत्वरजस्तमांसितैर्बद्धः । शुनःशेपः यमादित्य मह्वदाह्वयति सवरुणोराजैनं शुनःशेपं अवससृज्यात् अवसृजेत् । संसृतेरवसृष्टंकरोतु । विकरणस्यश्लुः । कथं । विद्वानस्मदा ह्वानंजानन् ततश्चप्रसन्नः । अदब्धोऽप्रतिबद्धः । पाशान्विमुमोक्तु । अस्मान्कर्मपाशाद्विमुमोक्तु । अत्रापिबहुलंछंदसीतिश्लुः ॥ १३ ॥ अवते ॥ निंदांच ॥ अत्रक्रियापदस्यैकत्वाद्वावप्यवशब्दौनोपसर्गौयुक्तावित्याशयेनाद्यस्यावमवाचितांविवक्षन्व्या ख्याति । हेवरुण वयंते नमोभिस्त्वद्गतैस्त्वद्विषयैर्नमस्कारैः । हविर्भिर्यज्ञेभिर्हविर्युक्तैस्त्वन्मखैश्च । त्वन्नमस्कारत्वन्मखसमुत्पन्ना त्त्वत्प्रसादादितियावत् । तेहेळोहेळनंनिंदांच । अव अवमां अवाग्गतेर्हेतुभूतां । अवेमहे अवगच्छामः । ननुमुमुक्षोर्भगवन्निंदा ज्ञातुमयोग्या । सत्यं । उपादेयत्वेनायोग्यामपि सानिंदेयमवाग्गतिहेतुभूतेत्यवगच्छामः । हेराजन् एवमस्माभिरवगतःसचत्व मस्मभ्यं क्षयन् क्षितिराश्रयोभवन् । अस्मत्कृतान्येनांस्यघानि । शिश्रथः अशिश्रथः । छांदसश्चङ् । निश्चितत्वाल्लोडर्थेलुङ् । आशुवियोजय । असुरशब्दार्थःप्राणरंतेति । असवःप्राणाःतेषुतैर्वारमतइत्यसुरः । प्रचेतःशब्दार्थोखिलज्ञइति । प्रकृष्टमखिलवि षयंचेतोज्ञानंयस्येति । यद्यप्यत्रेमौशब्दौसंबुद्ध्यंतौतथापिप्रातिपदिकार्थमात्रमत्रोक्तमितिज्ञातव्यं ॥ १४ ॥ उदुत्तमं ॥ अत्रोक्त

माधममध्यमान्पाशान्व्याख्याति ॥ **पुण्यमिति** ॥ उत्अवबीत्युपसर्गार्थानाह ॥ **यथायोग्यमन्येषुदत्त्वेति** ॥ हेवरुणोत्तमं पाशंपुण्यमस्मदुच्छ्रथय अस्मत्सुहृद्भ्योदत्वास्मत्तोवियोजय । अधमंपाशंपापमवश्रथय द्विषद्भ्योदत्वास्मद्वियोजय । मध्यमंपाशं मिश्रं पुण्येनमिश्रंपापंविश्रयथ उदासीनेभ्योदत्वावियोजय । एवशब्देनास्यमुख्यार्थतामाह । अथ तेनवियोजनेन । हेआदित्य तवव्रते त्वत्कर्मणि त्वन्निष्ठयेतियावत् । अनागसो निर्दोषाः । सृतेश्चमुक्तावयंतवादितये अदितेस्त्वदीयलक्ष्म्याःस्याम पुत्राइति शेषः । परेशइत्यादिनोक्तंविवृणोति ॥ **एषेति** ॥ केवला प्रतिपाद्यांतररहिता । एतदप्युक्तार्थत्वएवज्ञातव्यं । अर्थांतरयोजना यांतुदेवतांतरमपिनविरुध्यते । अयोग्यत्वंकथंज्ञातव्यमित्यतआह ॥ **वाक्यैरिति** ॥ विशिष्टैरित्यस्यैवविवरणमपवादहीनैरिति। तान्येवोपलक्षणयोदाहरति ॥ **पतिरिति** ॥ अत्रसोमोवरुणस्यपतिरित्युक्त्याविचाकशच्चंद्रमानक्तमेतीतिवरुणेऽयोग्यमितिलभ्य ते । तानुभौ सूर्याचंद्रमसौ । तुल्यवीर्यावित्यनेनउरुंहिराजेतिवरुणे नयोग्यमितिज्ञायते । अस्येंद्रस्यरुद्रःपतिरित्यनेनोतापवक्ते त्यस्यवरुणेऽयोग्यताप्रतीयते । अस्यापिविष्णुरितिविष्णोःसर्वोत्तमत्वोक्त्या नहितेक्षत्रमित्येतद्वरुणे नयोग्यमितिनिश्चीयते । प तिर्मुक्तेर्वासुदेवइत्यनेनोर्ध्वंस्तूपमित्यादेरन्यत्रायोग्यताऽवधार्यते । द्रष्टेर्ब्रह्मेत्यनेनास्मेअंतरित्यादेर्वरुणेऽसंभावितत्वंदृश्यते एवम न्यदप्यूह्यं । मुक्तिमार्गेस्वेंद्रियप्रेरकाइत्यन्वयः। गुणानां देवतासंबंधिनां। तत्रतत्र देवतासु ॥१५॥ १५ ॥ **यच्चित्** ॥ एकविंशत्यृच मिदंसूक्तं॥ **दिवसे** ॥ हेवरुणदेव विशः प्रजाः। सुजनायथा तथैववयंयच्चिद्यदपितेव्रतं सेवात्मकं तत्सर्वं। द्यविद्यविदिवसेदिवसे।



प्रमिनीमसि । वैदिकोधातुः । कुर्मः ॥१॥ **मानोवधाय॥ मानोहंतुं** ॥ हेवरुणनोस्मान्वधाय हंतुं हननाय । हत्नवे हंतीतिहत्नु स्तस्मै । निघ्नतेपुरुषाय। षष्ठ्यर्थेचतुर्थी । जिहीळानस्त्यजन् धर्ममितिशेषः। तस्यजिहीळानस्य। अनेकार्थत्वाद्धातूनांहिळतिस्त्या गार्थे । दीर्घश्छांदसः। जहातेर्वाछांदसमेतद्रूपं। मारीरधः मासाधय तस्यवशान्माकार्षीः। किंच । हृणानस्य हरतःपुरुषस्य । मन्यवे कोपायच। मारीरधः व्यत्ययेनहरतिःश्नाविकरणः। धात्वंतरंवाहृणातिः॥२॥ **विमृळीकाय॥ भनस्त्वयि॥** हेवरुण वयंमनो स्मदी यं। गीर्भिः वेदवाग्भिः तच्छ्रवणादिना। मृळीकाय ते मृळीकेत्वयि॥विसीमहि षिञ्बंधने। निबध्नीमः। त्वद्विषयंकुर्मः। तत्रदृष्टांतःर थीःसारथिः।संदितं सम्यक्खंडितं वियोजितं रथाद्वियुक्तमश्वंन अश्वंयद्वद्रथेबध्नातिरश्मिभिस्तथा। मृळीकायेतिवरुणविशेषणंव्या ख्याति ॥ **मृळीकइति** ॥ मृळसुखने । अस्मात्कर्तरीकक् । अनेकार्थाहिधातवइतिरक्षणार्थत्वं । वीत्यस्यार्थोधिकमिति । प्रका रांतरेणव्याख्याति ॥ **त्वन्मनइति** ॥ हेवरुण तेमनः त्वन्मनः । कृपारूपांत्वन्मनोवृत्तिं गीर्भिः स्तुतिरूपाभिः । मृळीकाय भा वेप्रत्ययः रक्षणाय। विसीमहि निबध्नीमः । अस्मास्वितिशेषः । दृष्टांतःपूर्ववत् ॥ ३ ॥ **पराहि॥ पराक्॥** मे मम । विविधाः अनेकविषयत्वात् । मन्यवः प्रज्ञाः बुद्धिवृत्तयो वस्यइष्टये वस्यःशब्दःशुभपर्यायः । इष्टिःप्राप्तिः इषुगतौ । शुभलब्धये । परा पराक् । त्वत्पराङ्मुखतयापतंति गच्छंति । हि हा कष्टं । किमिव । वयः पक्षिणो वसतीरुपन नीडानिप्रतियद्वत् । वैषयिकसु खलाभार्थंमदीयाबुद्धयोविषयानेवधावंतिधिङ्मामितितात्पर्यं । यद्वाऽऽत्यंतिकसुखसाधनताहीनेष्वपिविषयेष्वात्यंतिकसुखला भायपतंतीतिभ्रांतोस्मीति । प्रकारांतरेणव्याख्याति ॥ **नत्वामिति** ॥ पक्षिणइत्याद्यप्यत्रानुवर्तते । नेत्यावर्तनीयं । ततश्चव

सतीरुप वसतीःप्रति वयोन पक्षिणोयद्वदितिव्यतिरेकदृष्टांतः । तथामेमन्यवःप्रज्ञाः वस्यइष्टये मोक्षादिशुभलब्धये परा दूरत स्वांनविपतंति नप्राप्नुवंति । हा कष्टमितिचयोज्यं ॥ ४ ॥ कदा ॥ पूर्वसंगतत्वेनव्याख्याति ॥ [२०।१६] अंतइति ॥ यतोस्मद्बुद्धयोविषयानेवधावंति नवरुणमतस्तंप्रतिगंतुमित्यर्थः । (वयं) कदामृळीकाय रक्षणाय अस्मदीयस्यमनसइतिशेषः । क्षत्रश्रियं क्षत्रं क्षत्रियाः धनं बलंवा तच्छ्रयतियं सक्षत्रश्रीःतं। अखिलक्षत्रपतिं नरं नरिष्यतीत्यविनाशिनं। उरुचक्षसं उरुचक्षोदर्शनंयस्यासावुरुचक्षास्तंमहादर्शनं वरुणं । आकरामहे अंजसाह्वयामः ॥५॥ १६ ॥ तदित् ॥ [२०।१६] तत्प्रसादात् ॥ तत् तस्माद्वरुणात्तत्प्रसादादितियावत् । समानमित् सममेवाशाते । अशूव्याप्तौ गत्यर्थाः ज्ञानार्थाः अवगच्छतः । कौ । ब्रह्मवायू । कुतएतत् । वेनंताविति विशेषणसामर्थ्यादित्याशयवान्व्याचष्टे ॥ [२०।१७] वेनंताविति ॥ अनेनापिकथंब्रह्मवायूनिश्चीयेतेइत्यतआह ॥ [२०।१७] तौहीति ॥ कथंभूतौ यौ तौ धृतंव्रतंयेनासौधृतव्रतस्तस्मैधृतव्रताय। दाशुषे यजमानाय। नप्रयुच्छतो नप्रयच्छतः। नकुरुतः। किं यथार्थज्ञानंप्रयोगंचकर्मणः योग्यतातिरेकेणेतिशेषः। यद्वायुच्छप्रमादे। यौतौधृतव्रतायदाशुषे यथार्थज्ञानंप्रयोगंचनप्रयुच्छतोनकुरुतोविभ्रष्टमितिशेषः। एवंविष्णुपक्षेआशातेइत्यस्याःक्रियायाः कर्तारौब्रह्मवायूकथितौ । प्रसिद्धवरुणपक्षेतयोरसंभवात्काविवित्यतआह ॥ [२०।१८] अश्विनाविति ॥ अत्रवरुणशब्देनप्रसिद्धवरुणोविवक्षितःस्याच्चेत्तदाश्विनौ आशातेइत्यस्याःक्रियायाःकर्तारौज्ञातव्याविति शेषः ॥ ६ ॥ वेदायः ॥ [२०।१८] आकाशे ॥ योसौवरुणोंतरिक्षेण सप्तम्यर्थेतृतीया । आकाशे । विवक्षाभेदेनाधिकरणस्यैवकरणत्वमितिवा । पततां गच्छतां। वीनां पक्षिणां। पदं वेद वेत्ति । कथमेतत् । सूक्ष्मविज्ञानात् । तथायःसमुद्रियः समुद्राभ्राद्धन्। अब्धिगःजलेनावःप

दंवेद तदितिपूर्वेणसंबंधः । ऋचंप्रकारांतरेणव्याख्याति ॥ [२०।१८] मुक्तानांचेति ॥ यःसमुद्रियः समुद्रेभवः क्षीराब्धिशयनोविष्णुरंतरीक्ष्यतइत्यंतरिक्षंपरंब्रह्म तेन । पततां तत्प्रसादात्संसारादुत्पततां । वीनां विशिष्टानां मुक्तानां। पदं स्थितिंवेद । नयतीतिनौर्ज्ञानं। तस्यज्ञानस्यचपदं परांगतिं मुख्यंविषयं स्वस्वरूपंवेद ॥ ७ ॥ वेदमासः॥ [२०।१९] कालं ॥ धृतंव्रतंकर्मयेनासौधृतव्रतोवरुणः। प्रजावतः प्रजायंतइतिप्रजाःकार्याणि । तद्युक्तान्द्वादश मासो मासा न्वेद । मासशब्दपर्यायोमास्शब्दः । तत्तत्कालोद्भवैःकार्यैःसहसकलंकालंचवेदेतियावत् । यश्चोपाऽऽत्मनःसमीपएवजायते नतुव्यवधानेन तंपझजंचवेद । अव्यवधानेनजन्मप्रदर्शनायपझजमित्युक्तं । यद्वा यआत्मनउपसमीपेजायतेप्रवर्ततेसामीप्यादिमान्भवतितंमुक्तंवेद । जातावेकवचनं ॥ ८ ॥ वेदवातस्य ॥ [२०।२०] वर्तनां ॥ अत्रोरोर्बृहतइतिपर्यायौ । पौनरुक्त्यपरिहारार्थमुरोरितितावद्व्याख्याति ॥ [२०।२०] महतइति ॥ परिमाणादिगुणैः । बृहतइत्येतदृष्वस्येत्येतद्विशेषणतयाव्याख्याति ॥ [२०।२०] अतिप्रकाशिनइति ॥ ऋष्वशब्दोबलवत्प्रकाशस्यापिवाचकः । बाह्यप्रकाशवचनत्वमुक्तं ज्ञानप्रकाशमादायापिबृहतःऋष्वस्येतिविशेषणविशेष्यभावेनव्याख्याति ॥ [२०।२०] बृहतइति ॥ एवशब्दोस्यार्थस्यमुख्यत्वंद्योतयति । यद्वाबृहतइत्येतदुरोरित्येतस्यैवविशेषणमित्याह ॥ बृहतइति ॥ उरोरित्युक्तेह्युपचारेणापिमहत्त्वंशंक्येत । तन्माशंकीतिबृहतइत्यनेनोरुत्वंविशेष्यतइत्यर्थः । ततश्च उरोर्ऋष्वस्य बृहतोवातस्य । वर्तनिंवर्तनां प्रवृत्तिंवेद । येदेवाअधि अधिकान्येवपदान्यध्यासतेऽधितिष्ठंतितानपिवेदेति। अत्राधीत्येतदावृत्त्यायोजितमितिज्ञातव्यं॥९॥ निषसाद ॥ [२०।२१] साम्राज्याय॥

सुक्रतुः सुज्ञानः। धृतव्रतः सः वरुणः। साम्राज्याय सकलपरिपालनाय। पस्त्यासु प्रजासु। निषसाद प्रजाअधिष्ठितवान्। चश ब्दात्गृहेष्वितिचसमुच्चिनोति ॥ १० ॥ १७ ॥ अतोविश्वानि ॥ तंत्रसन् ॥ अतः सप्तम्यर्थेतस्। अत्र तत्र प्रजासुगृहेषु। सन्वर्तमानः। चिकित्वान्कर्ता कितनिवासइत्ययंकरणेपिवर्तते। सवरुणो विश्वानिच सर्वाण्यप्यद्भुतान्याश्चर्याण्यभिपश्यति। किंच। या यानिवस्तूनिकृतानि। यानिच कर्त्वा कर्तव्यानि। कृत्यार्थइतित्वन्। तानि कृतकर्तव्यानिचपश्यति ॥११॥ सनः ॥ विश्वानि ॥ सो सौ सुक्रतुरादित्योदेवो विश्वाहा विश्वानि सर्वाण्यहानि दिनानि। नोस्माकं। सुपथा सुपथानि। निर्विघ्नानीति यावत्। करत् करोतु। नोस्माकमायूंषितारिषत्। तरतिर्दानार्थः। लेट्। ददातु। इदंप्रार्थनमुक्तौमुख्यमन्यदातूपचारइत्याह ॥ नित्यंमुक्तौवेति ॥ १२ ॥ बिभ्रत् ॥ अतिद्रुत ॥ वरुणो द्रापिं द्रुगतौ आप्लृव्याप्तौ आभ्यामिकारप्रत्ययः। आद्यस्यचाकारः। द्रुतमाप्नोतीतिद्रापिः। तंद्रापिं अतिद्रुतभ्रमं। हिरण्ययं हितंचरमणीयंच। हिरण्मयंवा। निपातनात्साधुः। ततश्चवर्णतः स्वर्णं स्वर्णसदृशं। चक्रं सुदर्शनं। बिभ्रदबिभ्रत्। विकरणव्यत्यासोद्विर्वचनंचछांदसं। वचनव्यत्यासोवा। अबिभः शत्रंत तयाप्युपपन्नमितिचेत्सत्यं। प्रकारांतरमेतत्। किंच। निर्णिजं सुनिर्णिक्तं णिजिर्शौचे। शुद्धं वस्त्रमितिशेषः। वस्त अवस्त। आच्छादितवान्। स्पशो ऽविज्ञातचरादेवाः। परि तस्य तंवरुणंपरितः। निषेदिरे सेवार्थैनिषण्णाः। प्रसिद्धवरुणेयोजयति ॥ वरुणइति ॥ प्रसिद्धोवरुणो द्रापिं पूर्ववत्। द्रुतबंधनमितियावत्। पाशमबिभ्रदिति ॥१३॥ नयं ॥ स्तंभयंति ॥ यं वरुणं। दिप्सवो दंभितुमिच्छवः। इच्छयाकरणमुपलक्ष्यते। स्तंभकाः। वीराअपि राक्षसाइतियावत्। नदिप्संति। अत्राप्युपलक्षणं। नस्तंभयंति। किंच। जनानां द्रुह्वाणो द्रोहिणः द्रुहजिघांसायां। अन्येभ्योपिदृश्यंतइतिक्वनिप्। दैत्या यंनदिप्संति यस्मैनद्रुह्यंतीतिवा। जनानामितिदिप्सवइत्यत्रापिसंबध्यते। किंच। अभिमातयः शत्रवश्च राक्षसेभ्योदैत्येभ्यश्चान्ये यंदेवंन दिप्संति इत्यादियोग्यक्रियान्वयः। यच्छब्दस्यपूर्वेणपरेणवासंबंधः ॥ १४ ॥ उतयः ॥ असमंच ॥ यो वरुणः। असामि समशब्दपर्यायःसामिशब्दः। नविद्यतेसामियस्य। यद्वा सममस्यास्तीतिसाम तदेवसामि। नसामिअसामि असममात्मनोयशो ऽस्माकमुदरेषु सामीप्याद्धृदयेषु आसमंतात् सर्वस्मिन्काले सदा चक्रे। अस्मान्स्वयशोविदश्चक्रे। नकेवलमस्मासु अन्येष्वप्या सम्यक् भूतेषु मानुषेषु मनुष्येष्वासमंताच्चक्रे। आद्यश्चशब्दोवरुणस्यक्रियासमुच्चये। अन्यावितरेतरसमुच्चये। उतशब्दस्यकैमुत्यार्थस्यतात्पर्यमाह ॥ अज्ञेष्वपीति ॥ किमुतदेवादिषु। अस्यापिपूर्ववत्संबंधः ॥ १५ ॥ १८ ॥ परामे ॥ महाज्ञानं ॥ मे मम। धीतयो बुद्धिविशेषाः। इच्छंतीरिच्छंत्यः। निश्रेयसमितिशेषः। उरुचक्षसं महाज्ञानं परेशानं। परा सर्वतः। सर्वंपरित्यज्य यंति यांति। तमेवेच्छंत्यइतिवा। किमिव। गव्यूतीः गवामूतयआह्वानानिगव्यूतयस्ताः शृंगस्वरान्। अनु प्रति। गावोन गावोयद्वत्तथा ॥ १६ ॥ संनु ॥ आपूर्णं ॥ यतस्त्वंहोतेवाग्निवत्। अग्निर्यथौदनादिकंपचतितथा। मे मदीयं। आभृतंमधु आपूर्णं मधु मोक्षस्थंसुखं। क्षदसे पचसि। व्यक्तीकरोषीतियावत्। यद्यस्माच्चत्वंममसदाप्रियं प्रियः। तत्तस्मात् नु इदानीं। पुन र्भूयो भूयः। आवां संवोचावहै संभाषणंकरवावहै ॥१७॥ दर्शंनु ॥ अदर्शं ॥ अहं नु इदानीं। विश्वदर्शतं सर्वज्ञं। तं वरुणंच।

दर्शि अदर्शि अद्राक्षं । अधिक्षमि क्षमामधिकृत्य तृतीयोतिशये । भुविस्थितं । रथं तद्रथंचादर्शि । सएवंदृष्टोवरुणः एता वेदरूपा गिरो मेसुगिरः । जुषत जुषतांच । आकर्णयतु ॥ १८ ॥ इमंमे ॥ त्वामवनेप्सुः ॥ हेवरुण मे इमंहव मिदमाह्वानं । श्रुधि शृणु । अद्यच अद्यैव । मृळय सुखय । रक्षवा मां कुतः । अवस्युः अवनेप्सुः । अवशब्दस्यक्यजंतस्येदंरूपं । अहं त्वां त्वा आचके पश्येयं । दृष्टवानस्मि । चकतृप्ताविव्यस्यदर्शनार्थत्वं ॥ १९ ॥ त्वंविश्वस्य ॥ त्वंच ॥ मेधिरोमेधावान् । मत्वर्थइरः । हे मेधिर यस्त्वमेव विश्वस्य कृत्स्नस्यजगतः । तस्यैवप्रपंचः दिवः स्वर्गस्यच । ग्मः पृथिव्याश्च । आकारलोपश्छांदसः । राजसि राजाभवसि । सयामनि काले । अस्माकमापत्कालएवप्रतिश्रुधि । विज्ञापनमाकर्णय । मोचयामित्वामितिप्रतिजानीहिवा ॥ २० ॥ उदुत्तमं ॥ तात्पर्यमाह ॥ सत्वं ॥ हेवरुण स एवंविज्ञापितस्त्वं । नो स्माकं । उत्तमंपाशं सत्वगुणाख्यं । उदंजसा मुमुग्धि मुंच । सुहृद्भ्योदत्वा । मध्यमंचरजोगुणनामकंपाशं । विचृत चृतीहिंसायां । अंजसाछिंधि । उदासीनेभ्योदत्वा । अधमानिचबंधनानितमोवृत्तिरूपाणि । जीवसे जीवितुं मुक्त्यर्थं । अवचृत द्विषद्भ्योदत्वेति ॥ २१ ॥ १९ ॥ ६ ॥ वसिष्वेतिदशर्चं सूक्तं ॥ अश्वंनेतित्रयोदशर्चं । तत्रांत्यादैवी । तांविहायद्वाविंशतेर्देवतामाह ॥ अथेति ॥ अग्निगोचरैं रग्नेर्योग्यैः ॥ वसिष्व ॥ सर्वदेवानां ॥ यद्वासर्वदेवानामित्यादिशुनःशेपस्यैवविशेषणं । वसिष्वेत्याद्येवव्याख्यानं । हेमियेध्य नित्यमेध्य सदापवित्र मेधेभववा । ऊर्जा ऊर्जबलप्राणनयोः । करणेक्विप् । बलादिकरणानांभोग्यान्नानां । वैशिष्ट्यद्योतनायभोग्येत्युक्तं । ऊर्जेदेवान्न



मुद्दिष्टमितिवचनात् । यद्वाकर्तरिक्विप् । ऊर्जितानां बलादिमतांजनानां । सदापते हरेदेव । अग्निगतेनरूपेणसर्वदेवानांपूजायै प्रोद्यतोभवन्वस्त्राणिवसिष्वाच्छादय । वस्त्राच्छादनं विनाप्रार्थनयासिद्धमतआह ॥ उत्तमेति ॥ उपलक्षणमेतत् । भूषणैरप्यलंकुरु आत्मानमितिशेषः । स एवमत्यंतमुत्सवंकुर्वंस्त्वं । नोस्मदीयमिममध्वरंमखंयज देहि । संप्रदानानुक्तेःस्ववाक्यमेवविवृणोति ॥ स्वस्मिन्निति ॥ संप्रदानस्याधिकरणत्वविवक्षया । अक्षय्यंब्राह्मणेदानमितियथा । नोअध्वरमितिप्रकृतिर्वेदानुकरणेन । यद्वा । नोअध्वरंयजेत्यनुवादेनस्वस्मिन्नस्मदीयंमखंयजेतिव्याख्यानं । मखेअध्वरशब्दंनिर्वक्ति ॥ रंमयतीति ॥ शुभोऽध्वा स्वर्गादिमार्गः । ज्ञानंवा । तदंगभूतानांद्रव्याणामुपलक्षणमेतत् ॥ १ ॥ निनः ॥ वचोनः ॥ हेयविष्ठाग्नेहोतावरेण्यस्त्वंनोऽस्मदीयंवचो मन्मभिः मनज्ञाने । ततःकरणेमनिन् । मतिभि र्बुद्धिवृत्तिभिःसह । सदादिवित्मता दिविव्याप्ततया तनोतेर्डुमतुप् । भावप्रधानंचेदं । दिवीतितत्रस्थोपलक्षणं । अशेषदेवगत्वेन सर्वदेवविषयत्वेनेतियावत् । नि अत्यंतं । नय प्रवर्तयेतियोग्यक्रियाध्याहारः । अग्नेर्यविष्ठत्वंकथमित्यतआह ॥ अवमइति ॥ उषाःस्वाहाचपर्जन्योमित्रोग्निर्वरुणोविधुः । प्रवहोनिरुद्धइंद्रोमेरुद्रोवाणीचमारुतः ॥ इत्युक्तेषुदशदेवेष्ववमः । तस्माद्यविष्ठइतिशेषः । विष्णोस्तुकथंयविष्ठत्वमित्यतआह ॥ विष्णुस्त्विति ॥ यवीयसितिष्ठतीतियविष्ठइत्यर्थः । तदधीनत्वादर्थवदितिवा ॥ २ ॥ आहि ॥ सख्येच ॥ वरेण्योममपितैषोग्निः सूनवे मह्यं मदर्थं । यद्वा ममसखैषसख्येचमह्यं । अथवा आपिः कर्मणीकारः । प्राप्यः । ममस्वामीतियावत् । एषभृत्यत्वादापये कर्तरीकारः । म

ह्यमायजतिहिस्म देवताइतिशेषः । नानाविधःसंबंधोजीवेश्वरयोरनेनोच्यते ॥ ३ ॥ आनः ॥ हेअग्नेवरुणोमित्रोऽर्यमा इत्येव
मादयः । रिशादसोदेवाः । नोबर्हिरागत्यसीदंतु उपविशंतु । मनुषोमनुष्यायथातथाप्रत्यक्षीभूताः ॥ ४ ॥ पूर्व्यहोतः ॥
[२।१।१६] अस्यमे ॥ हेपूर्व्य पूर्वस्मिन्कालेभव । होत रग्ने । अस्यैवंस्तुतवतःसख्यस्यच भावभवित्रोरभेदात् । सख्युश्चनः मेर्थे मंदस्व
मदंकुरु । इमा मदीयाः । गिरश्च सुश्रुधि सम्यक्शृणु । उ एव । मंदस्वेतिप्रकारांतरेणव्याख्याति ॥ [२।१।१६] स्वातंत्र्यादिति ॥ स्वा
तंत्र्यात्कारणात् णिचोंतर्णीतत्वेनमंदस्वेत्यस्यमादयस्वेतिवार्थः । अस्मिन्पक्षेऽस्यनःसख्युस्येतिषष्ठ्योद्वितीयार्थाः । यद्वा देवानि
त्यध्याहारः ॥ ५ ॥ २० ॥ यच्चित् ॥ [२।१।१६] शश्वत् ॥ शश्वता शश्वत् । सर्वेषुकालेषु । तना विस्तरतः सर्वदेशेषु । चिदपि । यद्यदा
देवंदेवं सर्वान्देवान्यजामहे सर्वेवयंयजमानाः । तदा त्वेइत् त्वय्येव । हविर्हूयते हि ॥ ६ ॥ [२।१।१७] प्रियोनः ॥ संप्रियः ॥ विश्प
तिर्विशांप्रजानांपतिः । मंद्रः मंदतेःकर्तरिरिः मदकरः । सुखकरोवरेण्योहोताग्निः । नःप्रियोऽस्तु । स एवंगुणशिष्टस्त्वंनःप्रियो
भवेतियावत् । स्वग्नयः शोभनोग्निर्येषामस्तितेतथोक्ताः । वयमपितस्यप्रियाअसाम ॥ ७ ॥ स्वग्नयोहि ॥ स्वग्नयो देवासो
देवाः । नोस्मभ्यं । वार्यं वरणीयं । वित्तं दधिरे दत्तवंतः । चशब्दात्पालयांबभूवुश्च । स्वग्नयोवयंच । तन्मनामहे मन्यामहे ।
असदीयंदेवताभिपूजनंदेवानांचास्मभ्यंवित्तदानादिकंसर्वमग्निनिमित्तकमिति ॥ ८ ॥ अथानः ॥ [२।१।१८] स्त्रीणां ॥ हेअमृत अथ अ
न्यच्च । उभयेषां उभयवर्गिणांस्त्रीणांपुंसांच । नोस्माकंमर्त्यानां । मिथः परस्परं । प्रशस्तयः स्तुतयः । संतु संप्रीतिरस्त्वितियावत्
॥९॥ विश्वेभिः ॥ [२।१।१८] चनः ॥ हेअग्ने विश्वेभिःसर्वैरग्निभिःसह । इमं असदीयंयज्ञ मिदंवचश्च स्वीकुर्वितिशेषः । चनोधाइत्य



स्यार्थमाह ॥ चनइति ॥ धा अधाः । धेहि । सहसोयहोइत्येतदग्नौविष्णौच क्रमेणव्याख्याति ॥ [२।१।१८] वायोरिति ॥ अग्निरेवचे
द्विवक्षितःतदासहसोवायोर्यहोपुत्रेतिव्याख्येयं । भगवांश्चेत्तदावायुनाव्यंग्यइतिकृत्वासहसोयहोइतिसंबुद्धिर्युक्ता । प्राणंवावमहा
न्सहओजोबलमित्याचक्षतइतिहिश्रुतिः । यहुशब्दोऽपत्यनामसुपठितः ॥१०॥ २१॥७॥ अश्वंन ॥ अत्रवारवच्छब्दस्याभि
धेयमाह ॥ [२।१।१९] वारवानिति ॥ अश्वंनेत्यस्यतात्पर्यमाह ॥ [२।१।१९] स्वदृष्टांतइति ॥ कुतइत्यतआह ॥ [२।१।१९] यस्मादिति ॥ सो श्वोबडवामु
खश्चविष्णुरेवयस्मात्तस्मात्स्वदृष्टांतइति । अहमध्वराणांसंम्राजंतं ईशानं । वारवंतमग्निंत्वां अश्वंन अश्वंत्वामिव । नमोभिर्नमस्का
रात्मकैर्वाक्यैर्वंदध्यै उत्तमपुरुषार्थेध्यै वंदे । यद्वातुमर्थएवाध्यै तथासतिप्रारभइतिक्रियाध्याहारः । प्रह्वन्यमिवत्वांस्तोतुमुचितमिति
॥१॥ सघा ॥ [२।१।२] सूनुः॥ शवसा षष्ठ्यर्थेतृतीया । शवसोबलरूपस्यवायोःसूनुः पृथुप्रगामा गमेर्भावेअनिण् । पृथु विस्तृतं । प्रगाम प्र
कृष्टज्ञानं यस्यासौतथोक्तः पृथुज्ञानः । सोग्निर्नोस्माकं । सुशेवः शोभनंशेवंयस्माद्भवतिसतथोक्तः । सुशेवकृत् सुखकृत् । बभूयात् भ
वेत् । द्विर्वचनंछांदसं । किंच । सघ सएव । अस्माकंमीढ्वान् । सेचकोदातास्वामीच बभूयात् । प्रकारांतरेणव्याख्याति ॥
नः [२।१।२] सूनुरिति ॥ नःसूनुरित्येववायोर्ज्यं । कथंविष्णोर्वायुसूनुत्वमृषिसूनुत्वंचेत्यतआह ॥ [२।१।२] व्यंग्यत्वादिति ॥ वायुनाऋषि
णाचेतिशेषः । तर्हिशवसेत्यस्यकथंसंबंधइत्यतआह ॥ [२।१।२] वायुनेति ॥ वायुनासार्धंसूनुरितिवा मीढ्वान्बभूयादितिवायोज्यं । सुशे
वइत्यस्यार्थांतरमाह ॥ [२।१।२] सुशेवइति ॥२॥ सनः ॥ [२।१।२] असात् ॥ विश्वायुर्विश्वंपूर्णमायुरस्येतितिनित्यः । सो ग्निस्त्वं । नोस्मान् ।
सदं सीदंत्यस्मिन्निति सदशब्दः सदःशब्दपर्यायः । अध्याहृतकर्मप्रवचनीयप्रतिशब्दयोगेद्वितीया । सचबीप्सायां । इच्छब्दो

वातदर्थः । अतउक्तंप्रतिप्रतिसदइति । सर्वेष्वपिस्थानेष्वितियावत् । दूराच्च दूरस्थाच्च । आसाच्च समीपतश्च । अंतिकनाम सुपाठात् । समीपस्थाच्चाघायोरघार्थायोः । आयुःशब्दसमानार्थोयमायुशब्दः । यद्वा गमनमायुशब्दं । तादर्थ्याच्चताच्छब्द्यं । मर्त्यान्निश्चितंपाहि । चशब्दःप्रार्थनासमुच्चये ॥३॥ **इममूषु** ॥ **त्वमिमां** ॥ हेअग्ने । त्वमस्माकं । इमं स्तवमितिशेषः । इमांस्तुतिं । सनिं दानस्वरूपां । षणुदाने । देहीत्युपलक्षितामितियावत् । गायत्रं गायत्रीछंदआत्मिकां । नव्यांसं नवतरां । अत्यंतापूर्वां स्तुतिषुश्रेष्ठां । देवेषुसुप्रवोचः । सादरंवदच । देवान्प्रापयेतियावत् । उशब्दश्चशब्दार्थे । लकारव्यत्ययःछांदसः ॥ ४ ॥ **आनः** ॥ [२२।१] **उत्तम** ॥ हेअग्ने त्वं । परमेषुवाजेषु अन्नेषु । नोस्मानाभज । तथा मध्यमेषुवाजेषुनआभज । अत्रपरममध्यमग्रहणमधमानामप्युपलक्षणं । तथावाजग्रहणंसर्वभोगानां । तथाचोत्तमाधममध्यमेषुभोगेष्वस्माभिर्भुज्यमानेषुसत्सु त्वमस्मान्रक्षकत्वेनावाप्नुहि । त्वद्रक्षितावयंसर्वभोगभोक्तारोभूयास्मेत्युक्तंभवति । तथांतमस्य ज्ञानलक्षणस्य वस्वो वसुनः । चतुर्थ्यर्थे षष्ठी । ज्ञानवस्वर्थंचास्मान्शिक्षेतियावत् । इदमेवमुख्यंप्राध्र्यंनतुभोगाइत्येवशब्दः । अंतमशब्दस्यज्ञानवाचित्वंकथमित्यत आह ॥ [२२।२] **अंतइति** ॥ अंते संसारस्येतिशेषः । तस्यार्थोमोक्षइति । तादर्थ्येसप्तमी । मोक्षसाधनतयेतियावत् । मितत्वेनप्रमितत्वेन । आतोनुपसर्गेकः ॥ ५ ॥ २२ ॥ **विभक्तासि** ॥ [२३।१] **क्षीराब्धि** ॥ हेचित्रभानोत्वं । सिंधोः समुद्रस्योर्मौ । षष्ठ्यर्थेसप्तमी । जातावेकवचनं । ऊर्मीणामुपाके । अंतिकनामैतत् । स्थितइतिशेषः । क्षीराब्ध्यूर्मिसमीपस्थःसन्नाविभक्ता विभागकर्ता मुक्तभोगविभागदोसि । दाशुषे यजमानाय । सद्यएवाविलंबेन । क्षरसि नित्यंददासि । अखिलमीप्सितमितिशेषः । चित्रभानु



शब्दंहरौनिर्वक्ति ॥ [२३।३] **उत्तमेति** ॥ एतच्चोक्तस्मरणार्थं ॥ ६ ॥ **यमग्ने** ॥ [२३।४] **यंमर्त्यं** ॥ हे अग्नेविभो त्वं यंमर्त्यं । पृत्सु युत्सु अध्यात्मंज्ञानाज्ञानात्मकेषु तत्कर्तृकेष्वेवयुद्धेष्ववाः रक्षसि । यमपि यंच वाजेष्वन्नेषु जुनाः जुनगतौ । गमयसि प्रेरयसि । सएवमर्त्यःशश्वतीर्नित्याइषोन्नानिनित्यसत्सुखं मुक्तिगतं यंता । यमिरत्रगत्यर्थः । गंता । शश्वतीरिषइत्यस्यव्याख्यानांतरंनित्यान्भोगान्वेति । कथंभोगानांनित्यत्वमित्यतउक्तं । मुक्तिगानिति । अग्निविषयेकथमितिचेत् । ऐहिकभोगविषयंव्याख्यास्यामः । कथमिहनित्यत्वमित्यतआह ॥ [२३।५] **इहेति** ॥ उपचारबीजंचबहुकालीनत्वं ॥ ७ ॥ **नकिः** ॥ [२३।५] **परिपूर्णः** ॥ संततबलःसहंत्यः । सहइतिबलनाम । त्यइतितनोतेर्ड्यः । सहसा बलेन त्यः संततः सहंत्यः । सहःशब्दस्यमुमागमः । यद्वासहसोवायोःपुत्रएवाग्निरितिसहंत्यः । त्यइत्यपत्यार्थेतद्धितः । हेसहंत्य अस्य यंमर्त्यमितिप्रकृतस्य । त्वदीयस्यतुकयस्यचित्कस्यचिच्छ्रवाय्यः श्रवणीयः । श्रुतिसुखकृत्सुप्रसिद्धतमोपिवाबहुलोपीतियावत् । वाजो भोगः । पर्येता पर्याप्तः । परिपूर्णो नकि नैवास्ति । महानपिभोगस्त्वद्भक्तानांपरिपूर्णोनभवतीत्येतदुपपादयति ॥ [२३।६] **यस्मादिति** ॥ दित्ससि ददासिच । यतोमहाभोगान्पुनःपुनस्तेभ्योददासि तस्मात्तेषांनकोपिभोगोंतिमइतिभावः । यद्वायस्मात्पुनःपुनरित्यत्युच्चमोक्षभोगंददासि तस्माद्बहुलोपिसांसारिकोभोगस्तेषांनपरिपूर्णस्तुच्छएवेति ॥ ८ ॥ **सवाजं** ॥ [२३।७] **वाजंतारयिता** ॥ अग्ने सप्रकृतस्त्वदीयएवविश्वचर्षणिः सर्वप्रजाधिपोभूत्वा दानेन गवांबलीवर्दानांचसमाप्तत्वात् । अर्वद्भिरश्वै वाजमन्नंतरुता तारयिता । तरतिरत्रानयत्यर्थे । आनेताऽस्तु भवेत् । त्वद्भक्तश्चक्रवर्तीभवतु । अर्थिभ्योगाश्चददातु । यथागोदानेधान्यानयनादिकमश्वैरेवकुर्यात्तथेत्यभिप्रायः । किंच विप्रेभिः विप्रैःकरणैः । सनिता दाता

ऽस्तु । कुतः विपुलदानतः तावद्विपुलदाताभवतु । यदेकस्यदातुमशक्तत्वेनविप्रान्करणीकुर्यादितिभावः । प्रकारांतरेणव्याचष्टे ॥ [२२।८] युद्धस्येति ॥ सत्वदीयोविश्वचर्षणिर्भूत्वार्वद्भिरश्वैर्वाजंतरुता युद्धस्यतारकः पारगोस्तु । तथाविप्रेभि र्विप्रेभ्यो वाजंसनिता अन्नस्य भोगस्यवादाताभवेदिति । प्रकारांतरेणव्याख्याति ॥ [२२।८] इंद्रियैरिति ॥ सत्वदीयोविश्वचर्षणिर्बहुशिष्योऽर्वद्भिरिंद्रियैस्त्वद्विषयैर्वाजं तमसागुणेनसहयद्युद्धंतस्य । तरुतास्तु । तथाविप्रेभ्यःसनिताज्ञानदोस्त्वित्यथवार्थः ॥ ९ ॥ **जराबोध** ॥ [२२।९] **स्तुतिबोद्धा** । जरतिःस्तुत्यर्थः । जरां स्तुतिं । बुध्यतइतिजराबोधः । हेजराबोध यतस्त्वंजराबोधः स्तुतिबोद्धा । तत्तस्माद्रुद्राय रुजांविद्रावकायेशायविष्णवेतुभ्यं । दृशीकंस्तोमं प्रत्यक्षामुच्चैःक्रियमाणांतांस्तुतिं । विविड्ढि विशेषेणविद्धि । सर्वदावधारय । त्वद्विषयामिमांस्तुतिंत्वमेवावधारयेत्यर्थः । ननुपरमेश्वरःसर्वज्ञःतत्कथंविशिष्यस्तुतिबोद्धाकथ्यते कथंचनित्यज्ञानोविविड्ढीतिप्रार्थ्यतइत्यत आह ॥ [२२।९] **नित्येति** ॥ सर्वज्ञोपीत्यपिग्राह्यं । तत्फलं स्तुतिफलं । वेत्ता स्तुतेः । विद्धीतिप्रार्थ्यतेचेत्यपिद्रष्टव्यं । किमर्थं । यज्ञियाय यज्ञेभवाय । विशेविशे सर्वस्मैजनाय तत्प्रयोजनसिद्धये । प्रसिद्धाग्नौव्याख्याति ॥ [२२।९] **तवेति** ॥ अनेनरुद्रपदमत्राग्निविषयं अन्यत्समानमित्युक्तंभवति । ईशायेतिवदताशिवोप्यत्ररुद्रइतिसूचितं । अत्रेतिहासोभवति । अग्निःस्तूयमानःशुनःशेपमुवाचरुद्रंस्तुहिरौद्राहिपशवइति । सतंप्रत्युवाच । नाहंजानामिरुद्रंस्तोतुं । त्वमेवैनंस्तुहीति । तददिमुच्यते जराबोधेति । हेजराबोधरुद्रस्तुतिवेत्तस्तत्तस्मादेवयज्ञियायविशेविशे आदरार्थद्विर्वचनं । मह्यमितियावत् । रुद्राय रुद्रस्यस्तोमंत्वमेवविविड्ढि कुर्वितियावत् ॥ १० ॥ २३ ॥ **सनः** ॥ अनिमानशब्दार्थवदंस्तस्यमहच्छब्देनगतार्थतांवारयति ॥ [२२।१०] **नितरामिति** ॥ यद्यपिनीतिमानशब्देनसमस्तं तथापिसामर्थ्यान्नञर्थेनसंबध्यते । महत्त्वंह्यापेक्षिकंभवति अतोनितराममानत्वेनतद्व्याख्यातमित्यर्थः । **पुरुश्चंद्रः** चदेराह्लादनार्थत्वात्पुरुसुखः । पारस्करादित्वात्सुट् । सइतिप्रसिद्धः । उत्तरत्रपुनःसइतिश्रवणात् । यद्वा निमानत्वादिविधानेन भिन्नवाक्यार्थत्वाद्विःसइत्युक्तं । तेनचशब्दश्चसमर्थितः । धूमःकेतुरस्येत्यग्नेर्धूमकेतुत्वंप्रसिद्धं । हरेस्तुकथमित्यतआह ॥ [२२।१०] **धूत्करोतीति** ॥ हरेश्चेद्धूमकेतुताविवक्षितातदाधूञ्कंपनइत्यतःताच्छील्येमइत्यस्मात्सूत्राच्चाच्छील्यविशिष्टकर्तरिमप्रत्ययेकृतेयद्यस्माद्धूत्करोतितस्माद्धरुत्मान्धूमइतीरितः । सकेतुरस्येतिव्याख्यातव्यमित्यर्थः । सएवंभूतोग्निः नो स्मान् । धिये ज्ञानाय । वाजायान्नायचहिन्वतु । सुकर्मणांकरणेप्रहिणोतु । यैःकर्मभिर्धीमंतोवाजवंतश्चस्याम ( तत्रप्रेरयतु ) ॥ ११ ॥ **सरेवान्** ॥ [२२।१२] **देवानां** ॥ विश्पतिरिव राजायथा तथारेवान् वित्तवान् । दैव्यो देवसंबंधी केतुः देवानांकेतुभूतो ऽग्रगामित्वात् । बृहद्भानुः बृहत्तेजाः । सो सावग्निर्नो स्मदीयान्युक्थैः उक्थानिस्तोत्राणिच । शृणोतु ॥ १२ ॥ **नमः** ॥ [२२।१३] **अर्थ** ॥ अथ देवाःस्तूयंतइतिशेषः । अत्रमहदादिशब्दनिर्दिष्टान्देवानाह ॥ [२२।१३] **नारायणेति** ॥ वटुस्वरूपाश्चेत्यनेनाशिनशब्दोवटुवाचीत्युक्तं । नमआवटुभ्यइतिपुराणसमाख्यानात् । एतएव अर्भकत्वादिनैवोक्ताएव । स्कंदपूर्वाइत्युक्तानेवेंद्रादयइतिपरामृशति । कथमेकत्रैवत्रिप्रकारत्वमित्यतउक्तं । कुत्रचिद्रूपविशेषे । एतदुक्तंभवति । नारायणादयइंद्रांताअवांतरपित्रादिसंबंधप्रसिद्धिशून्यामहांतः । शिवादिपित्रादिसंबंधवत्त्वेनप्रसिद्धाःस्कंदेंद्रादयोर्भकाः । तएवरूपविशेषेयुवानआशिनाश्चेति । एतेननारायणादीनांसर्वेषामपिदेवानांनिर्जरत्वात्कथंमहत्त्वमित्याशंकाप्यपास्ताभवति । युवत्वेपिप्रकारभेदेनमहत्त्वाद्युक्तेः । प्रकारांतरेणयूनामपिनारायणादीनांमहत्त्वंव्याख्या

ति ॥ [२२।१४] महत्त्वमिति ॥ यूनामप्येषांमहत्त्वंयुज्यते यतोगुणतोमहत्त्वमुच्यते नजरसेत्यर्थः । तर्हिवयःप्रकरणविरोधःस्यादित्यतो युवत्वादिकमपिगुणतएवेत्याह ॥ [२२।१४] इंद्रादयइति ॥ तएवतदीयैः स्वैःस्वैरापेक्षिकाल्पैर्गुणैराशिनाअर्भकाश्चसमीरिताः । नारायणादिवदनंतगुणत्वस्य अस्मदादिवदत्यल्पगुणत्वस्यचाभावान्मध्यगुणत्वाद्युवानएवेंद्रादयोब्रह्मादीन्सध्यमगुणान्यूनोपेक्ष्याल्पगुणत्वादस्मदादिभ्योत्यल्पगुणेभ्योधिकगुणत्वादाशिनाः । नारायणादिभ्योत्यल्पगुणत्वादर्भकाइति । एवंमहदादिपदार्थानुक्त्वा पूर्वार्धवाक्यार्थमाह ॥ [२२।१५] कृतमिति ॥ महदादिभ्योदेवेभ्योनमः अस्माभिर्नमस्कृतं । उत्तरार्धंव्याख्याति ॥ [२२।१५] शक्तिमंतइति॥ देवैर्यूपान्मोचितावयंयदिशक्नवाम यजनेशक्तिमंतोभवाम तर्हिदेवान्यजाम । शक्त्यभावेपि ज्यायसो ज्यायसांदेवानां । शंसं शंसनंस्तुतिमात्रं मावृक्षि । व्रश्चूछेदनइत्यस्येदंरूपं । नलुपामः । नलुप्तंकरिष्यामोहेदेवाइति । अस्त्वेवंमहत्त्वादिव्याख्यानंयदा समस्तादेवाविवक्षिताःस्युः । यदातुविष्णुरेकएवविवक्षितस्तदाकथमित्यतआह ॥ [२२।१५] एकस्येति ॥ रूपभेदा रूपविशेषाः । वाशब्दान्मध्यमप्रकारद्वयोपेताः । ततःकिमित्यतआह ॥ [२२।१६] युवत्वेति ॥ महत्त्वभेदात् परिमाणभेदात् । अपिशब्देनार्भकाशिनयोः समुच्चयः ॥ १३ ॥ २४ ॥ यत्रग्रावा ॥ नवर्चमिदंसूक्तं । तत्राद्याश्चतस्रऐंद्र्यः । विमुक्तपाशःशुनःशेपएताभिर्जुहवांचकार॥ [२२।१६] विस्तीर्ण ॥ हेजल्गुलः । नःस्वीकृतस्तुतेइंद्र यत्रयज्ञे । पृथुबुध्नः जातावेकवचनं । पृथुविस्तीर्णंबुध्नमधस्तनभागोयेषांतेतथोक्ताः । विस्तीर्णाधस्तनाः भागशब्दोध्याहार्यः । ऊर्ध्वः ऊर्ध्वदेशसंबंधी । अभिषवोद्धृताः सोमाभिषवेऋत्विग्भिरुद्धृताः । ग्रावाः ग्रावाणः । सोतवे सोमंसोतुं । भवति संति । तत्रोलूखलसुतानां द्वितीयार्थेषष्ठी । उलूखलेसुतान् । धिषणाभिषुतान् । धिषणइत्युलूखलनाम । नोस्मदीयान् सोमानितिशेषः । अवेदु अवतिरवाप्यर्थः । इत् उ इतिनिपातावधारणे । सर्वथैवावामुहि । जल्गुलइत्येतत्कथंस्वीकृतस्तुतित्वंवदेदित्यतआह ॥ [२२।१७] गुरेति ॥ अस्माद्धातुव्याख्यानात् । स्तुत्यः स्तुतेःस्वीकर्ता । जरतिस्तावत्स्तुत्यर्थः ततोभावेसंपदादित्वात्क्विप् गुरतेश्चकसुन् । उभयत्रापिरोलइतियोगविभागेनरेफस्यलकारः । जरंगुरतीतिजल्गुलास्तस्यसंबुद्धिर्जल्गुलः जल्गुलइतिसंबोध्यतइतिशेषः ॥ १ ॥ यत्रद्वौ ॥ पूर्वार्धतात्पर्यमाह ॥ [२२।१८] फलकेइति ॥ अत्रसोमाभिषवस्यहेतूफलकेस्त्रियोजघनसाम्येनप्रोक्ते । अत्रस्त्रीग्रहणाभावेप्युत्तरत्रनारीग्रहणात्स्त्रियइतिलभ्यते । मैथुनकालेस्त्रीपुंसजघनाविवेतिव्याख्याननिरासायैवशब्दः । फलकयोरुत्तराधरभावाभावात् । अधिषवणीशब्दस्यफलकएवप्रसिद्धस्योलूखलग्रावणोर्व्याख्यातुमयुक्तत्वात् । जघनैकदेशयोर्जघनशब्दस्यवृत्तेर्द्वावित्यादिकंचोपपद्यते । यत्रयज्ञेद्वौजघनाविवाधिषण्या अधिषूयतेसोमएतयोरितिद्वेफलके । कृता कृते । तत्रोलूखलसुतानामितिपूर्ववत् । फलकयोरेवाधिषवणीत्वादुलूखलसुतानामितिसर्वत्रोपचारः ॥२॥ यत्रनारी ॥ यत्रयज्ञेस्थितयोःफलकयोरपच्यवमधोगमनमुपच्यवमुपरिगमनंच । नारी तज्जघनयुगलमितियावत् । शिक्षते उपादत्ते । तस्यापिगतावपच्यवोपच्यवसद्भावात् । तत्रोलूखलसुतानामिति फलकयोःकिंनिमित्तावुपच्यवापच्यवावित्यतआह ॥ [२२।१८] उपच्यवश्चेति ॥ संगतिभेदतः फलकद्वयसंयोगस्यशिथिलत्वात् । ततःप्रहारपर्यायेणेतिशेषः । ऋक्त्रयगतान् ग्रावादिशब्दानध्यात्मंव्याख्याति॥ [२२।१९] जिह्वेति॥ वागिंद्रियमिहजिह्वेत्युपलक्ष्यते । वाग्युक्ति वाचोमनसावेदद्वारकोयोगः । अथशब्दःसमुच्चये । कुतः तथासादृश्यादितियावत् । एवमुत्तरोपितथाशब्दः । सादृश्यंचयथासंभवमूह्यं । उरुःखलश्चदेहः । उलू

खलइतिवक्तव्ये उरुःखलइतिवचनमूर्ध्वंखमस्येत्युलूखलशब्दव्याख्याननिरासार्थं । बहोरलाक्षणिकस्यांगीकारात् । यत्रहिधान्यादिकंचूर्ण्यतेतत्रखलशब्दोवर्तते । तस्यचोरुत्वंभूमेरूर्ध्वत्वं । सोमइतिमनइतिचैकोर्थईरितइतियोज्यं । अन्यथेरितमितिस्यात् । मनःसोमलतास्थानीयमितियावत् । ज्ञानोत्पत्ताविति सर्वत्रान्वयः । अनेनसोमरसस्थानीयंज्ञानमितिसूचयति । ओष्ठशब्दोर्धर्चादित्वात्पुन्नपुंसकलिंगः ॥ ३ ॥ **यत्रमंथां** ॥ **मंथरश्मीन्** ॥ यत्रयज्ञे । रश्मीनुलूखलस्येतिशेषः । द्रव्यांतरेणदार्ढ्यायविबध्नते । किमिव । मंथां मंथानं । यमितवाइव नियंतुंयथा । मंथरश्मीन्यथाचाश्वंनियंतुमश्वरश्मींस्तंभादौविबध्नंतितथातत्रोलूखलसुतानां । केअध्यात्मंरश्मयइत्यतआह ॥ **रश्मयइति** ॥ अन्यत्र बाह्यात् । चस्त्वर्थः ॥ ४ ॥ **यच्चित्** ॥ इयमुत्तराचौलूखल्यौ ॥ **यस्मात्** ॥ हेउलूखलक स्वार्थेकः । यद्यस्मात्त्वंगृहेगृहे । चित् अपिसर्वेष्वप्येतद्यजमानानुष्ठितयज्ञगृहेषु । अथवाध्यात्मंदेहेदेहेयुज्यसे युक्तोवर्तसे । पूज्यतयेतिशेषः । हि तेनकारणेन । इहयज्ञे । जयतामिवदुंदुभि जयतांपुंसांदुंदुभिवत् । द्युमत्तमं द्युमत्प्रकाशवत्तमं उच्चैरितियावत् । वद ध्वनिंकुरु । कथमचेतनस्योलूखलस्यैवंप्रार्थनमित्यतआह ॥ **पृथिवीति** ॥ तस्य उलूखलस्य । तद्गतः पृथिवीगतः । वनस्पतिरितिशब्देनेरितःसोमस्यामात्योप्यपरउलूखलस्यदेवः । वनस्पतिरितीरितइत्यनेनद्वितीयायामृचिवनस्पतइत्येतदुक्तार्थंभवति । आयजीइतिद्वेऋचावुलूखलमुसलयोरितिकेचित् । तदसत् । अधिषवण्योःप्रकृतत्वेनतयोरेवद्विवचनविषयत्वोपपत्तेः । फलकयोरप्यचेतनयोःप्रार्थनादिसंभवार्थंप्रसंगाद्देवतामाह ॥ **सोमोवेति** ॥ अत्रापिसोमामात्यइत्युक्तमनुवर्तते । तेनवनस्पतीइतिव्याख्यातंभवति । सोमस्यतद्गतस्यविष्णोश्चकथंवनस्पतित्वमित्यतआह ॥ **वृक्षाणामपीति** ॥ देवतेतिवर्तते ।



एवंपृथिव्यास्तद्गतस्यहरेश्चवनस्पतित्वंसमर्थनीयं । अतः यच्चिद्धीत्याद्यासुचतसृषूक्तंयुक्तमितिशेषः । एतेनप्राग्देहस्योलूखलत्वमुक्तमिदानींतूलूखलाधिकरणत्वमितिविरोधोपिपरास्तः । पूर्वमचेतनस्येदानींदेवतायाउलूखलशब्दोक्तत्वात् ॥ ५ ॥ २५ ॥ उतस्म ॥ **वृक्षाग्रे** ॥ हेवनस्पते उलूखल । वातउत वायुस्तुवायुरपि । तेअग्रमित् त्वदभिमतवृक्षाग्रएव । विवाति विविधंवातिस्म । एतत्घटनार्थंचप्राग्वृक्षाणामपीत्युक्तं । विष्णौपूर्वार्धतात्पर्यमाह ॥ **वनानामिति** ॥ विष्णुस्तुवनानांप्रसिद्धानां भजनीयत्वेनवनशब्दार्थानांदिवौकसांवा पतिः । तस्माद्वनस्पतिरितिशेषः । वनतेःकर्मण्यकारः । देवइतिप्रसिद्धवायुव्युदासार्थं । अग्रेगच्छतीति सेवकइतियावत् । यतएवमिंद्रःस्वीयेनवातेन त्वदीयवृक्षाग्रमेवचालयति नतून्मूलयति । अथो तस्मादिंद्रेणोपकृतत्वादिति देवतांतरे । विष्णौतुयतएवंत्वमतिसमर्थः अथो तस्मादिंद्रायप्रसिद्धायविष्णवेच । षष्ठ्यर्थेचतुर्थी । विष्णुंप्रतितुस्वस्यपातवे पानाय । सोमंवाप्रसिद्धंबाह्ये अध्यात्मंमनोवा । सुनु ॥ ६ ॥ आयजी ॥ द्वेफलकदेवताकेइत्युक्तं ॥ **आयाज्यौ** ॥ आयजी कर्मणीकारः । आयाज्यौ सम्यग्याज्यौ । वाजसातमा वाजमन्नंसनुतइतिवाजसौ । जनसनखनक्रमगमोविट् । अतिशयेनवाजसौ वाजसातमौ । अन्नलब्धृणामुत्तमौ । उच्चा उत्कृष्टौ । ता तौ फलकौ । विजर्भृतोहि विशेषेणभक्षयतोहि । अतिभक्षकौवर्तेते । कथमिदंलभ्यतइत्यतआह ॥ **जर्हेति** ॥ अस्मात्प्रथमपुरुषद्विवचने हकारस्यभकारेरमागमेबहुलग्रहणाद्दकारेचविकरणेकृतेसती दंरूपंसिध्यतीत्यर्थः । काविव हरीइव । अश्वौ इंद्रस्येतिशेषः । यथाधांस्यन्नानि बप्सता बप्संतौ । अत्तिकर्मायं । अन्नभक्षकौ तथा । ननुहरी धानाऋजीषादेरंधसोभक्षकौप्रसिद्धौ फलकयोस्तुकथंव्याख्यानमित्यतआह ॥ **सोमस्येति** ॥ सवनकाले सो

मस्यभक्षकाविति अत्र फलकविषये । व्याख्येयमित्यर्थः ॥ ७ ॥ **तानः** ॥ [२३१३] **ऋष्वौ** ॥ हेऋष्वावतिमहत्तरौवनस्पती । ता तावु क्तस्वरूपौयुवां । ऋष्वेभिः महद्भिःसोतृभिःसहेंद्राय । नोस्मदीयं । मधुमत् स्वादुयुक्तं । सोममितिशेषः । सुतं सुनुतं । यद्य प्यृष्वशब्दोमहन्नामैव तथापिसोतृणांमहत्त्ववद्देवतामहत्त्वंनभवतीतिप्रदर्शनायातिमहत्तरावित्युक्तं ॥ ८ ॥ **उच्छिष्टं** ॥ प्रजाप तेर्हरिश्चंद्रस्यांत्याचर्मप्रशंसावेतिकेचित् । तदसत् । अप्रतिभासनात् । सोमस्यैवसंस्कार्यतयाप्राधान्यप्रतीतेश्च । अतःसोमोत्रदे वतेतिगम्यते ॥ [२३१४] **सोमं** ॥ एतं सोमं । उत् उत्पवनाय । पवित्रे द्रोणोपरिपवित्रके द्रोणकलशस्योपरिस्थितेपवित्रे । आसृज वि सृज । शिष्टंसोमं चम्वोश्चमसयोः । भर पूरय । गोरधित्वचि चर्मणउपरिनिधेहि स्थापय । सोमस्यचर्मणिनिधानस्याप्रसिद्ध त्वादृजीषमितिशेषः । यद्यप्यत्रैतमितिद्रोणोपरीतिचनास्ति । तथाप्यथैनंद्रोणकलशमभ्यवनिनायोच्छिष्टंचम्वोर्भरेत्येतयर्चेतिब्रा ह्मणस्मरणायोक्तं । तेनापिसोमएवात्रदेवतेतिसिद्ध्यति । अतएवबृहद्देवताकारआहसोममंत्याप्रशंसतीति । नन्वत्रभर सृज नि धेही तिकंप्रत्युच्यतइत्यतआह ॥ [२३१५] **भरेति** ॥ उपलक्षणमेतत् । अन्यस्याभावादितिभावः । अध्यात्मंचमसादिशब्दाभिधेय माह ॥ [२३१५] **शिरइति** ॥ इदंतच्छिरइतिहिश्रुतिः । उदरशब्देनहृदयमुपलक्ष्यते । तत्रहिसोमशब्दस्यमनसःप्राचुर्येणवृत्तिः । सोम शुद्धिहेतोः पवित्रस्यबुद्धेश्चसाम्योपपादनंमनःशुद्धिस्तयायतइति । गोशब्दावाङ्मुखेस्तीतिमुखचर्मैवगोचर्म । एतेषुसोमस्यभर णादिकंव्याख्याति ॥ [२३१६] **मनइति** ॥ एतेष्वाधारेषु स्थितइतिशेषः । अस्मिन्पक्षेनिधेहीत्यत्रापिसोमस्यैवकर्मत्वं । विष्णवीतिप्रयुं जानोवेदतुल्यत्वंभाष्यस्यसूचयति ॥९॥२६॥ **यच्चिद्धि** ॥ सप्तर्चमिदंसूक्तं । आवइंद्रमितिद्वाविंशत्यचं । आद्येनोत्तरस्यचपंचद



शभिरिंद्रंतुष्टाव ॥ [२३१७] **यत्सत्** ॥ हेसत्य सद्गुण । सोमपाः तुविमघ महामख सर्वमखार्चनीयेंद्र । यत् यस्मा च्चित् एव । वयमि दानीं । अनाशस्ताइवास्तुत्याइव । स्मसि स्मः । अत्यंताप्रशस्तानीश्वरोपिनप्रशस्तान्करोतीतीवशब्दः । ततः कारणात् । त्वंतु त्वमेव । नोस्मान् । शुभ्रिषु शुभ्रेषु । सहस्रेषु सहस्रसंख्याकेषु । गोष्वश्वेषुच तद्विषये । आशंसय प्रशंसयलोकेनेति । बाह्ये स्फुटं । अध्यात्मंतु गौर्वाक् । अश्वामनआदीनिज्ञानेंद्रियाणि । ततश्चशुभ्रवाङ्मनआदीनांविषयेऽस्मान्प्रशंसयेत्यर्थः । वागादी नांशुभ्रत्वंशुद्धत्वंभविष्यति । सहस्रत्वसंपादनायबहुवाच्येत्युक्तं । ततश्चविषयद्वारकंवागादीनांसहस्रत्वमित्युक्तंभवति । बहवश्च परमात्मगुणादयः ॥ १ ॥ **शिप्रिन्** ॥ [२३१८] **सुखिन्** ॥ हेशिप्रिन् सुखिन् । वाजानांपते ऽन्नपते । शचीवः शचीतिवाङ्नाम । तद्वत्त्वंचतत्प्रयोगादिज्ञत्वेन । वागज्ञ । दंसना दंसनानि । सर्वशोलोकस्यकर्माणि । तव त्वत्प्रेरितानि त्वद्विषयाणिच । सएवं विधस्त्वमातूनः० ॥ २ ॥ **निष्वापय** ॥ [२३१९] **दैत्य** ॥ हेइंद्र ईश्वर । मिथुदृशा मिथुइतिनिपातोमिथ्यार्थे मिथ्यादृशौ । सामर्थ्या दैत्यरक्षःप्रजे । सस्तां षसस्वप्ने । अज्ञानिन्यौभवतां । मिथ्यादृशोस्तत्प्रार्थनंव्यर्थमित्यतउक्तं पुनर्बह्विति । कथं । यथानित्यंचा बुध्यमानेभवतस्तथा त्वंतान्निष्वापय । किंच आतूनः० ॥ ३ ॥ **ससंतु** ॥ [२३१०] **स्वपंतु** ॥ हेशूर । त्या स्ताः । व्यत्ययेनते प्रसिद्धाः । अरातयस्ते तवशत्रवः । ससंतु स्वपंतु सर्वदाऽज्ञानमोहिताभवंत्वितियावत् । किंच । रातयस्तवमित्राणिबोधंत्वे व । जानंत्वेव तवरूपमितिशेषः । शूरेतिसंबोधनस्यतात्पर्यंसुनिर्भयमिति । स्वार्थमेववा त्याइतिस्त्रीलिंगमितिज्ञापनायप्रजाश ब्दःप्रागुक्तः । अन्यथादैत्यरक्षसीइत्यवक्ष्यत् । किंच । आतूनः ० ॥ ४ ॥ **समिंद्र** ॥ [२३११] **पापया** ॥ हेइंद्र प्रभो । गर्दभं दुर्वा

क्त्वादिसाम्यान्मायावाद्याख्यंगर्दभं। संमृण हिंसार्थोयं। तमस्येवक्षिप्त्वातत्राश्मभिःसदासंचूर्णय। कथंभूतं। नुवंतं त्वांस्तुवं तमपि। स्तुवतोहिंसानुपपन्नेतिचनवाच्यं। पापयामुया माययेतिशेषः। माययास्तुतिंविवृणोति ॥ मिथ्येति ॥ शाठ्येनेत्यर्थः। प्रकारांतरेणमाययानुवंतमित्येतद्व्याख्याति ॥ माथामयाइति ॥ ततश्चमायामाश्रित्येत्यर्थः। अनेनदयाशीलदेवप्रसीदेत्यादिस्तुतेःशाठ्यमूलत्वं निराकारमोंकारगम्यमित्यादिरवणस्यास्तुतित्वमुक्तंभवति। किंच। आतूनः ० ॥ ५ ॥ पताति ॥ दूरंच ॥ किंच। वातो वायुदेवः एनान्प्रकृतांस्त्वन्निंदकान् वनात् वने। कुंडृणाच्याकुंडृणाच्यां। तस्मिन् प्रसिद्धे अंधेतमसीतियावत्। दूरं दूरात्। अधिपताति अंतर्णीतण्यर्थाल्लेट्। पातयतुच। किंच। आतूनः ० ॥ कथंतमोवनमित्यतआह ॥ वनमिति ॥ वनतिःसंभजनार्थः। संभजनंचदृढग्रहः। वियोगाभावः। अतस्तत्तमोदृढग्रहेणवनमित्युच्यते। कुंडृणाचीशब्दस्यसनिमित्तमभिधेयमाह ॥ एवेति ॥ तत्तमएवोल्बणावेदना कुंडृणाचीतिसंप्रोक्ता। स्त्रीलिंगसंपादनायवेदनोल्बणेत्युक्तं। कुतः कुंडान्नीचत्वतः। कःकुंडः कुतश्चतमसस्ततोनीचत्वमित्यतआह ॥ कुंभइति ॥ कुंभः कुंभीपाकः। हीतिरौरवोथमहानित्यादिवाक्यप्रसिद्धिंदर्शयति। तद्वति स्तेषांनिंदकानांगतिस्तमः। एवंतर्हिकुंडनीचेतिभवितव्यं कुंडृणाचीतिकथमित्यतआह ॥ रेफइति ॥ अत्ररेफशब्देनश्रुतिसाम्यादृकारउच्यते। कुंडशब्देऽकारस्यऋकारः नीचेत्यत्रस्वरयोरीकाराकारयोर्व्यत्ययश्च तस्य कुंभीपाकान्नीचत्वस्याधिक्यज्ञापनार्थंप्रयुक्तौ अतएवप्रागधिकमित्युक्तं ॥ ६ ॥ सर्वं ॥ सर्वं ॥ हेइंद्र परिक्रोशं परिक्रोशकरं



निंदकं। सर्वपापिनंजनंजहि। जंभय श्वादिभिर्नित्यंदंशय। कथं। कृकदाश्वं कृकाः ऋकचाः तैर्दाश्वं दंशनं। ऋकचैर्दारुणोदंशनं यथेतिशेषः। किंच। आतूनः० ॥ ७ ॥ २७ ॥ आवः ॥ हे ॥ हेवाजयंतः। वाजंयुद्धं तत्कुर्वंतः। तत्करोतीतिणिच्। युध्यंतो योद्धारः। यद्वा। वाजमन्नं। सर्वभोगोपलक्षणंचेदं। वाजं सर्वभोगान्। भुंजतइति प्रातिपदिकाद्धात्वर्थेइतिणिच् भोगिनो देवाइतियावत्। एवशब्देनान्नमिच्छन्नहमितिव्याख्यानमपाकरोति। अनेकव्यत्ययापत्तेः। वो युष्माकंस्वामिनं। शतक्रतुं मंहिष्ठं पूज्यतममिंद्रमिंदुभिःसोमैरहमासिंचे। कमिव। क्रिविं नृपं यथा यद्वत्। सार्वभौममैंद्रेमहाभिषेकेयथाभिषिंचतितथेत्यर्थः। नृपःकुतःक्रिविः। कृतेः पालनादेःकरणात्। करोतेःकिविः। यद्वाक्रिविंयथा जगतःकर्तारमीशंविष्णुमिव। नन्विंद्रोपि यदाविष्णुस्तदाकथमेतदित्यतआह ॥ स्वेति ॥ हरेर्विवक्षायामयंस्वदृष्टांतोभवेत् ॥ १ ॥ शतंवा ॥ शतेनवा ॥ योयमिंद्रः शुचीनां शुद्धानां। समाशिरां संगताशिराणां। आशिरावतां दीर्घःछांदसः। स्त्रीलिंगोवाशिराशब्दः। सोमानामितिशेषः। शतंवा शतेनवा। सहस्रंवा सहस्रेणवा। इत् क्वचित्। नउ नैव। आरीयते आलीयते। निलीनोभवति। युगपदनेकैर्दीयमानैरपिसोमैर्नतस्यालंबुद्धिर्भवतीतिबहुभोगशक्तिमानितिभावः। किमिव। निम्नंन पातालइव। अत्रनेत्युभयत्रसंबध्यतइत्युक्तंभवति। प्रकारांतरेणव्याचष्टे ॥ विलापयतीति ॥ तान्सोमानेव। अनेनैवमुक्तंभवति। यइंद्रः शुचीनांसमाशिरांसोमानां। शतंवासहस्रंवारीयतएव। अंतर्णीतण्यर्थोयं विलापयत्येव। स्वस्मिन्नंतर्भावयत्येव। किमिव। निम्नंन बह्वपिजलंपातालंयथातथैवेति। तमाऽसिंचइतिपूर्वेणान्वयः ॥ २ ॥ संयत् ॥ बलिनै ॥ यद्यस्मादेना एतानिविश्वानिचअस्येंद्रस्योदरेप्रविष्टानि।

शुष्मिणे बलिने । अस्मा इंद्राय । षष्ठयर्थेचतुर्थी । मदाय तृप्तये । व्यचोनसंदधइतिवक्ष्यमाणमर्थवशात्बहुवचनांतंसंबध्यते । व्यचांसि व्यक्तीः । प्रभावान्कचिन्नैवसंदधुः । हिरवधारणे । किंच । समुद्रः समुद्रेकात्कारणात्समुद्राख्याप्रकृतिश्च न व्यचो व्यक्तिं । संदधे । कुतः । अस्यमहत्त्वतः । तस्मादितिपूर्वेणसंबंधः । सप्रकृतिकानिविश्वान्युदरंप्रविश्यतृप्तिंजनयितुंनालं । किमु तसोमाइति ॥ ३ ॥ अयमुते ॥ २३।१९ तवेव ॥ हेइंद्रायंप्रपंचः । चशब्दात्प्रकृतिश्चेतिशेषः । तउ तवैव । त्वदधीनएव । किंच । गर्भधिं गर्भोधीयतेऽत्रेतिगर्भाशयं कपोतइव कपोतोयथाव्याप्नोतितथा । समतसि अतसातत्यगमने । सम्यग्व्याप्नोषि । विश्व मितिशेषः । त त्तस्मा चित् एव नो स्माकमृषीणांवचोवेदं । ओहसे वहेःसंप्रसारणंछांदसं वहसि वेदप्रतिपाद्योभवसि । नहिप रिमितप्रभावोवेदप्रतिपाद्योभवति ॥ ४ ॥ स्तोत्रं ॥ २३।२० गिरां ॥ हेराधानां सिद्धीनां पते । गिर्वाहो मेगिरांवेदानांवाहक । प्रवर्त क । वहतेरसुवृद्धिश्च । ह्रस्वःछांदसः । वीर विक्रांत । यस्यतेतवस्तोत्रमखिलंवेद वैदिकमितिशेषः । इयंचमेसूनृतावाक्तस्यतव विभूति र्विभूतेरैश्वर्यस्यप्रतिपादिकास्तु । त्वयाविभूतिप्रतिपादिकेतिकल्प्यतां । ननुवेदानामर्थसंबंधस्यौत्पत्तिकत्वात्कथमस्त्विति प्रार्थ्यतइत्यतआह ॥ २३।२० अस्त्विति ॥ ल्यब्लोपनिमित्तापंचमी । प्रसादेनफलदानमपेक्ष्यास्त्वित्येतदुदीर्यते । मदीययासूनृतयावा चाप्रसन्नोभूत्वाफलंदेहीत्यभिप्रायेणसूनृताविभूतिररस्त्वितिलक्षणयोच्यतइति ॥ ५ ॥ २८ ॥ ऊर्ध्वः ॥ २३।२१ उत्तमः ॥ हेशतक्रतोवि भो । नोस्माकमूतये अभिप्रेतार्थस्यज्ञानादेः सिद्ध्यर्थं । अस्मिन्वाजे । अत्रा नुभवसिद्धे । ज्ञानाज्ञानमये युद्धे । ज्ञानाज्ञानहेतू नांप्रमाणतदाभासादीनांसंघर्षे । ऊर्ध्व उत्तमोऽस्मत्प्रतिपक्षस्यजेतासन्सर्वदातिष्ठ । ततएव मत्स्थितःत्वमहंचत्वामन्येषुशिष्येषु



संब्रवावहै सम्यगुपदिशाव ॥ ६ ॥ योगे ॥ २३।२२ तेजस्वि ॥ हेसखायोवयं । तवस्तरं तवइतिबलस्येवतेजसोपिनाम । अंतर्णीतमतुब र्थंच । तेजस्वितमं । तमिंद्र मूतयेयोगेयोगे सर्वेषुध्यानयोगेषु । वाजेवाजे सर्वेषुयुद्धेषु । मननेषुच हवामहे ॥ ७ ॥ आघ ॥ अत्रय दिश्रवदितिपरमेश्वरस्यश्रवणंपाक्षिकंप्रतीयते । तत्परिहारायसोपस्करंव्याख्याति ॥ २४।१ उक्तंचेदिति ॥ यद्यस्माभिरागच्छेत्युक्तंस्यात् तदासइंद्रःशृणोत्येवेत्यध्याहारः । यदिश्रवच्छृणुयात् । भक्त्योक्तंश्रुतंचेत्तर्हिसहस्रिणीभिः सहस्रवतीभिः । ऊतिभिरभिप्रायैः बह्वर्थ युक्ताभिप्रायैःसह अन्नानांपृथगुक्तेस्तदन्यान्बहून्पुरुषार्थान्दातुमितियावत् । वाजेभिरन्नैरपिसह अन्नानिचदातुं । नो स्माकं । हव माह्वानं । उपागमत्घ उपागच्छेदेव । आगमिष्यति ॥ ८ ॥ अनु ॥ २४।२ पुरातनस्य ॥ अहंप्रत्नस्य पुरातनस्यानादेर्विष्णोः । ओ कसस्तदोकसःप्रसिद्धस्थानस्यवैकुंठादेरर्थे । तुविप्रतिंनर मक्षयमिंद्रंहरिं त्वां । हुवे ह्वये । आह्वयामि । तुविप्रतिःकुतइत्यतआ ह ॥ २४।२ महानिति ॥ तुवीतिबहुनाम । ततोमहान् प्रतिप्रतिस्थः । सर्वान्वैरिणःप्रतितिष्ठतीतिप्रतिः । प्रतिरयमुपसर्गः । उपसर्गा श्चसतिक्रियावचनेतत्संबंधिनोभवंति । असतितुससाधनांक्रियामाहुः । द्विर्वचनंत्वभिप्रायमात्रेणनतुततःकर्मप्रवचनीयत्वं । तु विर्महांश्चासौप्रतिः प्रतिप्रतिस्थश्चेतितुविप्रतिरितीरितः । कथंभूतं । यं ते त्वां । पूर्वं पूर्वस्मिन्काले । तेपिता ज्ञातैव नतुज नको विश्वकृत् ब्रह्मा । हुवे आह्वयामास । यद्वा तेत्वदीयस्त्वद्भक्तो विश्वस्यपिताब्रह्मा । हुवइतिव्याख्येयं ॥ ९ ॥ तं त्वा ॥ २४।३ तंत्वां ॥ हेविश्ववार सर्वैर्वरणीय । पुरुहूत बहुभिराहूत । सखे । सर्वत्रवसतीतिवसुः । वसो । वयं त मुक्तरूपं त्वा त्वामाशास्महे इच्छामः । नकेवलमस्मदर्थे किंतुजरितृभ्यः अन्येभ्योपिस्तोतृभ्यः ॥ १० ॥ २९ ॥ अस्माकं ॥ २४।४ अस्माकं ॥ हे

सोमपाः सखेवज्रिन् । शिप्रिणीनां शिप्रंसुखं । लिंगव्यत्ययेनसुखिनां । सोमपाव्नां आतोमनिन्नित्यादिनावनिप् । सोमपातृणां तवसखीनामस्माकं । भद्रंभवत्वितिशेषः ॥ ११ ॥ **तथातत्** ॥ **अस्तुतत्** ॥ हेसोमपाः सखेवज्रिन्देव । वयं ते सकाशादितिशेषः । यथायच्चेष्टये गत्यर्थोयं प्राप्तुमुश्मसि । वशकांतौ । इच्छामः । तत्तथास्तु । कथं त्वंतथाकृणु कुरु । हरौवज्रिशब्दंघटयितुंवज्रशब्दार्थमाह ॥ **वज्रइति** ॥ वजगतावित्यस्माद्धावेरप्रत्ययेकृतेगत्यर्थानांज्ञानार्थत्वात्वज्रोज्ञानमितिलभ्यते । तदस्यास्तीतिवज्रीति ॥ १२ ॥ **रेवतीः** ॥ **वित्तसंयुताः** ॥ वित्तसंयुताइत्यादिनारेवत्यादिवत्याशब्दार्थास्तावदाह । रैपर्यायोरेशब्दः । ततोरेवतीरेवत्योवित्तसंयुताइतिभवति । यद्वापशवोरेवत्यःप्रोक्ताः । पशवोवैरेवत्यइत्यादेः । सदेरकारप्रत्ययोदस्यचधः । सीदंत्यस्मिन्नितिसधआश्रयः । मदीहर्षे भावेघञ् । मादः सुखं मादस्यसधः । उपसर्जनस्य(परनिपातः)पूर्वनिपातः । ततश्चसधमादइत्यस्य सुखस्थितावित्यर्थोभवति । तिष्ठत्यस्मिन्नितिस्थितिः । सधमादस्थयोःछंदसीतितुनाश्रितं । सहशब्दार्थानुपपत्तेः । तुविशब्दोबहुपर्यायः । वाजशब्दोन्नवाची । स्त्रीलिंगंवैदिकं । अतःतुविवाजा महान्नानि । क्षिनिवासगत्योरित्यतोडुप्रत्ययः । क्षुर्निवासः । क्षुमंतःस्थितिसंयुताः । केचित्तुक्षुशब्दइत्यस्येदंरूपंमत्वाक्षुमंतःशब्दवंतःकीर्तिमंतइतिव्याकुर्वते । तदसत् । धातोःशब्दविशेषार्थत्वेनकीर्तेरलाभात् । रेवतीस्तुविवाजाइत्यस्यज्ञानयुक्तंसुखंवार्थः । ज्ञानस्यैवमुख्यवित्तत्वात् । सुखस्यैवमुख्यान्नत्वात् । इदानींवाक्यार्थमाह ॥ **स्यादिति** ॥ ऊर्जितमेतदन्नादिकंसधमादइंद्रेऽस्माकमीशेस्वामिनिसतीतिशेषः । रेवतीर्वित्तसंयुतास्तुविवाजाःपशवस्तुविवाजाश्चवासंतु । कथंभूताः । वयंयाभिःक्षुमंतःसंतोमदेमसुखिनोभवेम ॥ १३ ॥ **आघ** ॥ **त्वंवान्** ॥ हेधृष्णो प्रगल्भ । त्वावान्

त्वद्वांस्त्वत्स्वामिकःपुरुषः । त्मना मंत्रेष्वाङ्याादेरात्मनः । आत्मनाघ त्वयैवाप्तःस्यात् । नकेवलमन्नादिमानितिचशब्दः । वक्ष्यमाणसमुच्चयेवा । किंच । स्तोतृभ्यः षष्ठ्यर्थेचतुर्थी स्तोतॄणां । तृतीयार्थेवा तैस्तोतृभिःशिष्यैः । आ समंततः । इयानः गम्यमानस्तदाश्रयश्चस्यात् । इण्गतावित्यस्येदंरूपं । किमिव । ऋणोः रणतोः रणतेःक्विपिसंप्रसारणं शब्दंकुर्वतोः । चक्र्योः चक्रपर्यायश्चक्रिशब्दः चक्रयोरक्षंन यथाक्षमाश्रयभावेनवर्ततेतथा । दार्ष्टांतिकेस्तोतृभ्यइत्युक्तत्वादत्राप्यृणोरित्युक्तं ॥ १४ ॥ **आयत्** ॥ **स्तोतॄणां** ॥ हेशतक्रतो यद्यस्मात्त्वं । शचीभिर्वेदवाग्भिर्जरितॄणां स्तोतॄणां । कामं काम्यं सर्वमादुवः आदुहः । दुहेःछंदसिलेटिरूपमेतत् । दुग्धवानसि । ऋणोरक्षन्नेतिपूर्ववत् । आश्रयत्वमात्रेणदृष्टांतः । तस्मान्ममापिकामंदेहीतिशेषः । द्वितीयस्यआशब्दस्यवैयर्थ्यमित्यतआह ॥ **आसमंतादिति** ॥ ऐहिकंपारत्रिकंचेत्यर्थः । पक्षांतरमाह ॥ **अत्याधिक्यइति** ॥ प्रागेकआशब्दोदुवइतिक्रियासंबंधी । द्वितीयस्तुससाधनक्रियावाचीकामविशेषणमित्युक्तं । इदानींतुद्वावपिदुवइतिक्रियासंबंधिनौ । अत्याधिक्यार्थत्वेननवैयर्थ्यंचेत्यर्थः । पृथक्पदंपुनराशब्दः ॥ १५ ॥ ३० ॥ **शश्वदिंद्रः** ॥ तस्माइंद्रःस्तूयमानःप्रीतोमनसाहिरण्यरथंददौ तमेतयाप्रतीयायशश्वदिंद्रइति ॥ **क्रोधात्** ॥ इंद्रःपोप्रुथद्भिः प्रथप्रख्यान इत्यस्येदंरूपं । प्रथयद्भिरात्मवीर्यमितिशेषः । नानदद्भिः अतिशयेनपुनःपुनर्वानादान्कुर्वद्भिः । शाश्वसद्भिः क्रोधात्भृशंभूयोभूयश्चश्वसद्भिः सुरैःशश्वत्सर्वदा । धनानि दैत्यसंबंधीनि । जिगाय जितवान् । दंसनावान्कर्मवान् । सइंद्रोनो स्मभ्यं हिरण्यरथं स्वर्णमयंरथमिदानीं अदात् प्रादात् । सएवचनोस्मभ्यंसनिता अखिलमैहिकंदाता । यद्वा । स नोस्मदीयमखिलंहविरादिकंसनिता लब्धा । किंच । स नोस्माकंसनये लब्धये । पार

त्रिकलाभकृतेचभवति ॥ १६ ॥ आश्विनौ ॥ तृचआश्विनः ॥ गोमत् ॥ हेदस्रावश्विनौ । अश्ववत्याऽश्वयुक्तया । शवीरया सुखपुत्रयुजाच। इषा न्नेनसह गोमद्धिरण्यवदितिक्रियाविशेषणे । यथायुवयोरागमनंगोमद्धिरण्यवच्चस्यात्तथैव।नोस्मान्प्रत्याया तं। अश्वादिकंदातुमायातमितियावत्। शवीरयेत्येतत्सुखपुत्रयुजेतिव्याख्यातं । तत्किंचिद्विशदयति॥ शमिति ॥ यतःशंसुखंवी रश्चपुत्रः तद्वान्मत्वर्थेद्वंद्वान्मत्वर्थेअर्शआदिभ्योच् । अतोयुक्तमुक्तं। इडादिशब्दानामध्यात्ममर्थानाह॥ इडिति ॥ ऐश्वर्यं मनो जयः । ईशऐश्वर्यइत्यस्येदंरूपं । तथाशब्दःसमुच्चये । वीर्यमविद्याजयेपराक्रमः । नामतो नाम्नोच्यंते । हितंचरमणीयंचेतिपरं ब्रह्महिरण्यं। यथालोहानांहिरण्यंश्रेष्ठंतथासर्वतोपिगुणोच्छ्रितमितिवाहिरण्यं॥१७॥ समान॥ समानयोग॥ हेदस्रावश्विनौ। वां युवयोर्भक्तानां। त्वदात्मनां त्वच्चित्तानां । भगवतएकत्वादेकवचनं । समानंयोजनंयोगोयस्यासौतथोक्तः। समानयोगयुक्तः। युक्तत्वंचकारणत्वेन चित्सुखत्वादमर्त्यश्च हि अयंप्रसिद्धोरथोदेहः।समुद्रे क्षीरसागरे । ईयते ज्ञायते। कोसौसमानोयोगइत्यतआ ह॥ मोक्षस्येति॥ यावतायोगेन तावान्। प्रसिद्धाश्विनोस्तुसमानयोजनो योग्ययुग्यवान्। अमर्त्योऽलौकिकः । समुद्रईयेत आस मुद्रगामीति॥१८॥ न्याघ्न्यस्य ॥ एकंचक्रं॥ हेअश्विनौ। सौरस्यरथस्यैकंचक्रं अघ्न्यस्य पर्वतनामैतत्। मानसोत्तरस्यगिरेर्मूर्धनि मूर्ध्नि । युवां नियेमथुः नियमितवंतौस्थः । युवाभ्यांनियमितंवर्ततइतियावत्। अन्यदपरंचचक्रं चक्रस्थानीयोक्षप्रदेशो द्यांपरि दिवि मेरावीयतेज्ञायतेभवन्नियमनेन । प्रकारांतरेणव्याख्याति ॥ पापमिति ॥ हेअश्विनौ रथस्यजगदाख्यस्यैकंचक्रंप्रवृत्ति



हेतुत्वसाम्यात्पापं । अघ्न्यस्य अःविष्णुस्तेनहन्यतइतिहरिघ्न्यस्य दैत्यजनस्यमूर्धनि । नियेमथुः युवांस्थापितवंतौस्थः । अन्य च्चचक्रंपुण्यं । द्यांपरि लक्षणयादिव्यस्यजनस्योपरि । भवद्भ्यामेवेयते ॥ १९ ॥ कस्ते ॥ उषस्योयंतृचः ॥ कोमर्त्यः ॥ हेकधप्रिये अमर्त्ये विभावरि उषः कोमर्तो मर्त्यः । ते तव । भुजे भोगायभवति । नकोपि । कधप्रियइत्येतद्व्याचष्टे ॥ यतइ ति ॥ सर्वंप्रियमेवयस्यनकिंचनदुःखकारणंससर्वप्रियः । यतोभवान्सर्वप्रियोऽतः कधप्रियः । तस्यस्त्रीरूपस्यसंबुद्धिःकधप्रिये । कथमेतल्लभ्यतइत्यतआह ॥ किमपीति ॥ कधशब्दःकिमपीत्यस्यार्थेनिपातः । सर्वमपीत्यर्थः । सर्वंप्रियमेवनत्वप्रियंकिमपीत्ये तत्कुतइत्यतआह ॥ पूर्णानंदा त्पूर्णानंदत्वादिति । यतस्त्वममर्त्या पूर्णानंदाच अतस्तवभोगःकथंमर्त्याधीनइति । कंनक्षसे णक्ष गतौ आप्तकामत्वतःकारणात्स्वार्थहेतुतःकमेवप्रतिगच्छसि । नकंचनप्रति । विभावरीतिव्याचष्टे ॥ विशेषादिति ॥ विशे षाद्भा विशिष्टाभा । तयाजगदावरणात् । विशिष्टाभा विभा । वृणोतेरकारः । स्त्रियामीकारः । विभयावरीविभावरी । विभा वरीचेतिसंबंधः ॥ २० ॥ वयंहि ॥ चिंतयामः ॥ हेअश्वे न जात्यश्ववच्चित्रे सदाभद्रे । ईश्वरापेक्षयापुलिंगं । इवादियुक्तमु पमानमुपमेयवृत्तीतितत्तोपिसंबुद्धिः । अरुषि अरुणेवर्णतः । चशब्दोगुणसमुच्चये। वयमांतात् आपराकात्। अंतपराकयोरा । पंचम्यर्थेषष्ठी । आङभिविधौ । विश्वं ते तवैकस्य । इत्यमन्महि चिंतितवंतोहि सदाचिंतयामः । पराकांतौव्याचष्टे ॥ पराक इति ॥ श्रीरेवपराकः । कथं। सुसुखेतिकृत्वा । परंआसम्य कंयस्येति । पुलिंगंपुंसामर्थ्योपेतत्वात्। अंतःकलिः।सकलजीवांत्य

त्वात् । लक्ष्मीपूर्वकलिपर्यंतंविश्वंतवैवस्वमितिजानीमइत्यर्थः । प्रसिद्धायामुषस्येतदसंभवादांतादापराकादितिप्रकारांतरेणव्याख्याति ॥ [२४।१६] नरकेति ॥ यदोषादेव्यत्रोदिता तदानरकस्वर्गयोर्नरकस्वर्गाभ्यामित्येवंव्याख्येयं । अंतोविनाशः । दुःखंनरकः । परमसुखत्वात्पराकःस्वर्गः । नरकस्वर्गयोर्देवी स्वामिनीतिस्वार्थएववाषष्ठी ॥२१॥ त्वंत्येभिः ॥ अत्रदिवोदुहितरित्येतत्प्रसिद्धायामुषसिव्याख्याति ॥ [२४।१७] प्राणेति ॥ यद्यपिवागेवद्यौस्तथापिकेवलायाःस्त्रियोपत्यसंबंधाभावात्प्राणग्रहणं । परमेश्वरेदिवोदुहितृत्वं घटयति ॥ [२४।१७] तदिति ॥वाचाव्यंग्यत्वादेव हेदिवोदुहितरुषस्त्वं । त्येभिः त्यैःप्रसिद्धैः । वाजेभिर्वाजैः । अन्नानिदातुमितियावत् । अस्मान्प्रत्यागहि आगच्छ । अस्मे अस्मासु । रयिं वित्तंच । निधारय निश्चितंस्थापय ॥ २२ ॥ ३१ ॥ ११ ॥ ६ ॥ शुनःशेपदृष्टाऋचोव्याख्यायोत्तरासामृषिंदेवताश्चाह ॥ [२४।१८] अग्नीति ॥ यःसूर्यगंस्वर्णाभिधंहिरण्यनामानंविष्णुंसंस्तुवन् स्वर्णस्तूपइति हिरण्यस्तूपइतिप्रसिद्धिमगमत् । ष्टुञ्स्तुतावित्यस्मात्डूपप्रत्ययः।हिरण्यस्यस्तूपोहिरण्यस्तूपइति विष्णुःकुतोहिरण्यनामा । स्वर्णसमानचारुवपुषं । तर्हिरूपवत्त्वादनित्यः शाश्वतं । यश्च तंविष्णुंदृष्ट्वापरतः परैर्महितःपूजितश्चाभवत् । सुज्ञानमप्याप्तवान् । स हिरण्यस्तूपआंगिरसउत्तराभिर्ऋग्भिरग्नींद्रादिगतंपृथक्स्थितमप्यग्न्यादिनामानमच्युतंभक्तितःस्तौति । अग्नींद्रादिदेवतास्तत्रतत्रवक्ष्यामः ॥ ७ ॥ त्वमग्नेप्रथमोअंगिराऋषिः ॥ अष्टादशर्चमिदमाग्नेयंसूक्तं ॥ [२४।२०] अंगेरसः ॥ हरिःअंगेरसः शरीरेसारइत्यंगिराउच्यते । ज्ञानतो ज्ञानवत्त्वादृषिश्चोच्यते । नत्वंगिरसर्षिणैक्यादित्येवशब्दः । दिवौकसांप्रियत्वेनदेवानांसखाचोच्यते । योजनातु । हेअग्नेत्वंप्रथमः सर्वोत्तमोसि । तथांगिराऋषिर्देवः । शिवः सुखात्मको देवानांसखाऽभवः सर्वदाभवसि । किंच भ्रा



जंत्यःऋष्टयआयुधविशेषायेषांतेभ्राजदृष्टयोमरुतो ऽतीतवर्तमानावायव स्तवव्रते व्रतेनैव त्वद्विषयव्रतवत्वेनैव । विद्मनाऽपसः विदेःक्मन् । विद्मनाविद्ययासहितमपःकर्मयेषां । सविद्यकर्मिणःसंतःकवयोमहाविज्ञानाअजायंत । बभूविरे बभूवुः । ईश्वरार्थेन ज्ञानसहितकर्मणापुनःकथंज्ञानावाप्तिरित्यतोमहच्छब्देनवीतिचज्ञानंविशिनष्टि ॥ १ ॥ त्वमग्नेप्रथमोअंगिरस्तमः ॥ [२४।२१] व्यापीच ॥ हेअग्नेत्वंप्रथमः अंगिरस्तमो ऽतिशयेनांगानांरसः कवि र्देवानांव्रतं त्वद्विषयंकर्म । परिभूषसि परिभूषयसि । सफलं करोषि । किंच । विश्वस्मैभुवनाय विश्वस्यभुवनस्य । विभुर्व्यापीच मेधिरः । इरोमतुबर्थे । भूमनिंदाप्रशंसासुनित्ययोगेऽतिशायने । संसर्गेस्तिविवक्षायांभवंतिमतुबादयः । सुमेधयायुतः । द्वेजडाजडेवेत्तीतिद्विमाता । शयुः शेता पयोब्धिशायी । अग्नौतु शेतिःस्थानार्थः । आमाशयोजलाशयइतियथा । स्थाता । सएवंभूतस्त्वमायवे मनुष्यनामैतत् । प्रजायै प्रजानां । कतिधाचित् कतिभिरपिप्रकारैर्युक्तः । कतिप्रकारोपिभवसिहि । कथमिति । स्वामीगुरुर्नित्यसखापिताच ॥२॥ त्वमग्नेप्रथमोमातरिश्वने ॥ त्वं [२४।२२] विष्णो ॥ हेअग्नेविष्णोत्वं । विवस्वतेमातरिश्वने । प्रथममाविर्भव । भूतेलोट् । आविर्बभूव । आविर्बभूविथ । युष्मद्युपपदेपि त्वंदेवशक्त्यामित्यादौप्रथमपुरुषोदृष्टः । प्रथमइतिसामर्थ्यादाविर्भावविशेषणं । अतिशयेनाविर्बभूविथेति । कुतः । सुक्रतूया शोभनःक्रतुर्ज्ञानमस्येतिसुक्रतुः । दैर्घ्यंछांदसं । भावप्रधानात्ततस्तृतीयायायादेशः । सुक्रतुत्वेन । अस्यमातरिश्वनःसुबोधवत्त्वात् । यद्वाशोभनःक्रतुःसुक्रतुः तदिच्छासुक्रतूया । इच्छयाप्राप्तिर्लक्ष्यते । ततस्तृतीयायाआकारादेशः । वायुःकुतोविवस्वानित्यत आह ॥ [२५।१] वायुरिति ॥ विविधेषु पदार्थेषु वसतेर्भावेविच् । ततोमतुप् । किंच । होतृवूर्ये रोदसी द्यावापृथिव्यौ श्रीश्चभूश्च

त्वयैवारेजेतां । रेजतिरत्रशोभार्थः । राजतेर्वैतद्रूपं । अशोभेतां । होतृवूर्येकथमित्यतआह ॥ **सर्वेति** ॥ होतुः सर्वहोतुःपर मेश्वरान्निमित्ताद्वरत्वतः सर्वोत्कृष्टत्वात्तेहोतृवूर्येइतिशेषः। अनेनहोत्रावूर्येवर्येहोतृवूर्येइत्युक्तंभवति। यद्वासर्वहोतुरीश्वरस्यैकस्य ताभ्यांवरत्वतस्तेहोतृवूर्येइत्यर्थः । होतैववूर्योवर्योयाभ्यामिति । प्रगृह्यत्वाभावःछांदसः । यद्वानिमित्तसप्तम्येषा । होतुर्वूर्येवरत्वं पतित्वंतस्मादरेजेतामिति । तदिदमुक्तंसर्वहोतुस्तेतववरत्वतःपतित्वादशोभेतामिति । रोदसीकथमित्यतआह ॥ **रदनादिति** ॥ विदारणात् । रदविलेखनइत्यतःकर्मण्यसुन् । उपधायाश्चौकारः । तद्विवृणोति ॥ **सेति** ॥ सैकामूलप्रकृतिः । द्विविधा श्री भूरिति । किंच । हेवसो । हियस्मादमुंकेचित्केपिप्रतिभटानैवसहंते ऽतोवायुर्विरिंचोप्यसह्नुः । षहमर्षणइत्यस्मात्कर्मणिनुः कुत्वंच । ततोनञ्समासः । महांश्चासौवायुर्विरिंचोपि तस्यासह्नोर्महोमहतश्च । चतुर्थ्यर्थेषष्ठी । तस्मैत्वंभारं विश्वस्येतिशेषः। अयजः प्रतिदिष्टवान्प्रत्येकंदत्तवानसीतिवक्ष्यमाणेनसंबंधः । वसुःकस्मादित्यतआह॥ **वासाचेति** ॥वसत्यस्मिन्सर्वमितिचार्थः। भवानितिसंबुद्धिव्याख्यानं । असीत्यस्यपूर्वेणैवसंबंधान्नदोषः ॥ ३ ॥ **त्वमग्नेमनवे** ॥ **विशिष्ट** ॥ हेअग्नेसुकृत्तरः अतिश येनसत्कर्मणांकर्तात्वं मनवे वायवे । कथं । विशिष्टबोधात् । मनुअवबोधनइत्यस्यहीदंरूपं । अवबोधश्चसर्वप्राणिसाधारणस्त थापिवैशिष्ट्येनव्यपदेशाभवंतीति । द्यांदिवंस्वर्गं उपलक्षणमेतत् । स्वर्गादिस्वाम्यमवाशयः प्रादाः । यद्वाज्ञानरूपांज्ञानाख्यां द्यांप्रादाः । अथवाद्यांद्युदेवतांभारतींप्रियांभार्यांप्रादाः । अवाशयइत्येतत्कथंप्रादाइत्यस्यप्रतिपादकमित्यतआह ॥ **यथेति** ॥ वा



शृशब्दइतिहिपठ्यते । तस्यणिजंतस्येदंरूपं । तत्रस्वतंत्रकर्तुरपेक्षायांलोकेनेत्यध्याह्रियते । मनवइत्याद्याचतुर्थीषष्ठ्यर्थे । तत श्चद्यांमनोःसंबंधिनींलोकेनावाशयोऽशब्दयः । हेदेव द्यौःतदीया मनुसंबंधिनीतिसर्वस्यलोकस्यवाशनं शब्दः यथास्यात्तथैवा कार्षीरित्यर्थोभवति । तस्यप्राक्प्रादाइतितात्पर्यमुक्तं । प्रदानाभावेतथावाशनासंभवात् । अयथावाशनं तुशब्देनव्यवच्छिन त्ति । तत्रोपपत्तिःसर्वस्येति । पुरूरवसइत्येतत्प्रकृतस्यमनोरेवविशेषणतयाव्याख्याति ॥ **पुरूरवाइति** ॥ रुशब्दइत्यस्मादसुन् । पुरुःरवोयस्येतिपुरूरवाः।दीर्घःसांहितः। सुकृते सत्कर्मणांकर्त्रइतितस्यैवविशेषणमितिसिद्धमेव । मनवेपुरूरवसइत्येतत्प्रकारांतरेण व्याख्याति ॥ **अन्यस्मैवासुकृतइति** ॥ अन्यस्मै प्रसिद्धाय । सुकृतेमनवे । द्यामवाशयः । तथा प्रसिद्धायसुकृतेपुरूरवसे च । द्यामवाशयइतियोज्यं । किंच । यद्यस्मात्त्वं श्वात्रेण श्वात्रत्वेनहेतुना । श्वावायुः। कथं। प्रसिद्धंहितस्यश्वरूपमितिवैशब्दः। श्वसनादितियोगंचाह। श्वसप्राणने। अतोडन् ।अस्यत्राणतइत्यनेनश्वात्रशब्दस्यतृतीयायाश्चार्थमाचष्टे। श्वानंत्रायतइतिश्वात्रः। आतोनुपसर्गेकः ।श्वाकर्णादिवद्दीर्घः।तद्भावेन। अस्य श्वशब्दार्थस्यवायोः। त्राणत स्त्राणकर्तृत्वात् ।पित्रोर्जगतोमातापितृभ्यां। प्रकृतेःपुरुषाच्चपरिमुच्यसे नित्यमुक्तोवर्तसे। नहिवायोरक्षकस्यप्रकृत्यादिबंधःसंभवति। तेनैव कारणेन । त्वा त्वां। पूर्वे पूर्वेसंतः। आसम्यक्सुभक्त्या । अनयन् उपदेशेनशिष्यान्प्रतिनीतवंतः । पूर्वैर्नीतमुपदिष्टंपुनरप्यपरं अपरेच स्वशिष्यान्प्रत्यानयन्। नहि बद्धंबंधध्वंसायोपदिशंतीति ॥ ४ ॥ **त्वमग्नेवृषभः** ॥ **श्रोतव्यः** ॥ हेअग्नेत्वंवृषभो वर्षणस्यकर्ता भक्तानांपुष्टिवर्धनः। एकं मुख्यं आयुरस्येत्येकायुर्नित्यायुः होमायोद्यतास्रुग्येनासावुद्यतस्रुक्। तस्माउद्यतस्रुचे । तृतीयार्थेचतुर्थी। यजमानेनश्रवाय्यो नित्यंश्रो

तव्यश्चभवसि । कथंभूतेन । योयजमानः आहूयतइत्याहुतिः । आहुतिं वषट्कृतिंत्वां परिवेद सम्यग्वेद । किंच । अग्रेऽनादितएव । विशः प्रजाः । आविवाससि समंताद्विशेषेणवससि । उपान्वध्याङ्वसइत्यधिकरणस्यकर्मसंज्ञा । जनताप्रविष्टोवर्तसे । यद्यप्य यमर्चतिकर्मसुपठितः तथाप्यसंभवादन्यथाव्याख्यातः । कथमीश्वरोवषट्कृतिरित्यतआह ॥ ऐश्वर्याद्यांइति ॥ ऐश्वर्यवीर्ययशः श्रीज्ञानवैराग्याणियत्र सइत्यध्याहार्यं । वर्तते षट्यस्मिन्नसौवषट् । वषडित्याक्रियतइतिवषट्कृतिः । सएववषट्कारः । वषट्का रस्य वषट्कारशब्दस्य । इत्याहवेदइत्युक्तार्थेवेदवाक्यांतरसंमतिरुच्यते ॥ ५ ॥ ३२ ॥ त्वमग्नेवृजिन ॥ सद्विद्या ॥ विवि धप्रजेशोविचर्षणिः । विविधाःनानाप्रकाराःदेवाद्याश्चर्षणयःप्रजाअस्येतितस्यसंबुद्धिः । हेविचर्षणेऽग्ने । त्वं वृजिनवर्तनिं वृजि नंपापं वर्तनिर्वर्तनंमार्गोवा यस्यतं । पापाचारं । चित् वा । पापाचारमपि नरं पुरुषं । सक्मन् दकारस्यककारः । सद्मन् सद्मनि स्वेगृहे तदीयेगृहे त्वदीयेवा स्वर्गेवैकुंठादौ । पिपर्षि पॄपालनपूरणयोः पालयसिपूरयसिच । कथं । विदथे विदथइतियज्ञनाम । सद्विद्याख्येविदथेयज्ञे संप्रजाते तेनानुष्ठिते सतीतिशेषः । अथवा वेत्तेर्भावेऽथक्प्रत्ययेकृतेसद्विद्यैवविदथशब्दा इत्यनेनाचष्टे । कथंभूतोग्निः । यस्त्वंशूरसाता शूरसातौ युद्धे । कथं । तन्नामसुपाठात् । निरुक्तिंचसूचयति । यद्यस्मात्सातिः सातिशब्दोलाभेव र्तते । अतःशूरसातिर्युद्धं । तद्धिशूराणांलाभः । चशब्दोधर्मांतरसमुच्चये । धनेपरितक्म्ये ऽधिगम्ये । गतिकर्मसुपाठात् । नि मित्तसप्तम्येषा । अधिगंतव्यधननिमित्तेसंग्रामइतियावत् । सं सम्यक् । ऋताः गताः यदिदभ्राः अल्पाअपियोद्धारस्त्वांशरणं गताः । तत्र तर्हि तैःशक्त्यासंख्ययावा । दभ्रेभिश्चित् अल्पैरपि । शक्त्यासंख्ययाभूयसोपिप्रतिभटान् । अप्रयत्नादनायासेन ।



हंसि । हिंस्मेतिसुप्रसिद्धमेतददिति । सपिपर्षीतिसंबंधः ॥ ६ ॥ त्वंतं ॥ दिनेदिने ॥ हेअग्नेत्वंतं । श्रवसइतिवक्ष्यमाणत्वाद्यो ग्यतयातवस्तोतारं । मर्तं मर्त्यं । उत्तमेमुख्येऽमृतत्वेदधासि मुक्तंकरोषि । किमर्थं । दिवेदिवे दिनेदिने सदा । श्रवसे श्रवणा य । तत्कृतस्तुतेरितिशेषः । तत्स्तुतिंश्रोतुकामइतियावत् । मुक्तौहिसदासमीपस्थंस्तौति । कथंभूतः । यस्त्वं प्रीत्याधिक्यात्तातृ षाणस्ततृषाणस्तृष्णातिशयवान् । उभयायजन्मने द्विविधायजन्मवते । मनुष्यादेवाश्चेत्युभयेषां । नतुदैत्यानामितियावत् । मयः सुखं स्वर्गाख्यं कृणोषि करोषि आतनोषि । तत्र तेष्वपिमानुषादिषु सूरयेच ज्ञानिनेतु । आ समंतात् नित्यमितियावत् । प्रयःप्रियं मोक्षाख्यंसुखंकृणोषि । आइत्येतत्प्रयइत्यनेनसंबध्यतइत्युक्तं । यद्वाततृषाणइत्येतदनुवर्त्यतेनसंबंधनीयमित्याह ॥ ततृषाणइ ति॥ सूरयेतु आविशेषात्ततृषाणोमयःकृणोषि संदधासीतिसंबंधः ॥ ७ ॥ त्वन्नोअग्नेसनये ॥ प्रज्ञां ॥ हेअग्ने स्तवानोऽस्माभिःसं स्तूयमानस्त्वं । नोऽस्मान्धनानां प्रज्ञाख्यानांधनानां । सनये लब्धये समर्थानितिशेषः । कृणुहि कृधि कुरु । किंचास्मान्यश सं यशस्विनं यशस्विनः । कारुं कारिणंच कारिणश्च । ज्ञानदं ज्ञानदानितियावत् । कृणुहि । ननुच करोतेरुणिकृतेकारुरिति भवति ततश्चकारुंकारिणमितिस्यात् ज्ञानदमितितुकथंलभ्यतइत्यतआह ॥ कर्तेति ॥ यावदापरोक्ष्यं ब्रह्मणस्तावदुपासनादी न्कर्तायतस्तेनकारणेन । तत्वदर्शीकारुःप्रोच्यते । एतदुक्तंभवति । उणादयोहिसंज्ञायांविधीयंते अतोविद्वद्रूढिपर्यालोचनयाप्र कर्षगतिविज्ञानाद्वाकारुरितितत्वदर्शीग्राह्यः । अतएववृत्तिकारः करोतीतिकारुर्विश्वकर्मेंद्रोवेति । तथाचपुनरुक्तिप्रसंगाज्ज्ञानि कार्यज्ञानदानंलक्ष्यतइति । यदातुधनानिप्रज्ञातिरिक्तानितदायथाश्रुतव्याख्यानेपिनदोषः । किंच । वयंनवेन नूतनेन । अपसा

कर्मणा । कर्मऋध्याम समृद्धंसफलंकरवाम । प्राक्तनस्यकर्मणःसमृद्धिं साफल्यं प्राप्नुमः । प्राक्तनानांपुण्यानांत्वत्सेवैवफलंभव त्वितियावत् । किंच । हेद्यावापृथिव्यौदेवैःसहितेयुवां । नोस्मांस्तथैवप्रावतं यथावयमग्नेःसेवकाःस्याम ॥ ८ ॥ त्वन्नोअग्नेपि त्रोः ॥ त्वंनः ॥ हेअग्नेत्वंनोस्माकं सर्वेषांप्राणिनां । पित्रोः मातापित्रोः । प्रकृतेःपूरुषस्यचोपस्थे उपतिष्ठंतेत्रेत्युपस्थं समीपं त त्रवर्तसे । सदैवतयोर्नियंतेतियावत् । हेअनवद्य देवस्त्वं । देवेषु निर्धारणेसप्तमी । आजागृविः नित्यवेत्ताऽसि । त्वंतनूकृत् सर्वशरी राणांकर्ता । प्रमतिश्च । प्रकृष्टामतिरस्येतिप्राज्ञवर्यश्चासि । एवंभूतोनोस्मान्बोधि बोधय । ज्ञानिनः कुरु । कुतः । हेकल्याण भद्र । त्वं कारवे ज्ञानिने । विश्वं समस्तं । वसु मोक्षादिकमोपिषे आपयसि । प्रापयसे चस्तस्मादित्यर्थे ॥ ९ ॥ त्वमग्ने ॥ आयुः ॥ हेअग्नेत्वं । प्रमतिः प्रकृष्टज्ञानोसि । त्वंनोस्माकंपितासि शरीरकर्तृत्वात् । त्वंवयस्कृत् । कालकृताशरीरावस्था वयः । तयाऽऽयुरुपलक्ष्यते । आयुष्करः । नकेवलंत्वंनःपिता । किंतुवयं तव तेजामयो भ्रातरश्च । अंगिरसोज्येष्ठःपुत्रोग्निः । अतोहि रण्यस्तूपस्यभ्राताज्येष्ठत्वात्पिताचेतियुज्यते । परमेश्वरेतुकथंजीवोभ्रातेत्यतआह ॥ देहे त्विति ॥ गर्भव देकगर्भस्थितप्राणिद्व यवत् । वासतो द्वयोरपि । चशब्दएवार्थे । परमस्यत्वितिसंबंधः । किंच हेअदाभ्य अहिंस्य । सुवीरमतिविक्रांतं । व्रतपां व्रतानांकर्म णांरक्षकंत्वां । शतिनः शतसंख्यावत्योरायः संयंति प्राप्नुवंति । संति । नकेवलंशतिनः सहस्रिणः सहस्रसंख्यावत्यश्चसंयंति । वयंत्वत्संबंधिनस्त्वंचधनिकोतोस्मान्धनवतःकुर्विति ॥ १० ॥ ३३ ॥ त्वामग्ने ॥ अत्रायवइतिचतुर्थीषष्ठ्यर्थे । नहुषस्येत्यादि प्रकरणात् । नचषष्ठ्यर्थःसंबंधोत्रास्ति । क्रियाहेतुकत्वात्तस्य । नचात्रक्रियाश्रूयते । तथाचघटस्यपटइतिवदायोरायुरित्यसंबद्ध

मित्यतआह ॥ आयोरिति ॥ राज्ञोराजविशेषस्येत्यायोरित्यस्यव्याख्यानं । हृदयेस्थित्वाप्रेरकत्वादित्यध्याहृतक्रियागर्भसंबंधा र्थाषष्ठीत्युक्तंभवति । आयोरायुरित्यनेनापिषष्ठ्याःसाधुत्वमेवोच्यते । नत्वायुत्वं । तत्समाधानस्याद्याप्यनुक्तत्वात् । वक्ष्यमाण त्वाच्च । नहुषस्यविश्पतिमित्ययुक्तं राजाहिविश्पतिः नचाग्निर्नहुषस्यराजेत्यतआह ॥ नहुषस्येति ॥ विश्पतिशब्दोधिपतिमा त्रार्थइतिभावः । अधिपत्वंचहृदयेप्रेरकत्वेनविवक्षितं । तथापिदेवाअकृण्वन्निितिकथं नहीश्वरंवातदीयंप्रेरकत्वंवादेवाःकृतवंतइ त्यतआह ॥ चक्रुरिति ॥ आय्वादीनांदेहसृष्ट्यैवदेवाश्चक्रुरित्युच्यते । नत्वीश्वरस्यतदीयप्रेरणाशक्तेर्वासृष्ट्येत्यर्थः । एतदुक्तंभव ति । आय्वादिशरीरप्रेरकत्वमत्रषष्ठ्योक्तं । अतएवहिहृदयइत्यभिहितं । शरीरप्रेरणंचासतिशरीरेनसंभवति । अतःशरीरंसृष्टवंतो देवाःप्रेरकंसृष्टवंतइत्युपचारेणोच्यतइति । तथाप्यायुमितिकथमित्यतआह ॥ तस्येति ॥ जीवगंयन्नाम तदंतर्यामिणस्तस्ये श्वरस्यचभवतीत्यायोःप्रेरकोप्यायुर्भवति । प्रथमत्वंकस्यविशेषणं कथंचेत्यतआह ॥ नामार्थेति ॥ यस्माद्वासुदेवःशक्त्यास्वा तंत्र्येणनामार्थभागायुशब्दप्रवृत्तिनिमित्तवांस्तेनासाविहप्रथमआयुरुक्तः । द्वितीयोहिशब्दःप्रसिद्धौ । ननु द्वितीयांतआयुशब्दे क्रियावचनेव्याख्यातेसर्वंसुस्थं । किमनेनाध्याहारादिना । मैवं । एवंव्याख्यानेमाहात्म्याधिक्यलाभात् । मनुषस्येळामित्युच्य ते तत्रकोमनुषः काचेळेत्यतआह ॥ मनुरिति ॥ अत्रतस्यपुत्रीळेतिनिर्देशार्थस्वरूपकथनं नतुसंबंधकथनं । शासनीशब्देनैव संबंधस्योक्तत्वात् । नन्वत्रत्वामितिसंबध्यतेनवा नेतिचेदाग्नेयत्वानुपपत्तिः । द्वितीयेकथमीश्वरस्येळात्वमित्यतआह ॥ नामेति ॥ अस्याः मनुपुत्र्याः यदिळेतिनामतत्सदाविष्णोरेवातस्त्वामिळामितियुक्तं । कथमिळाशब्दोविष्णोर्नामेत्यतआह ॥ इळे

ति ॥ विष्णुरितिसंबंधः । ईड्यत्वादित्यनेनेडस्तुतौ अस्मात्घञर्थेकविधानमितिकर्मणिको ह्रस्वताचेत्युक्तंभवति । डस्यलत्वंस्त्रीरूपत्वात्स्त्रीलिंगंचप्रसिद्धमेव । इळापृथिवी सायथासर्वेषामुपजीव्यातथोपजीव्यत्वतश्चेळा । प्रागायुशब्दोविष्णोर्नामेत्युक्तं प्रसंगात्तमिदानींनिर्वक्ति ॥ सएवेति ॥ अयनात् गमनात् । गत्यर्थानांज्ञानार्थत्वात् । ज्ञानतोज्ञानवत्त्वतश्च । इणःछंदसीत्युण् । मनुषस्यशासनीत्येतद्व्याचष्टे ॥ तदिति ॥ यदेळामानवी मनोःपुत्रीविवक्षिता तदातच्छास्यत्वात्तेनमनुनाशास्यत्वान्मनुषस्यशासनीति व्याख्येयं । यदातुवासुदेवः तदा तच्छासकत्वात्तस्यमनोःशासकत्वान्मनुषस्यशासनीतिव्याख्यातव्यं । एतदुक्तंभवति । कर्तृकर्मणोःकृतीतिकृद्योगेकर्तरिकर्मणिचषष्ठीस्मर्यते । तथाकृत्यल्युटोबहुलमितिकर्तरिकर्मणिचल्युट् । तत्राद्येकर्तरिषष्ठी । कर्मणिल्युट् । द्वितीयेतुविपर्ययइति । चतुर्थपादतात्पर्यमाह ॥ ममत्वेति ॥ अनेनममत्ववाचिन्यव्ययेममशब्दउपपदेकरोतेर्डइत्युक्तंभवति । पितुः मनोः । स वासुदेवः । ही त्यस्यार्थस्यपुराणप्रसिद्धतामाह । परमेश्वरंप्रतिमनोःकथंपितृत्वमित्यतआह ॥ स्वातंत्र्यंचेति ॥ मनोरीश्वरंप्रति स्वातंत्र्यंपितृत्वमितियावत् । ममतैव । नान्यज्जनकत्वमस्ति । गौण्यैववृत्त्यापितेत्यर्थः । अनेनममकस्येत्येतदुक्तप्रयोजनंभवति । ततश्चायमृगर्थः । हेअग्नेदेवाःभूताद्यभिमानिनः । प्रथममायुंमुख्ययावृत्त्यायुशब्दवाच्यंत्वामायोरौर्वशेयस्यराज्ञः प्रेरकमकृण्वन् । आयुदेहसृष्ट्याऽकुर्वन्निव । किंच नहुषस्यराज्ञोविश्पतिंप्रेरकंचत्वामुक्तविधयाऽकुर्वन् । अपिच । मनुषस्यशासनीं मनुनायाशिक्षणीया यातत्पुत्रीळा तदंतर्यामिणंचमनोःशिक्षकंत्वामकृण्वन् । कथंभूतामिळां । यत्या इळाममकस्यममापत्यमितिभावंकुर्वाणस्यपितुःपुत्रोजायते । त्वत्प्रेरणयैवैषांराज्ञांप्रभावइतिभावः ॥ ११ ॥ त्वंनः ॥ हेवंद्याग्नेदेवत्वं नो ऽस्मदीयस्य । मघोनो धनवतो यजमानस्येतियावत् । तन्वः द्वितीयार्थेषष्ठ्येषा । तनुं । तनूशब्दस्यतदवयववृत्तिताभ्युपगमेनद्वितीयाबहुवचनंवा । तवपायुभिः पातेरुण् । तवैवरक्षाशक्तिभी रक्षाकरणीभिःशक्तिभीरक्ष । तन्वश्चेतिचशब्देनयजमानस्यज्ञानभक्त्यादिकंचसमुच्चिनोति । यद्वा । नोस्माकंतन्वो मघोनोयजमानस्यचतन्वइतिव्याख्येयं । यावदायुः अवस्थानंस्वतःसिद्धं किंप्रार्थनेनेत्यतउक्तं । सदा अपमृत्युपरिहारेणेतियावत् । अद्धा ऽऽमयादिपरिहारेणेति । किंच । त्वंतोकस्यास्मत्पुत्रस्यचत्रातासि भवेतियावत् । नकेवलंपुत्रस्य किंतु तनये तनयस्य । अस्यपुत्रस्यसूनोरपि त्राताभव । ननुतनयशब्दःपुत्रनाम । सकथंपौत्रार्थतयाव्याख्यायतइत्यतआह ॥ संततित्वादिति ॥ नतनयशब्दःपुत्रस्यैवनाम किंतु तनुविस्तारइत्येतद्रूपत्वात्संततेर्वाचकः पौत्रस्यापिसंततित्वाद्युक्तंतदर्थतयाव्याख्यानं । ननुपुत्रोपितनयोभवति तथापि तोकशब्देनतस्योक्तत्वान्नतदर्थोव्याख्यातः । ननुतोकशब्दोप्यपत्यसामान्यनाम सत्यं पुनरुक्तिपरिहारायविभिन्नविषयत्वेवक्तव्ये प्रथमप्राप्तःपुत्रार्थोद्वितीयःपौत्रार्थोव्याख्यातइति । किंच । गवांचा स्मदादिसंबंधिनीनांधेनूनांचत्वंत्राता रक्षिताभव । एवंतोकस्यतनयस्यगवामितिपदत्रयंबाह्येव्याख्यातं अध्यात्मंव्याख्याति ॥ ज्ञानेति ॥ तोकस्यतनयस्यगवामितिपदत्रयंयथासंख्यंज्ञानसौख्यवाचामितिव्याख्यातव्यं । अद्धैवेत्ययंमुख्यार्थइत्युक्तं । पुत्रोहितोकशब्दः ज्ञानंचात्मनोजायतइतिपुत्रः । ज्योतिर्हिपुत्रःपरमेव्योमन्इतिचश्रुतिः । ज्ञानजन्यत्वात्सौख्यंपौत्रशब्दं गावोवाचइतितुप्रसिद्धं । कथंभूतः । यस्त्वमनिमेषमनिमेषान्सुरांश्च । रक्षमाणः संरक्षमाणो रक्षसि । कुतः । तवव्रते त्वद्व्रते त्वद्विषयेकर्मणि । तैर्देवैः प्रवृत्तेऽनुष्ठिते सतीतिशेषः ॥ १२ ॥ त्वम

ग्नेयज्यवे ॥ यज्योश्च ॥ हेअग्नेत्वंयज्यवे यज्यो यष्टुः । पायुः पालकश्चां तरोंऽतर्यामीचासि । अंतःक्रियाःप्रवर्तयसि ब हिःफलंददासीतिप्रसिद्धमित्यर्थः । किंच । यो यज्यु रनिषंगो नितरांसंगहीनः । सामर्थ्यान्नेनञ्जासंबंधः । तस्माअनिषंगाय य जनफलतयास्वर्गादिकमकामयमानाय । तादर्थ्येचतुर्थी । चतुरक्षस्त्वंभक्त्याराधितोज्ञानदृष्ट्या ज्ञानदृष्टिंदत्वेतियावत् । इध्य से । इन्धीदीप्तौ । दीप्यसे प्रतीयसे । चतुरक्षत्वमग्नेःकथमित्यतआह ॥ द्विशीर्षत्वादिति ॥ प्रतिशीर्षंद्व्यक्षत्वाच्चेतिशेषः । अधियज्ञोग्निः । सहियज्ञमधिकरोति । द्विशीर्षत्वंकुतइत्यतआह ॥ द्वेइति ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासो अस्येत्युत्तरत्रवागस्ति । कथंभूतोयष्टा । योऽवृकाय वृकइतिक्रूरस्यप्राणिविशेषस्यनाम । क्रूरेतदुपचर्यते । तस्यनञ्जासमासः । अ तिसौम्याय ते तुभ्यं धायसे धेट्पाने भावेऽसुन् । पीत्यै पानाय । रातहव्यः रादाने । दत्तहव्यः । हव्यंचसोमाज्यक्षीरादि कं । नकेवलंतदीयेनहविषाप्रीयसे । किंतु कीरेः त्वत्सेवायाःकर्तुः । ऋत्विक्नामत्वेपिकर्तृत्वमेवनिमित्तं । तस्य अनिषंगस्य । तं भक्त्योच्चारितंमंत्रंचिन्मंत्रमपि । मनसातुष्ट्या । वनोषि संभजसेहि ॥ १३ ॥ त्वमग्नउरु ॥ महास्तोत्राय ॥ हेअग्नेत्वमु रुःशंसोयस्यासावुरुशंसस्तस्मैमहास्तोत्राय । वाघते वदते । स्तोत्रे ऋत्विङ्नामत्वेप्येतदेवनिमित्तं यत्स्पार्हंस्पृहणीयमिष्टंपरमंरे क्णः धननामैतत् । सुखमेवचपरमंधनमितिसुखं तद्वनोषि । दानार्थोयमत्रेतिददासि । कथंभूतः यस्त्वमाध्रस्यचित् आसमंता द्धारकस्यापि । महीध्रइतियथा । वायोः सहि सप्तस्कंधगतोलोकान्योबिभर्तिमहाबलइत्यादिनासमंताद्धारकःप्रसिद्धः । प्रम



तिः प्रकृष्टामतिर्यस्मादितिप्रज्ञानदः पिताचोच्यसे सद्भिःप्रोच्यसे । यश्चत्वंप्रपाकं प्रकृष्टपाकवंतं परिपक्काधिकारं । आविर्भूतज्ञा नयोग्यत्वं पुरुषं प्रशास्सि । प्रकर्षेणशिक्षयसि । प्रदिशः प्रदेशकः । इगुपधलक्षणःकः । इदंचप्रपाकंशास्सीत्यनेनपुनरुक्तमित्य तोहेतुत्वेनव्याख्याति ॥ प्रदेशकत्वादिति ॥ सामान्यंविशेषेहेतुः । अतएवाखिलं अखिलस्येत्युक्तं । यश्चत्वं विदुष्टरो विद्व त्तरः । अखिलंसुवेत्ता तृन्नंतत्वाद्द्वितीया ॥ १४ ॥ त्वमग्नेप्रयत ॥ धृतं ॥ हेअग्नेत्वं । प्रयतदक्षिणं प्रयतोदक्षिणायां । प्रयत दक्षिणः । योमखेषुप्रयत्नाद्दक्षिणादस्तंनरंमनुष्यं । विश्वतो विश्वस्मिन्काले नित्यं । परिपासि परितोरक्षसि । किमिव । स्यूत मनुस्यूतं । धृतं वर्मेव कवचमिव । पुनःकथंभूतंनरं यःस्वादुक्षद्मा स्वाद्विति सुखहेतुत्वमुच्यते। ककारागमेनक्षद्मेतिसद्म । सुखगेहः सुखसाधनानिगेहानियस्मात्परेषांभवंतीति । सुग्रहाणांदातेतियावत् । यश्चवसतौ गृहेस्वीये । स्योनकृत् । स्योनं सुखं परेषां अति थीनामन्नदानादिनाकरोति । अतएवपुनरुक्तिभियास्वादुक्षद्मास्वाद्वन्नदातेतिनव्याख्यातं । यश्चजीवयाजंयजते जीवस्यजीव तोयाजोयज्ञो जीवयाजः जीवनेनव्याप्तोयज्ञः । तंयजते अनुतिष्ठतीत्यर्थः । यावन्मरणंयोयज्ञंकरोतितमग्निःकदारक्षिष्यतीत्यत स्तात्पर्यमाह ॥ यावदिति ॥ यश्च यावज्जीवंयजनेसुप्रतिज्ञो दृढदीक्षो भूत्वायजतइति । यथोक्तसकलविशेषणस्यनरस्य कि मैहिकीरक्षैवप्रयोजनं । नेत्युच्यते किंतुस्वर्गादिकंपारत्रिकमपिफलंभवति । कुतः । आगमात् । तत्रैवकुतोविश्वासइत्यतउक्तंसो पमादिवः । तस्योक्तविशेषणस्यनरस्यदिवःप्राप्ताविति शेषः । द्युप्राप्तिभावे सैवोपमाहि । सेतिका देहेसत्येवयाक्षमेतिवा । याज्ञा नमार्गेवसतिर्निष्ठेतिवा स्त्रीलिंगेनाकांक्षापूरणीयेति । एतदुक्तंभवति । आगमोक्तेनसाधनेनेहैवक्षमादिकंफलमुपलभ्यते तदुपमाने

नपारत्रिकमप्यनुमीयतइति ॥१५॥३४॥ इमां ॥ [२६।७] यामे ॥ हेअग्ने यैषात्वमग्नइत्यादिनोक्ता । मेभवच्छरणप्राप्तिरिमांतां । नो मे । शरणिं शरणंभवच्छरणप्राप्तिं । मीमृषः अमीमृषः । व्यत्ययेन मर्षस्व सहस्व । प्रार्थनस्याभिप्रायमाह ॥ [२६।७] अल्पइति ॥ अल्पो यमतिमहांतंमांकथंशरणंयातीतिधियामाक्रुधः । क्रोधंमाकार्षीः । कुतः । इममध्वानमवधारय दूराद्यंयस्मिन्नगामेत्यस्यतात्पर्य माह । यद्यस्मात्त्वत्प्राप्त्यर्थंदूरमेवाऽगांतत्तस्मात् । अनादौभवाध्वनिपरिखिन्नःकथंचिदिदानींत्वांप्राप्तोस्मियतस्तस्मान्मीमृषइति भावः । कथंभूतः । यस्त्वंसोम्यानां सोममर्हतियः । सोमार्हाणांदेवतानां । आपिः प्राप्यः । पिता जनकः । प्रमतिः प्रकृष्टाम तिर्यस्माज्ज्ञानदोसि । मर्त्यानां मानुषाणां भूमिः संसारेभ्रामकोसि । हेदेवतथाऋषिकृत् ऋषीणांकर्तासि । ज्ञानदानेनभक्तानृ षीन्करोषीतियावत् ॥१६॥ मनुष्वत् ॥ हेशुचे अंगिरोऽग्ने । मनुष्वन्मनोर्यथा । अंगिरस्वत् अंगिरसोयथा । ययातिवद्ययातेर्यथा । पूर्ववत् अन्येषामपिपूर्वपुरुषाणांयथा । तथा सदने मदीयंसदनमच्छयाहीत्येतत्तात्पर्यतोव्याख्याति ॥ [२६।८] यथेति ॥ वाशब्दः समुच्चये । गृहे स्वीये । तथामद्गृहं ममत्वत्प्राप्त्यर्थमितिशेषः । अच्छेत्यभेरर्थेनिपातः । अत्रअच्छगत्यर्थवदेष्वितिगतिः । यद्वा । प्रथमांतेभ्यएववतिमभिप्रेत्यव्याख्यानमेवेदंकृतं । आगत्यच दैव्यं देवतात्मकंजनं देवसंघमावह आनय । आगतंचबर्हिषि आसाद य उपदेशय । उपविष्टंचतंतवप्रियंदेवसंघं । यक्षि यजच । ऋत्विजांकार्यमेतत्कथंमयाक्रियतामित्यतोऽभिप्रायमाह ॥ [२६।९] यष्टेति ॥ यद्यस्मात्त्वमेवाखिलजीवगो खिलजीवानांप्रेरकः तस्मादृत्विक्षुस्थित्वायष्टात्वमेवेति ॥ १७ ॥ एतेन ॥ [२६।१०] स्पष्टत्वंच ॥ हेअग्ने एते नब्रह्मणा एतयावेदवाचा । वावृधस्व अतिशयेनवर्धस्व । स्पष्टत्वंच व्यक्तत्वमेव नतुवृद्धिं प्राप्नुहि । कथंभूतेनब्रह्मणा । श



कीवा शक्त्यावा । विदावा ज्ञानतोवा । यत् ते त्वद्विषये चकृम यथाशक्तियथाज्ञानंचकृतयावैदिक्याऽनयास्तुत्याऽस्माकं प्रत्यक्षोभवेत्यर्थः । भाष्येब्रह्मापेक्षंयदितिनपुंसकं । व्यत्ययेनयामितिवा । यस्माच्छक्त्याद्यनतिक्रमेणचकृम तस्मादितिवा । उत किंच । अस्मान्वस्यो भद्रं । अभिप्रणेषि प्रापयसि । प्रणय प्रापय । तस्यैवविवरणं नो ऽस्मान्वाजवत्या अन्नवत्या उपलक्षण मेतत् । भोगेतया सर्वभोगोपेतया । सुमत्या संसृज संयोजय । समोर्थमाह ॥ [२६।११] नित्यमेवेति ॥ प्राक्शक्तीवेत्यादिब्रह्मविष यंव्याख्यातं इदानींप्रकारांतरेणव्याख्याति ॥ [२६।११] यस्मादिति ॥ यद्यस्माच्छक्त्याचविदाच । ते त्वदीयं कर्मेतिशेषः । त्वत्सुकर्म चकृम तस्मादुतप्रणेषीत्यादि ॥ १८ ॥ ३५ ॥ १२ ॥ इंद्रस्य ॥ पंचदशर्चमेतदैंद्रंसूक्तं ॥ [२६।११] इंद्रस्यवा ॥ नुइतिक्षिप्रनाम । इदानी मेवाहमिंद्रस्य प्रसिद्धस्य वासुदेवस्य वा । वीर्याणि कर्माणि । प्रवोचं प्रावोचं । लडर्थेलुङ् । आचक्षे । कथंभूतानि वज्री अय मिंद्रो यानिप्रथमानि मुख्यानि । चकार चक्रे । अनंतत्वेपितच्चरित्राणांप्रधानानिब्रवीमीतियावत् । तान्युच्यंते । इंद्रोवज्री त्युक्तत्वाद्वज्रेणाहिंदैत्यं दैत्यविशेषं अहन् जघान । वासुदेवस्त्वहिं हीतिनिश्चयवाचीस्यादितिवचनान्निश्चयविरोधिनंभक्तानां संशयंज्ञानेनाहन् जघान । विनाशितवानितिव्यवस्थितोविकल्पः । एवमुत्तरत्रापि । किंच । अन्वपः लक्षणेत्थंभूताख्यानेतिल क्षणेकर्मप्रवचनीयः । जलानुसारेण ततर्द । तर्दहिंसायां । हिंसितवान् । किं मार्गमितिशेषः । मार्गस्यहिंसानाम खननमेवेतिच खान । अहिर्नामदैत्योलोकोपद्रवायपर्वतेषुनदीद्वाराणिरुध्वामेघपतितंचोदकमंतरिक्षेप्रतिबध्यस्थितः । तंहत्वेंद्रोनदीद्वाराणिविवृ त्यतत्प्रवाहायोदकमार्गंखनितवान् । वासुदेवस्त्वन्वपः अनुर्लक्षणइतिहेतौकर्मप्रवचनीयः । अपशब्दःकर्मवाची । कर्मणामनु

सारात् । भक्तैःकृतानिकर्माणिनिमित्तानिकृत्वाततर्द हिंसितवान् । तदीयान्ज्ञानस्यविघ्नानितिशेषः । अपिच । इंद्रःपर्वतानां वक्षणाःप्राभिनत् । वक्षणाशब्दार्थमाह ॥ २६।१३ वहनादिति ॥ वहप्रापणे । अस्मात्करणे सनःस्त्रीलिंगताशब्दस्वाभाव्यात् । पर मेश्वरेवाक्यंव्याख्याति ॥ २६।१३ दुर्वचांसीति ॥ जन्मपर्ववतांजीवानांविवक्षाचेत्तदादुर्वचांसिवक्षणाउच्यंते । तावक्षणाः सुयुक्तिभि रेवबिभेदेश्वरः । एतदुक्तंभवति । जन्माख्यपर्ववत्त्वाज्जीवाःपर्वताः । तेषांपर्वतानांकुवादिनांवक्षणाः वचपरिभाषणइत्यतःसनप्र त्ययः । प्रसंगात्दुष्टानिवचांसिप्राभिनत् । भक्तेभ्यःसुयुक्तीर्दत्वाताभिर्निराकृतवानिति ॥ १ ॥ अहन् ॥ इंद्रः पर्वते पर्वतेषु । शिश्रियाणं कानजंतमेतत् । श्रितवंतमहिंदैत्यमहन् हतवान् । ईश्वरोपिपर्वते भक्तजीवजाते । शिश्रियाणं अहिंसंशयमहन्निति प्रथमपादार्थःस्पष्टएव । द्वितीयपादंविष्णौव्याख्याति ॥ २६।१४ त्वष्टेति ॥ यद्यस्मात्त्विडात्मा प्रकाशात्मा । तस्मात्त्वष्टाविरिं चोस्मैपरमेश्वरायैतद्विषयइतियावत् । वज्रंज्ञानवज्रं । ज्ञानाख्यंवज्रंभक्तानांततक्ष निर्मितवान् । एतत्त्विततिप्रकृतेनसंबंधार्थे ये नवज्रेणाहिमहन्नेतत्विति । एतेनप्रसिद्धेंद्रेपियोजनासूचिता । त्वष्टादेववर्धकिः । अस्माइंद्रायइंद्रस्यार्थे वज्रंततक्षेति । स्वर्यमि तिवज्रविशेषणं । तत्प्रसिद्धेज्ञानेचव्याख्याति ॥ २६।१४ स्वर्यमिति ॥ स्वृशब्दोपतापयोरित्यस्येदंरूपं । तत्प्रसिद्धंवज्रंस्वर्यमुपतप्तं । शस्त्राणितापपूर्वकंनिशितानिभवंतीतिनिशितत्वस्योपलक्षणमेतत् । निशितं । ज्ञानाख्यंतु स्वर्यं शब्दसंबंधि । शब्दजं वेदजं । उत्तरार्धमिंद्रेविष्णौचक्रमेणव्याख्याति ॥ २६।१४ शिशुवत्साइति ॥ अत्रैतदीरिताइत्यैंद्रत्वसिद्धयेध्याहृतं । अहौदैत्येहतेसत्येतेनेंद्रे णेरिताआपोनद्यइतियावत् । स्यंदमानावाश्राःशिशुवत्साधेनवःगावइव । शिशूनंजः आर्जवेन । समुद्रमवजग्मुः अवाजग्मुः ।



यद्वा । एतेने श्वरेणेरिता आपः क्रियाः स्यंदमानाः अप्रतिहतवृत्तयः समुद्रं समुद्रिक्तं एनं देवंप्रति व्रजंति । संशयेनष्टे भक्ताभगवंतमेवयजंतइति ॥ २ ॥ वृषा ॥ २६।१६ वव्रे ॥ इंद्रोवृषायमाणो वृषेवाचरन् । तृषितोवृषा यद्वदुदकं तथैवसोममवृणी त वव्रे स्वीकृतवान् ।स्वीकृत्यचत्रिकद्रुकेषु त्रिषुसवनेषु । सुतस्य सुतं सोमममपिबत् । स्मेतिकद्रुकशब्द स्त्रिकद्रुकेषुमहिषोयवाशि रमित्यादौसवनेषुप्रसिद्धइतिसूचयति । कद्रुकशब्दंसवनेषुनिर्वक्ति ॥ २६।१६ सवनानामिति ॥ यद्यस्मादत्र सवनेषु कं सुखं द्रुतंप्रा प्तं तस्मात्सवनानांकद्रुकत्वं कद्रुकशब्दवाच्यत्वं । कं द्रुकं द्रुत मत्रेति । अध्यात्मंव्याख्यानंसूचयति ॥ २६।१६ सोमइति ॥ मनोवा सोमः व्यवस्थितविकल्पोयमितिस्वयमेवाह ॥ २६।१६ ध्यानयोगइति ॥ अध्यात्ममाधारत्रयंत्रिकद्रुकशब्दमितिज्ञेयं । सायकइत्यपि वज्रनाम ततःपुनरुक्तिपरिहारायनिर्वक्ति ॥ २६।१६ सायंकरमिति ॥ ज्ञानमित्युपलक्षणं । प्रसिद्धवज्रंचेत्यपिज्ञेयं । एवशब्देननपुन रुक्तिभयेनव्यधिकरणंव्याख्येयमित्याचष्टे । सायइतिषोंतकर्मणीत्यस्यरूपं । सायमंतंकरोतीतिडः । सायंकरं । प्रसिद्धवज्रंदैत्या दीनांलयकृत् । ज्ञानंत्वविद्यादीनां । आदत्तेत्यस्यार्थःसमाददइति । एनमित्यस्यविष्णुपक्षेऽर्थमाह ॥ २६।१७ संशयमिति ॥ इंद्रपक्षे त्वहिमितिस्पष्टं । वृषायमाणइत्यस्यार्थांतरमाह ॥ २६।१७ ईशवद्वेति ॥ वृषावर्षिता ईशः सइवाचरन् अवृणीतसोममिति । ततश्चाय मर्थः । मघवा धनादिमानिंद्रः सायकं सायंकरं वज्रमादत्त समाददे । तेनचाहीनां अहिनामकानांदैत्यानांमध्ये प्रथमजां जनसनेति विट् । प्रथमजं मुख्यमेनमहिमहन् । तथापरमेश्वरःसायकं वज्रं ज्ञान मादत्त । भक्तानांमनस्युत्पादितवान् । तेनचाहीनां ।

हिगतौ । ततःकिः । नञ्समासः । अहयोज्ञानविरोधिनःपापादय स्तेषांमध्येप्रथमजां मुख्य मेनं संशयमहन्निति ॥ ३ ॥ यदिंद्र ॥ [२६।१७] अहन्नेनं ॥ अत्राद्यश्चशब्दोयस्मादित्यर्थे । हेइंद्रत्वं यद्यस्मादहीनांप्रथमजां प्रथममेनमहिमहन् हतवानसि । आत् ततःकरणा न्मायिनां मायाविनामन्येषांदैत्यानां मायाउत व्याजरूपाःछद्मरूपामायाश्च प्रामिणाः मीञ्हिंसायां । व्यनाशयः । किंच । आत् ततएव त्वंसूर्यंद्यामुषसंचजनयन् उत्पादकः सूर्यद्युदिनादेश्चकर्ताजातोसि । पुरासूर्यादिव्यापाराअहिनादैत्येननिरुद्धाः । तद्वधेनपुनस्तद्व्यापाराणांकारयिताभूरित्यर्थः । तथापितद्वधेनेतरमायानाशःकथं । तस्यमुख्यत्वेनेतरदैत्याश्रयत्वात् । मुख्यत्वंकुतः । तादीत्ना तावता । बलेनेतिशेषः । तावद्बलत स्तावद्बलेनो पेतमितिशेषः । अहिनासमानबलमन्यंशत्रुं नविवित्सेकिल नलभसेखलु । विद्लृलाभे । परमेश्वरेलेशेनव्याख्याति ॥ [२६।१८] मायेति ॥ अथवेतिसंबंधः । यतोज्ञानविरोधिनांप्रथमं भक्तानांसंशयं त्वंविनाशितवान् तस्मान्मायिनां मायावादिनां विरुद्धवादिनां मायाः कुटिलोक्तीः तैर्नष्टसंशयैः स्वजनैःतज्जयेनव्यनाशयः । ततश्चसूर्यं ज्ञानहेतुमाचार्यं तत्संगतिं । द्यां मोक्ष मुषसं ज्ञानंच भक्तानांकृतवानसीति । शेषंसमानं ॥ ४ ॥ [२६।१९] अहन्वृत्रं ॥ इंद्रोमहतावधेन वधसाधनेनवज्रेण वृत्रंनामदैत्यं वृत्रतर मतोवृत्रादधिकंवृत्रतरनामकंचदैत्यं व्यंसं विगतांससंधिं शिरश्छित्वेतियावत् । अहन् वृत्रशब्दोवृणोतेरूपं । तस्ययौगिकमर्थमादायातोधिकमिति वृत्रतरशब्दोनिरुक्तः । अध्यात्ममाह ॥ [२६।१९] तमइति ॥ व्यंसनाद्विसंवादनाद्व्यंसशब्दौतमोमिथ्याप्रत्ययौवावृत्रवृत्रतरौ । तावीश्वरोज्ञानेनाहन् । एवंवृत्रं वृत्रतरमहिंच त्रीनिंद्रोहतवान् । अथोविवृक्णाविवृक्णानि स्कंधांसीव विवृक्णाविशेषेणछिन्नास्तरोःस्कंधायद्वत्तथा कुलिशेन वज्रेण



छिन्ना अहिः उपलक्षणमेतत् । वृत्रवृत्रतरावहिश्च पृथिव्याउपपृक् पृचीसंपर्के पूर्ववदेकवचनं । पृथिवीसंपर्कवंतः शयते अशेरत । पृथिव्यांपतिताइतियावत् । अध्यात्मंकुलिशःकइत्यतआह ॥ [२६।२०] कुलस्येति ॥ यस्मिन्पुरुषेजाताविद्यातत्कुलस्यापिसुखकरणात् । कुलमस्यास्तीतिकुली तस्यसंततेःशंयस्मात्सकुलिशइत्यर्थः । पृथिवीमाह ॥ [२६।२०] बुद्धिरेवेति ॥ एवशब्देननिर्वचनंस्फुटमितिसूचयति । अहेःसंशयस्यपृथिव्याउपपृक्त्वंकथमित्यतआह ॥ [२६।२०] तद्गतंइति ॥ यद्यस्मात्संशयोबुद्धिगतोऽतःपृथिव्याउपपृगुच्यते । अज्ञानमिथ्याज्ञानयोरप्येवं । अत्रपक्षेपृथिव्याउपपृगित्यनुवादः । शयतइत्येतदेवविधेयं ॥ ५ ॥ ३६ ॥ अयोद्धेव ॥ [२६।२१] यस्य ॥ अहन्वृत्रमित्युक्तमेवप्रपंच्यते । इंद्रशत्रुर्वृत्रोऽयोद्धेव नविद्यतेयोद्धाप्रतिभटोयस्यासावयोद्धा तद्वदेव । दुर्मदोदर्पोद्रिक्तो महावीरं वीरतमं तुविबाधं महोच्चानांरिपूणांबाधक मृजीषं सोमस्यसुतस्ययोंशोवशिष्यतेसऋजीषइतिवल्कइतिचोच्यते । अत्रतुगौणीवृत्तिः सयथादृढोभवतितथादार्ढ्यहेतोःऋजीषाख्यंशक्रमाजुह्वेहि । आह्वयामासहि । युद्धायेतिशेषः । हिशब्दःकिलार्थे । उक्तरूपमज्ञानमुक्तलक्षणंविष्णुमाह्वयामासेवेतिवा । कृताह्वानश्चवृत्रोऽस्य शक्रस्य वधानां प्रहाराणांसमृतिं संप्राप्तिं । नातारी न्नतीर्णवान् । शक्रकृतप्रहारवंचनक्षमोनाभूत् । अथापि अथवा ऽज्ञानमस्य विष्णो र्वधानां संप्राप्तिं नातारीत् । किंतु प्रहारपीडितः पतन्निंद्रशत्रुः वृत्रो रुजानाः रुजायुक्तादुर्बलाः मानुषीः प्रजाः संपिपिषे चूर्णितवान् । यद्वेश्वरेणभक्तेभ्योनिराकृतमज्ञानं । रुजानाः संसाररोगयुक्ताःसृतिस्थाःप्रजाः संपिपिषे बबाधे । इंद्रशत्रुशब्दस्यबहुव्रीहितत्पुरुषत्वसंशयंविग्रहप्रदर्शनेननिराकरोति ॥ [२७।१] इंद्रइति ॥ नहींद्रस्यवृत्रःशत्रुःशातयिता किंत्विंद्रएववृत्रस्येतिबहुव्रीहिपरिग्रहेयुक्तिंहिशब्देनसूचयति । किंचें

द्रशत्रुप्रातिपदिके इंद्रेतिपूर्वपदंस्वरितांतं । अतोपीदंबहुव्रीहिरूपं । तथात्वेपिकुतोबहुव्रीहित्वमित्यतआह ॥ पुंसोरिति ॥ पुंसोः पुंलिंगयोःसमस्यमानयोर्मध्ये पूर्वस्मिन्पदेस्वरितांतेसतिससमासोबहुव्रीहिर्ज्ञातव्यइत्यस्यार्थस्यप्रतिपादकं पुराणं चिरंतनव्याकरणस्थं सूत्रमस्तिहीत्यर्थः । तथाचशिक्षाकारः । यथेंद्रशत्रुःस्वरतोपराधादिति । पूर्वपदप्रकृतिस्वरत्वस्येदमुपलक्षणमितिनकश्चिद्दोषः । यथाहपाणिनिः । बहुव्रीहौप्रकृत्यापूर्वपदमिति । अन्यथासमासांतोदात्तत्वंस्यादिति ॥ ६ ॥ अपात् ॥ संछिन्न । अपात् पादरहितो ऽहस्तो हस्तरहितः संछिन्नपाद्वाहुरपिवृत्रः केवलेनदेहेनेंद्रमपृतन्यत् युयोधैव । युध्यतिकर्मसुपाठात् । तदा सइंद्रोऽस्य तस्य वृत्रस्य सानौ गौण्यावृत्त्यागिरेः सानुप्रतिमेऽत्यंतस्थूलेकंठदेशे वज्रमध्याजघान प्रहृतवान् । व्यसृजत् । अध्यात्मंत्वपादहस्तोवृत्रः प्रवृत्तिसाधनत्वात्तर्कागमाभ्यांरहितंतमोऽज्ञान मिंद्रमीश्वरमपृतन्यत् परमेश्वरश्चास्याज्ञानस्यसानौ सानुवदुरुतरेस्वरूपे वज्रमध्याजघान । विष्णुःसंयुध्यमानमज्ञानंमानवज्रेणजघान प्रहृतवानिति । सएवंवृष्णोर्वर्षितुरीश्वरस्य विष्णोरिंद्रस्यवा प्रतिमानं प्रतिरूपं शत्रुरितियावत् । बुभूषन् भवितुमिच्छन् वध्रिः कर्मणिरिप्रत्ययेकृतेवधयोग्यः । अथवारुद्ध्यानीचोवृत्रोसुरोऽज्ञानाख्यश्च तेनेशेन पुरुत्रा बहुधा बहुषुस्थानेषु व्यस्तो निरस्तो ऽशयत् अशेत । अपतत् ॥ ७ ॥ नदं ॥ अपां ॥ अत्रापांरोद्धारमित्यादिकंकथासंघटनार्थमुक्तं । अपां नादेयानामुदकानां रोद्धारं निरोधकत्वेनस्थितं । अमुयो त्तरस्यामृचिवक्ष्यमाणयास्वमात्रासहैव शक्रेणहतंशयानं पतितंवृत्रं भिन्नंनदंन भिन्नंनदंयद्वत् नदशब्देनात्रतत्तीरमुपलक्ष्यते । भिन्नंनदस्यतीरमिवाति अतीत्यच । अतीत्यैवापो मनोरुहाणाः मनसोपिपूर्वं वेगेनेतियावत् । आरुहाणाः स्थलान्यारोहंत्यो यंति प्र



यांति । कास्ताआपः वृत्रःपुरा पूर्वस्मिन्काले याश्चित् यास्त्वपो महिना स्वमहिम्ना पूर्वं पुत्रापेक्षयापूर्वस्मिन्स्थाने पर्यतिष्ठत् । परीत्य निरुध्यातिष्ठत् । किंच तत्सुतोवृत्रस्यसुतोऽहिश्चयासांतासामपांगतिं तद्वदेव वृत्रवदेव । अभिरंधन्निितिशेषः । पत्सुतःशीर्बभूव पितुःपादतोनंतरमेवशेताभवत् । पादशब्दात्पंचम्यर्थेसप्तमीबहुवचनं । पादशब्दस्यचपद्दन्नित्यादिनापदादेशः । ततस्तसिः । सप्तम्यलोपःछांदसः । तदुपपदाच्छेतेःक्विप् । अनंतरमितिसामर्थ्यसंभवार्थमुक्तं । वृत्रोनदीद्वारेषुशिरोनिधायापांमार्गेपतितोगतिंनिरुणद्धि । अहिस्तुतमप्यतिक्रम्यापोयास्यंतीतितत्पादतोनंतरंशयित्वानिरुणद्धीति । अध्यात्मंतात्पर्यमाह ॥ तमंइति ॥ आस्ते स्थितः । तेन भक्तशरीरेस्थितेनेश्वरेण । पदयोजनातुपूर्वैव । पत्सुतःशीरित्यानंतर्यमात्रपरं ॥ ८ ॥ नीचावयाः ॥ नीचैस्थाने ॥ उत्तरवाक्येनैकवाक्यतासिद्धयेयासेत्यध्याहरति । यापिचसावृत्रपुत्रा वृत्रमाता दानु र्दनु रित्युत्तरार्धस्यव्याख्यानं । नीचावयाअभवत् । वयबंधने । नीचेवयतिबध्नातीतिनीचावयाःसाभवत् । नीचस्थानेऽहेरप्यनंतरे ऽपांबंधनंकरोति । अकार्षीदितियावत् । संबंधस्तूत्तरत्र । ननुदनुःकश्यपस्यभार्या नचवृत्रःकश्यपपुत्रः किंतुत्वष्टुः तत्कथंदनुर्वृत्रमातेत्यतआह ॥ वृत्रोद्वीति ॥ द्वौवृत्रौ तत्रैकःकश्यपाद्दनुजोभूत् । दैत्यत्वंचतामसत्वात् । अपरश्चत्वष्टृजातइतिनविरोधः । कुतोद्वयोःकल्पना । असौदनुजःपापात्माश्रूयतेदीर्घतमआशयदिंद्रशत्रुरिति । त्वष्टृजातस्तुवैष्णवः । पुण्यात्माप्रसिद्धः । अतोद्वौकल्प्यौ । अथापिवृत्रपुत्रेत्यस्यवृत्रमातेतिव्याख्यानंकथमित्यतआह ॥ वृत्रंइति ॥ अस्या स्तस्यादनो र्वधो वध मिंद्रो ऽवाधस्तनेकाले वृत्रवधात्पूर्वमेव जभार जहार अहरत् । कृतवान् । अध्यात्मंवृत्रमातरमाह ॥ प्रकृतिर्वेति ॥ मूलप्रकृतिः ।

कथमित्यतआह ॥ तमोहीति ॥ इंद्रोअस्याइत्येतदध्यात्मंव्याचष्टे ॥ तामिति ॥ भिन्नवाक्यत्वाद्वाद्वयं । ननुयदिप्रकृति
रज्ञानंसंशयादयोन्येदोषाश्चेश्वरेणनाशितास्तर्हीदानींपुरुषेषुसंसारदर्शनमयुक्तंस्यात् नततोवेदवाक्यमिदंयुक्तमित्यतआह ॥ प्रा
तिस्विकीति ॥ य ह्यस्मात् । नकेवलमनुस्यूताकिंतुप्रातिस्विकीचास्तीत्यर्थः । प्रथमंदनोर्वधेकिंकारणं । सूतइतिसूर्मातादनुः।
सुतावनार्थमुत्तरा सुतस्योपरिस्थासीद्बभूव । पुत्रस्त्वधरआसीत् । तस्मादिंद्रउपरिस्थांतांदनुंनिहत्यैवाधस्थममुंवृत्रंजघानेति
शेषः । ततोदानुः दनुः सहवत्साधेनुर्न धेनुरिव सपुत्रा शये । अशेत । पतिता । अध्यात्मंप्रथमंप्रकृतिंजघानेत्येतत्किंनिमित्त
मित्यतआह ॥ कारणस्येति ॥ तत्किंप्रथमंकार्यनाशोनभवति । भवत्येवेत्याह ॥ स्यादेवेति ॥ तर्हिकिंप्रकृतेःपूर्वनाशेनेत्य
तआह ॥ अर्थापीति ॥ परमेश्वरस्याज्ञानादिभिर्युद्धप्रतिपादनेनाज्ञानादिकंतत्संबंधीतिप्रतीतिःस्यात् तद्वारणायोक्तवक्ष्यमा
णतात्पर्यमाह ॥ एवमिति ॥ प्रकृतेरज्ञानापेक्षयोत्तरत्वंकथमित्यतआह ॥ उत्तरत्वमिति ॥ शक्तितो ऽधिकत्वमितिशेषः ।
नतुकालापेक्षयानंतरत्वमित्यर्थः । दोअवखंडनइत्यतः प्रकृतिर्दानुः ॥ ९ ॥ अतिष्ठंतीनां ॥ अत्रकाष्ठानांविशेषणद्वयमुक्तं
तत्प्रकृतोपयोगितयाव्याचष्टे ॥ अनंतत्वादिति ॥ दिशामनंतत्वेनदेवदत्तस्यतदभावनिमित्तागतिनिवृत्तिर्नभवतीत्यतस्तानैव
तिष्ठंतीत्युच्यंते । अतो नंतत्वादेव तासां निविशंतेस्मिन्निति निवेशनंगृहमंतर्भावकंकिंचिन्नास्तीत्यनिवेशनाअप्यभिधीयंते । मृ
तस्यवृत्रस्यशरीरमतिष्ठंतीनामनिवेशनानांकाष्ठानांमध्येनिहितं एवंनामस्थूलं यदनंतादिशोव्याप्यस्थितमित्यद्भुतोक्तिः । तथाच
प्रतिबंधकेनिवृत्तेसत्यापो निण्यं नीत्यतिशयार्थे । णःसुखमेवण्यं । क्रियाविशेषणमेतत् । सुखेनैवा नायासेनैव विचरंति व्यच



रन् । दीर्घतमआशयदिंद्रशत्रुरितिवाक्यंत्रेधाव्याचष्टे ॥ दीर्घमिति ॥ सवृत्रएव दीर्घतमइत्येतावता दीर्घतमो महाता
मसइंद्रशत्रुरेवमाशयदशेतपतितइत्येकोर्थः वृत्रसंज्ञंतमोवेत्यनेनाध्यात्ममिंद्रशत्रुरीश्वरशत्रुभूतंदीर्घमहद्वृत्रसंज्ञंतमोऽज्ञानमेवमाश
यदितिद्वितीयः दीर्घमंधमित्यादिनामृतोसाविंद्रशत्रुर्वृत्रोदीर्घपुनरावृत्तिरहितंतमोंधमाशयत् । अशूव्याप्तावित्यस्यस्वार्थेण्यंत
स्यरूपमेतत् । प्रापेतितृतीयः ॥ १० ॥ ३७ ॥ दासपत्नीः ॥ दासस्य ॥ इंद्रयज्ञेसुकृप्तागावःपणिनेव पणिविशेषणबलेनयद्व
द्यथा तथैव दासपत्नीर्विष्णोर्दासस्यवरुणस्यपत्न्यः आपो नद्यो ऽहिगोपाः अहिर्गोपोगोप्तायासांताः अहिना गुप्ताइतिशेषः ।
नकेवलमहिगोपाःकिंतुनिरुद्धाः वृत्रेणापीतिशेषः । अतिष्ठन् आसन् । अन्यथापूर्वोत्तरार्धयोरसंगतिःस्यात् । अतएवतम
हिंचेतिवक्ष्यति । तदाशक्रोवृत्रंजघन्वान् हत्वेतियावत् । अहिंच हत्वा । अनुक्तोहिःकस्माद्गृह्यतइत्यतस्तं पूर्वार्धोक्तमि
त्युक्तं । स्वयमेवकस्मान्नोक्तइत्यतउक्तमाश्विति । अनायासेन । यदपांबिलंताभ्यामपिहितमाच्छादितमासीत्तदपववार अ
पावृतवान् । उद्घाटयामास । अध्यात्मंव्याचष्टे ॥ शुभेति ॥ शुभकर्मणांद्वार मास्तिक्यादिकं । तमःशब्देनसंशयोपिलक्ष्य
ते । अत्रदासोयःकोपि । पत्न्यइवपत्न्यः ॥ ११ ॥ अश्व्यः ॥ सृके ॥ हेइंद्रय यदि । सृके आयुधनामैतत् । तत्संबंधाद्युद्धं
लक्ष्यते । युद्धनामैववा । युद्धे एकः प्रधानोपिदेवस्त्वांप्रत्यहन् त त्तदानीं त्वमश्व्यो ऽश्वसंबंधी वारो वारकः । तदश्ववारः ।
तस्यप्रतिभटस्याश्वानांनिवारकोऽभवः । प्रत्यायनायभाष्यकृद्दृष्टांतमाचष्टे ॥ वालीवेति ॥ यथावालीस्वदृष्टिपातमात्रेणपर

बलापहारंकरोति तथात्वंदृष्टिपातमात्रेणरिपुरथेयोजितानामश्वानांबलमपहृत्यतानपवाहयसीति । यद्वा । अश्ववारइत्यश्ववाह
कःप्रसिद्धः । तदापराङ्मुखतयेत्युपस्कर्तव्यं । यदिदेवोपित्वांप्रत्यहंस्तदातदश्वनिवारकोभवइत्युक्त्याप्रथमंतावत्प्रहारविषयोभ
वतीतिप्राप्नोति अतोभिप्रायमाह । तस्मात्दृष्टिमात्रेणबलापहारित्वात्तेप्रतिहंताकश्चिद्देवोपिनैवास्तीति । ततश्चप्रत्यहन्नितिप्रति
हंतुमैच्छदित्यर्थः । अतएवकिलार्थःस्मशब्दोऽत्रापिहिशब्दः । किंच । हेशूर विक्रांत त्वंरिपूणांगाःअजयः । शूरेत्यस्यतात्पर्यंब
लादिति । पुनरजयो हिरण्यमितिशेषः । सोमस्यापरकीयत्वान्नकर्मत्वं । त्वंसप्तसिंधून् प्रधाननदीः सोमंसर्तवे गंतुं । तुमर्थइ
त्यादिनातवे । अवासृजः अमुचः । नदीजलैः सोमंसंयोजयितुंनदीःप्रवर्तितवानसीति ॥१२॥ नास्मै ॥ अशनिं ॥ य द्यदें
द्रश्चाहिश्चयुयुधाते हेइंद्रयदातवाहिनायुद्धंप्रवृत्तं तदाविद्युन्नामायुध मस्मा अहये नसिषेध।अस्यप्रयोजनसिद्धिंनचकार । तन्य
तुश्चायुधंनसिषेध । यांमिहंह्रादुनिंचायुधे अहिरकिरत् त्वांप्रतिक्षिप्तवान् तेचनसिद्धिंचक्रतुः । सर्वस्यतात्पर्यमाह । यांतन्यतुश
ब्दोक्तामशनिंवज्रं यांचविद्युतं यांचनाम्नामिहं हेतिंयज्ञवेद्युपमांसुतीक्ष्णां यंचह्रादुनिनामधेय मशनिभेदं वज्रप्रभेदं सोहिरुग्रः
त्वामुद्दिश्यैवाकिरत् । एतत्सर्वमायुधजातंत्वांप्रति । त्वत्संबंधिनीं त्वदुपहतिरूपां अस्यसिद्धिंनैवचकार । किं त्वपरीभ्यो पराभ्यो
परस्यांवेलायां पश्चात्कालेतु मघवोत मघवैव विजिग्येत्वमेवतमहिमजयः ॥ १३ ॥ अहेः ॥ पूर्वार्धंतावद्व्याख्याति ॥ अहेरि
ति ॥ हेइंद्र अहेरसुरस्य यातारं तंप्रतिगंतारं तस्यप्रतियोद्धारं त्वांविनाकमपश्यः नकमपि । सकललोकवृत्तांतविदापित्वयात
स्यप्रतिभटोनदृष्टः । कुतः । यद्यस्मात्तंजघ्नुषोपितेहृदिभीरगच्छत् भयंजगाम । त्वन्मनस्यपिपुराभयमुत्पन्नं । एवंभूतमपि त्वं



हतवानसीति । सिंहावलोकन्यायेनाजयोगाइत्यादींश्चतुरोर्धर्चानध्यात्मंव्याख्याति ॥ ज्ञानानीति ॥ गमेर्डोइत्यतोगोशब्दोग
मेरूपं । गत्यर्थाश्चज्ञानार्थाः । अतोगाः ज्ञानानि भक्तानामितिशेषः । मिथ्याबोधतोऽजयः । मिथ्याज्ञानेनाभिभूतानितदपाकृ
त्यस्थिराण्यकार्षीः । सोममस्मन्मनश्चा स्माकंभक्तानांमनश्च शब्दादिविषयजातादजयः । विषयैरपहृतंविरक्तमकार्षीः । सप्त
सिंधून् समुद्रानिवदुस्तरान्महत्तत्वादीन् महत्तत्वांशंचित्तं महत्तत्वांशमहंकारं पंचानांमहाभूतानामंशांश्चदेहस्थान् सर्तवे न्याय
मार्गेगंतु मवासृजो ऽमुचः । प्रेरितवानसीति । नास्मैविद्युदित्यत्रविद्युदादिशब्दार्थांस्तावदाह ॥ विपरीतेति ॥ प्रतिवक्तॄणां प्र
तिवादिनां विपरीतामतिस्तुविद्युत् । द्युतदीप्तावित्यतोद्युत्समीचीनामतिः तद्विरुद्धत्वाद्विपरीतामतिर्विद्युत् । प्रतिवक्तॄणामितिस
र्वत्रसंबध्यते । शब्दाःप्रमाणदूषणाभासप्रयोगास्तन्यतुः । स्तनतेःशब्दार्थस्यहीदंरूपं । वक्तृशक्तिः वक्तृत्वशक्तिर्मिहेत्युक्ता अका
रउच्चारणार्थः । मिहसेचने । शक्त्याहिसिक्तोपोद्बलितावाक्प्रवर्तते । नत्वभ्यासमात्रेण । जन्मांतरवासनाशक्तिः । हुंकृतिःह्रादु
निः। ह्रादतेरव्यक्तशब्दार्थत्वात् । इदानींनास्माइत्यस्यतात्पर्यमाह॥ अनुकूलइति॥ परेशेऽनुकूलेऽनुग्राहकेसत्येतेविद्युदादयःस्व
कार्यंभगवद्भक्तपराभवंनसाधयंतिस्म । अहिरकिरदित्यस्यार्थस्तमःसमुत्थाइति। उतापरीभ्यइत्यस्यार्थोजयतीति । वासुदेवस्यसं
शयकृतोपद्रवाभावात्कथमेतदित्यतोभिप्रायमाह ॥ स्वभक्तेति ॥ अहेरित्यर्धस्यार्थः एकवेति। अहेःसंशयस्य । कुतोन्योना
स्ति । यद्यस्मात्तेतवैवसंशयंजघ्नुषः सतस्त्वदीयानांहृदिस्थितंभयंसम्यग्व्यपैति नत्वन्येषुसंशयनाशायप्रवृत्तेष्वित्यर्थः । नवचेत्य
र्धंचप्रसिद्धेंद्रेव्याख्याति ॥ शतमिति ॥ यद्यस्मात्त्वंरजांसिभीतःश्येनोन रजइत्यंतरिक्षनाम। बहुवचनंचप्रदेशाभिप्रायं। यथा

ह्याकाशदेशान्भीतःश्येनोतिगच्छेत् । श्येनएववेगी भीतस्तुसुतरामितितदुपपादनं ।तथानवचनवतिंचस्रवंतीर्नदीः नदीनामेको नशतं अतर स्तीर्णवानसि । तस्मात्त्वदन्योहेरभिगंतानास्ति । असंगतिपरिहारायाहिंन्नन्नित्युक्तं । हेतौशतृप्रत्ययः । दैत्यमिति बाह्यविषयत्वसूचनार्थं । नदीतरणस्याहिवधेकथमुपयोगइत्यतउक्तं ॥ नानेति ॥ तस्याहेः नह्यन्यस्यैतत्कर्मसंभवतीतिभावः । ईश्वरेव्याख्याति ॥ ईशइति ॥ ईशो विष्णु स्तावतांनवतेर्नवानांचदेवानां तावती र्नवतिंनवच स्रवतीः नदीः सृत्यापगा स्ता नेवदेवांस्तारयामासेतितात्पर्यं । योजनातु यद्यस्मात्त्वंनवचनवतिंचस्रवंतीःसंसारनदीरतररस्तानेवदेवानतारयोऽतस्त्वमेवसंशय स्यहंतेति । दृष्टांतंव्याख्याति ॥ यद्वादिति ॥ ननुप्रयोजककर्तारमभिधायस्वतंत्रकर्तोदाह्रियतेकथमित्यतआह ॥ तथेति ॥ एषां देवानां । तथा तां । एतदुक्तंभवति । यथाभीतःश्येनोरजांसितरतितथातरतोदेवांस्तारयामासेतिव्याख्यानान्नदोषइति । नन्वतरइत्येवश्रूयतेनत्वतारयइति तत्कथमेतद्व्याख्यानमित्यतआह॥ स्वातंत्र्यइति ॥ अत्रतुस्वातंत्र्ये । केतेनवनवतिश्चदेवाइत्य तंआह ॥ वस्विति ॥ वसवोष्टौ आदित्याविष्णुव्यतिरिक्ताएकादश मरुतःप्रधानेनसहिताःपंचाशत् ब्रह्माणोनवप्रजापतयः ऋभवस्त्रयः । रुद्राएकादश । ऊन मेकोनं । देवतासंहितानामग्रंथविशेषः ॥ १४ ॥ इंद्रः ॥ सएव ॥ अत्रैवशब्देनेयमृगीश्वरवि षयैवेतिसूचयति । सइत्यत्रोक्तगुणवत्तयाप्रसिद्धः इंद्रो भगवा न्यातो ऽभक्तैस्तत्प्रसादात्प्राप्तो ज्ञातो भवति । नतुपरोक्तरीत्या सर्वथाऽविदितः । अज्ञेयत्वोक्तिस्त्वभक्तैस्त्वत्प्रसादेनविनानज्ञायतइत्येवमर्थेतिभावः । अवसितस्य पर्यवसानंगंतुः संसारपारंगत स्यमुक्तस्य राजा स्वामी । नकेवलंप्राप्तमोक्षाणामधिपतिः किंतु शमस्यच मुक्तेरपि । किंच । वज्रबाहुः वज्रंज्ञानंतदात्मकबाहा दिमान् । सइत् सएव । उशब्दोप्येवार्थः । तस्यनित्यमित्यध्याहृतेनसंबंधः । नित्यमेव । श्रृंगिणः शृंगशब्दःप्रकाशवाचकः । तथाचाह । श्रृंगंप्रकाशस्तद्वतोनक्षत्रादेरिति । अतोज्ञानंश्रृंगं । तद्वतश्चज्ञानिसमूहस्यराजा चर्षणीनां मुक्तातिरिक्तानांप्रजानां क्षयति ऐश्वर्यकर्मायं । ईश्वरोभवति । सर्वदृष्टांतेनाह नेमिररान्न अराणीव । सच सएव । ता तानिसर्वाणिभूतानि परिबभूव । पर्यभूत् । परिभूतवान् । वशीकृतवान् । यातो जंगमस्या वसितस्य स्थावरस्य शमस्य शांतेः शृंगिणो नक्षत्रादेरितिप्रसिद्धेंद्रे पियोज्यं । वज्रमिवदृढौबाहूयस्यासौवज्रबाहुः । वज्रहस्तइतिवेति ॥ १५ ॥ ३८ ॥ १३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादा चार्यविरचितस्यऋग्भाष्यस्यटीकायांजयतीर्थमुनिविरचितायांद्वितीयोध्यायः ॥ २ ॥

॥ इतिजयतीर्थीयऋग्भाष्यविवरणेद्वितीयोध्यायः ॥

॥ अथजयतीर्थीयऋग्भाष्यविवरणेतृतीयोध्यायः ॥

श्रीमद्धनुमद्भीमसध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः॥ एतायाम ॥ पंचदशर्चमेतदैंद्रंसूक्तं ॥ येसखायः ॥
इतेतिमध्यमपुरुषप्रयोगाद्येऽस्माकंसखायोदेवाः देवादयः । सखायोदेवाश्चेतिवा तेयूयमेत आगच्छत । देवाइंद्रियादि
कंप्रेरयत अन्येसंघट्टिनोभवत । आङोव्याख्यानंत्वरिताइति । किमर्थं वयमिंद्रमुपायाम शरणमितिशेषः । कथंभूताः
गव्यंतः उपमानादाचारइतिगोशब्दादाचारेक्यच् । ततःशतृप्रत्ययः । गोवदाचरंतः । ननुतत्रकर्मणइतिवर्तते तथापिछांदसेन
व्यत्ययेनकर्तुरपिभवति । उपमानोपमेयत्वविवरणार्थमाह ॥ पशुंवदिति ॥ यथागवाद्याःपशवःस्वामिवशस्थास्तथेंद्रवशस्था
वयमिति । ननुसुपआत्मनःक्यजितीच्छायांक्यचिकृतेगाइच्छंतइतिभविष्यति । सत्यं । अधिकमपिदर्शयितुमेतत् । नन्वयामेति
कोयंशब्दः यातेर्लङिरूपमेतत् लङ्भूतेवर्तते नचात्रतत्संभवतीत्यतआह ॥ अतीति ॥ अतिनिश्चितेऽभूतेपिधात्वर्थेभूतत्ववाची
शब्दःप्रयोक्तव्यइत्यस्यार्थस्यप्रतिपादकंसूत्रमाहेत्यर्थः । अन्यत्रच । एष्यत्तुनिश्चितंयत्तदतीतत्वेनभण्यतइति । अयतेर्लोटिरूप
मेतदित्यंगीकारेपिनकश्चिद्दोषइतिचशब्दः । किंप्रयोजनं । सइंद्रोस्माकं नः प्रमतिं प्रकृष्टज्ञानं बह्वर्थविषयं सु सुष्ठु यथार्थं वा
वृधाति वर्धयति । यङर्थएवेति । कुतः यस्मात्सइंद्रःकुवित्क्वाप्यनामृणोऽभेद्यः क्वापिभेद्योनभवति यस्माच्चगवां वाचां संबंधि
वेदवाक्योत्थं पर मुक्तविधयोत्तमं केतं ज्ञानं एकवचनंबहुवचनार्थे । अस्य तस्येंद्रस्यैव रायो वित्तानि । आ त्तस्मादसौनो स्मभ्य
मावर्जते स्त्यागार्थत्वाद्ददाति । ज्ञानानामधिपतिःप्रतिहतिरहितश्चशरणंप्राप्तःकथंतानिनदद्यादिति ॥ १ ॥ उपेत् ॥ उपैव ॥
अहंधनदां धनस्यदातारं । अप्रतीतं वैरिभिरप्रतिगतं । इंद्रमित् ईशमेव । उपपतामि उपगच्छामि । कइव जुष्टां सेवितां पूर्व



भुक्तां । वसतिं नीडं । श्येनोन श्येनोयथा । कथं उपमेभिरर्कैः उपमशब्दःसदृशार्थः । अर्काऋचः अनुकूलर्ग्भिः इंद्रप्रतिपादकर्ग्भिरिं
द्रमेवनमस्यन् स्तुवन्निितियावत् । कथंभूतं । यइंद्रो यामन् यामे । वीप्साभिप्रायमेतत् । सर्वस्मिन्काले कालवाचकएववायं ।
स्तोतृभ्यः स्तोतॄणां हव्यएवास्ति । जुहोतिरत्रादनार्थः । अदनंचोपजीवनं । स्तोतॄणांसदासेव्योदत्तावसरएवेति ॥२॥ निसर्व॥
अशेष ॥ सर्वासंपूर्णासेनायस्यासौसर्वसेनः अशेषसेनापति रेष इंद्रो शेषतः शत्रू न्हंतुमितिशेषः । इषुधींस्तूणान् । न्यषक्त
षंजसंगे वष्टीतिश्रवणाल्लकारव्यत्ययः । बध्नाति । यद्वानीत्युपसर्गश्रवणात्ससाधनक्रियाऽध्याहारेणोक्तं निनितरामशेषतःशत्रून्हं
तुमिति । अथोवा यद्वा । परमेश्वरस्तमांसि भक्तानामज्ञानादीनि हंतुमिषुधीनिवेषुधीन् मानबाणान् मानानिप्रमाणानिबाणाइ
वयेषुतान्निजसज्जनां स्तानेवासक्त आत्मनिसंयोजयति । स्वविषयचित्तादिवृत्तीन्करोति ततःशत्रून्हत्वाचासावर्यः ऋगतौ गम्यः
शरणंप्राप्य इंद्रः । ननुचऋहलोर्ण्यदितिविशेषविहितेण्यतिकृते आर्यइतिस्यात् । सत्यं । तथापि अर्यःस्वामिवैश्ययोरितिस्वा
मिन्यभिधेयेसामान्यविहितयदंतस्यार्यशब्दस्यनिपातनाददोषइतिभावेनोक्तमधीश्वरइति । गाः शत्रुभ्योहृताः । द्वितीयेर्थे मती
र्वा । यस्य भक्तस्य । वष्टि वांछति दातुमितिशेषः । तस्मैसमजति अजगतिक्षेपणयोः । सम्यक् क्षिपति संकालयत्येव । ददात्ये
वेतियावत् । परोक्षतःस्तुतमभिमुखीकृत्याह हेप्रवृद्ध नित्यप्रवृद्ध इंद्र । एवंभूरिवामं भूरिभद्रं गवादिकं । तत्वं तत्वज्ञानंवा ।
भक्तेभ्यश्चोष्कूयमाणः दानार्थेचायंयङंतः अतिशयेनददमानस्त्वमस्मदधि द्वितीयार्थेपंचमी । अस्मान्प्रति अस्मदर्थे । कदा
चित्पणि हिंसकत्वेनसादृश्येनासुरो सुरविशेषोमाभूः । महताप्रयत्नेनभक्तानांसाध्वाचरन्नस्मान्प्रतिनिष्ठुरोमाभूरिति ॥ ३ ॥

वधीर्हि ॥ वज्रेण ॥ हेइंद्र एकएव परापेक्षारहितः । उप समीपे । सर्वस्यांतरे । चशब्दाद्बहिश्च । शाकेभिः शक्लृशक्तौ घञ् । शाकैः शक्तिभि श्चर न्सर्वदेवनरादिलोकंयमयन्निति यावत् । त्वं दस्युं कं । धनिनं धनाढ्यं तन्मात्रेणकथंदस्युत्वं । अय ज्वानइतिवक्ष्यमाणत्वादयज्युंचापि । सत्यपिधनेत्वामयजमानमितियावत् । घनेन मूर्तेना तिदृढेन वज्रेणेतिशेषः । वधी रवधी र्जघंथ । यद्वाघनेनज्ञानेनदस्युमज्ञानगणमवधीः । तस्यधनित्वं धनाकांक्षाजनकत्वं । अस्यैवविवरणं यस्मात्तेपुरुषा धनोः पुष्ठ्य र्थस्यधिनोतेरूपमेतत् । षष्ठीचद्वितीयार्थे । धनुमत्यंतपुष्टंत्वामधि अधिकृत्य अयज्वानःसदैवायजंतो विषुणक् विष्वक् । व्याय न् जग्मुः । देवतांतरादिकंपूजयंतिस्म । तस्मात्तेप्रेतिमीयु र्मृतिंप्रापुः । सर्वसाधारणंमरणंकथमस्यफलमित्यतउक्तं दुःखेति । कथंभूताः सनकाः षणिर्लाभार्थः ततोण्वुल् मोक्षादिलाभेयोग्यस्वरूपाअपिस्म मुक्तियोग्याअपिपरमेश्वरंत्यक्त्वाऽन्यान्पूजयंतोन रकाद्यनर्थंप्राप्नुवंति । किंपुनरयोग्याइति ॥ ४ ॥ परा चित् ॥ अत्राप्ययज्वानइतिश्रवणात्पूर्वोक्ताएवेतिप्रतीतिंतावन्निराकरोति॥ अयज्वानइति ॥ येवक्ष्यमाणाअयज्वानस्तेतुपूर्वोक्तेभ्योन्ये तेषांसनकत्वात् एतेषांमहादोषोक्तेः तर्हिकेते । ये आसुराः असुर स्वभावाःसंति । एवंतात्पर्यमभिधाययज्वभिरित्यादिनाव्याख्याति । यद्वोक्तंविवेकंप्रदर्शयन्नेवायज्वानोन्यइत्यादिनैवव्याख्या ति । हेइंद्र येतुते पूर्वोक्तेभ्योन्येवक्ष्यमाणाअसुराअयज्वानःसंति तेयज्वभिःस्पर्धमानाःसंतः शीर्षा शीर्षाणि । चित् अपि । स्वा निशिरांस्यपि । परावव्रृजुः संतत्यजुः । स्पर्धानिमित्तंस्वशिरस्त्यागमपिनगणयंति । सद्भिःसहस्पर्धामात्रेणसंपूरितार्थाः प्राप्तप्र योजना इतिभावः । ततःकिं । हेहरिवः हरयोश्वाइंद्रियाणिवास्यसंतीतिहरिवान् तस्येयंसंबुद्धिः । स्थातः स्थिर उग्र । इंद्रिये



शःस्थैर्यवान् । दैत्यानामुग्रस्त्वमितियावत् । यद्यस्मादेवंभूतास्तेतस्मादव्रतान्व्रतेनत्वत्पूजनेनहीनांस्तान् दिवः स्वर्गतः । रोद स्यो रोदसीभ्यां । खादंतरिक्षलोकात्पृथिव्याश्चनिरधमः निराकृतवानसीति ॥ ५ ॥ १ ॥ अयुयुत्सन् ॥ इतिहासगर्भत्वादिति हासंसूचयन्व्याख्याति ॥ यदेति ॥ नवग्वानामृषयः क्षितयः प्रजाः । बाह्यैरसुरेंद्रैरुपद्रुतायदेंद्रंशरणंप्रापुः । यद्वा । तदु पलक्षिताःसज्जना स्तमोभि रज्ञानसंशयविपर्ययै स्तामसै स्तमोगुणकार्यै रघसंघैर्वा संपीडितायदावासुदेवंशरणंप्रापुः त दातच्छरणप्राप्त्युपोद्बलिता स्तै रसुरेंद्रै स्तमःप्रभृतिभिर्वासहायुयुत्सन् योद्धुमैच्छन् । यद्वा । वासुदेवमिंद्रांतर्गतंस्वांतर्गतंचे त्युभयत्रयोजना । युयुत्सवस्ते मुनय स्तेषा मसुराणा मज्ञानादीनांवा वधाया ऽनवद्यस्य निर्दोषस्येंद्रांतर्यामिणोवि ष्णोः । सेनां चतुरंगिणीं । स्वांतर्गतस्यविष्णोःसेनां हरिभक्त्यादिकान्गुणान्वा । अयातयंत निरयातयन् प्रेरितवंतः । तदा वृषायुधोन वृषशब्दः श्रेष्ठवाची युधइतिचक्किबंतः । कर्मधारयःसमासः । समर्थायोधाइव वध्रयः तच्छीलेकर्तरिरिप्रत्ययः । स्व शत्रुवधैकशीलाअपितेअसुरादयः प्रवद्भिः प्लवद्भि राशुगतिभि र्विष्णोर्गणैः परिवारैः स्वै र्भक्त्यादिर्गुणैर्वानिमित्तै र्निरष्टाः अ तिशयेनव्याप्ताः अशूव्याप्तौ पलायंतोदिशोभेजुः नष्टाः पलायमानाअदर्शनंगताः तेषुपलायितेष्वैंद्रागणा इंद्रा दिंद्रस्य ईशस्य प्रसादा च्चितयंत स्तानसुरान्संकालयंतः पुनर्द्रावयंत आयन् अगच्छन् हि ॥ ६ ॥ त्वमेतान् ॥ रक्षोगणान् ॥ हेइंद्रत्वं त्वयैवसंपी डितान् संपीडितत्वादितियावत् । रुदतश्च जक्षतो मुनीन्भक्षयतश्च । जक्षभक्षहसनयोः । एतान् नरभक्षकत्वेनप्रसिद्धान्रक्षोगणा न्रजसो रजोगुणस्य पारे ते जगतः सुसत्ववृद्धिर्यदास्यात्तदैवायोधयो योधितवानसि । जगतइत्युक्त्याबाह्यंसत्वमितिसूचयति ।

यद्वा। रुदतः शोच्यान्। जक्षतोगुणभक्षकानानंदादिगुणाच्छादकानेताननुभवसिद्धान्पुंदोषानज्ञानादी न्रजसःपारेंते। नृसत्ववृद्धा वाध्यात्मिकसत्वगुणवृद्धौसत्यामयोधयः। किंच। दस्युंतान्दस्यून्राक्षसान्दिवः स्वर्गादासम्यक् अवादहः अवाक्षिप्तवानसि। दहति रत्रसामर्थ्यात्क्षेपार्थः। संग्रामेहत्वास्वर्गादपिनिराकृतवानसीति। यद्वा दिवोनिराकृत्यनरकेवादहइति बहिःस्पष्टं। अध्यात्मंतुदस्युं अज्ञानदस्युं। सर्वदोषोपलक्षणमेतत्। गुणभक्षत्वादज्ञानादिकान्दस्यून्दिवो ज्ञानतो ज्ञानंदत्वासम्यगवादहो दग्धवानसीति। तेन रक्षसामज्ञानादीनांचविनाशेनसुन्वतः। सुन्वतां सवनमितिशेषः। स्तुवतः स्तुवता मुच्चा उच्चैः। शंसं स्तुतिं संस्तुतिंच। प्रावः प्रकर्षेणारक्षः। विघ्ननिवारणेहितद्रक्षितंभवति ॥ ७ ॥ चक्राणासः ॥ बंधनं ॥ येदैत्यादयः। पृथिव्याःपृथिवीस्थिता नांजनानां। परीणहं णहबंधनेभावेसंपदादित्वात्क्विप्। नहिवृतीत्यादिनोपसर्गस्यदीर्घः परितोबंधनं। चक्राणासः भृशंकुर्वा णाः कुर्वंति। निरपराधान्प्राणिनःकारागारेषुनिबध्य ततोपहृतेनहिरण्येनहेम्ना। मणिनामणिभिश्च। शुंभमानाःशोभमानाःसंति अध्यात्मंतु दृढदोषाहिरण्येनमणिनाशुंभमानाइतितैस्तैर्धनैःप्रलोभ्यजनानांसंसारेबंधनंकुर्वंतीति। तएवमकुतोऽभयंमन्याः हि न्वानासः हिगतौवृद्धौचअंतर्णीतण्यर्थस्येदंरूपं। इतरेतरंगमयंतोवर्धयंतोवा। परस्परेणप्रेरयंतोपि। परस्परेणेत्यव्ययं। इतरेत रसाहाय्यवंतोपींद्रंवासुदेवंकथंचिन्नतितिरुः नैवातरन्। यद्यपीहदुर्दमास्तेतथापीश्वरेणपरत्रदंड्यंतएवेतिभावः। नन्वीश्वरस्तद्व तंज्ञात्वादंडयेत्। तज्ज्ञानमेवतस्यकथं सर्वज्ञत्वात्। किंचेंद्रोवासुदेवोबहिर्दैत्यानामंतस्तमसामज्ञानादीनांवृत्तद्रष्टै वृत्तदर्शना र्थं। सूर्येणसहैवसूर्यसहिता न्स्पशःअज्ञातचरान्देवसंघा न्पर्यदधात् परितःस्थापितवान्। तथाचोक्तं। आदित्यचंद्रावनिलो



नलश्चद्यौर्भूमिरापोहृदयंमनश्च। अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तमिति। तथासूर्योग्निःखंमरुद्भावःसोमःसंध्याह नीदिशः। कालःस्वयंधर्मइतिह्येतेधर्मस्यसाक्षिणइति॥८॥ परियत् ॥ पर्यभुंक्थाः ॥ हेइंद्रत्वं। यद्यस्मान्महिनास्वमहिम्ना। वि श्वतःसर्वदा। सींसम्य गेवानुपचारेण। रोदसीद्यावापृथिव्यौ। उभेमिलितेसहैवएककालमेववापर्यबुभोजीः। छांदसंद्विर्वचनं। पर्यभुङ्थाः। हेइंद्र परमैश्वर्योपेत। तत्तस्मात्त्वाममन्यमानास्त्वामजानतो दस्युं दस्यूनभक्तान्मन्यमानैस्त्वांजानद्भिः। ब्रह्म भिर्ब्राह्मणैर्भक्तसंघैर्निरधमोनिराकृतवानसि। यस्मात्त्वं महासमर्थोतस्त्वदीयाअपित्वदाश्रयेणविरोधिनांनिरासेसमर्थाइति। एक इंद्रशब्दःसंज्ञा। द्वितीयःपरमैश्वर्यवचनः। इंद्रेंद्रेत्यादराद्वाद्विर्वचनं ॥ ९ ॥ नयेदिवः ॥ अत्रपूर्वार्धस्थपदानांयइत्यनेनसंबंधे तएव।मतिवक्तव्यंनास्तीतिन्यूनतास्यादित्यतोयइत्यतःपरमध्याहार्यंप्रदर्शयच्छ्रुतेःसिद्धेनतइत्यनेनान्विततयाव्याख्याति ॥ येद स्यवेइति॥ येदस्यवोदैत्याः। स्वीयमायाभिरेव स्वछद्मभिरेव द्युपृथिव्योरशेषभोगेच्छवो द्यावापृथिवीसंबंधिसमस्तभोगेच्छवोध नदंचतमिंद्रमीश्वरंजिगीषवस्तइत्येतावानध्याहारः। नैवेत्यादिकंसंक्षेपतोव्याख्यानं। दिवःस्वर्गस्यपृथिव्याश्चांतमेकदेशमपिना पुः। मायाभिश्चिदपि धनदांधनस्यदातारमिंद्रं। नपर्यभूवन्। नाजैषुः। तात्किंसहायवान्बहुभिरपिनपराजीयते। वृषभोवर्षिताश्रे ष्ठोवेंद्रोदेवदेवोदस्यून्हंतुमितिशेषः। वज्रंविष्णुज्ञानमेव। प्रसिद्धस्त्वायुधमेव। युजंयुक्तं। चक्रेकृतवान्। किंचेंद्रोज्योतिषास्वप्रभावे न। गास्तमसोगिरिगुहांधकारान्निरदुक्षत् निष्क्रामयित्वाऽधुक्षदिति। बहिःस्पष्टं। विष्णुस्तु निर्निश्चयेनज्योतिषा स्वविषयंनिश्चया त्मकंज्ञानमुत्पाद्य। गाःज्ञानानि। तमसइतिवचनसामर्थ्याद्धृत्कहृद्गततमोगूढानितस्मात्तमसोऽदुक्षत् अदुहत् अधुक्षत्। आवरणनि

रासेनव्यक्तानिकृतवान् । ननुतमोनामज्ञानाभावः सकथंज्ञानानिगूहयेत् । तथात्वेवाकथंज्ञानेननिवर्तेतेत्यतआह ॥ [२।१।७] यदिति ॥ यदु
ग्रंमूलाविद्याख्यंभावरूपमज्ञानंतदिहतमोविवक्षितं । तत्स्वरूपज्ञानावरणं प्रमाणज्ञाननिवर्त्यंचेतिभावः ॥ १० ॥ २॥ अनुस्वधां ॥
एकवाक्यतासिद्ध्येयच्छब्दाध्याहारेणव्याख्याति ॥ [२।१।७] यस्येति ॥ यस्यास्येंद्रस्य । आपःकर्माणि । स्वधांसौख्यमेवान्वक्षरन् । संततम
दुः । यदीयव्यापारज्ञानादिनापरमानंदावाप्तिर्भवतिसएवंभूत इंद्र ईश । योऽयथाज्ञानरूपोविरोधी । नाव्यानांस्वार्थेयत्प्रत्ययः।
नावांसंसृतिनावात्मकानांसंसारसागरतरणोपायानांवेदवाचांमध्येऽवर्धत । मिथ्याज्ञानमपिह्यन्यथाव्याख्याताद्वेदादेवभवति ।
तमोजिष्ठेन वीर्यवता । हन्मना करणेमनिन् । ( हेति )हतिरूपेणअनर्थनिबर्हणेन । सध्रीचीनेनमनसासमीचीनज्ञानतः ।
आसम्यगहन् । किमर्थं । अभिद्यून् । अभितोद्यौःप्रकाशःप्रसिद्धियषापुरुषार्थानांतानुद्दिश्यमोक्षप्रकाशार्थं । अनेनैकस्मिन्नेव
मोक्षेव्यत्ययेनबहुवचनं । नित्यसिद्धत्वान्मोक्षस्यप्रकाशएवप्राप्तिरित्युक्तंभवति । अथापिप्रसिद्धेंद्रपक्षेनाव्यानां नौवयोधर्मेत्या
दिनानावस्तार्येयत् । नावातरणीयानामगाधानामपामितिशेषः । मध्यतोवृधंवृद्धंतमहिमितिव्याख्येयं । अन्यत्समानं । उपल
क्षणमेतत् । सध्रीचीनेनमनसा निर्भयेनहृदयेन । हन्मनायुद्धेनेत्यपिव्याख्यातव्यं । अस्यप्रसिद्धताद्योतनार्थोवैशब्दः ॥ ११ ॥
न्या विध्यत् ॥ [२।१।९] इलिनः ॥ भूस्थितामनुष्याः । इलिनस्युःइलाभूःसास्त्येषामाश्रयइतिव्रीह्यादित्वादिनिः । तत्रतेष्वाविशन्यो
सुरस्तस्येलिबिशइतिनाम । इलिनोविशतीतिइगुपधलक्षणःकः । उपपददैर्घ्यंवस्यबत्वंचछांदसं । इंद्रोदेवस्तस्येलीविशस्यासुरस्य ।
दृह्ळा यानिदृढानि । बलादीनीतिशेषः । तानि । न्यविध्यन्न्यहनत् अनाशयत् । इलीविशस्येत्यस्यतमसोऽज्ञानस्येतिवार्थः । तद



पिहिमानुषान्प्रविष्टं । अन्यद्विष्णौसमानं । किंचेंद्रःशुष्णंशुषेर्नक् शोषकं । जनानां दुःखहेतुं । शृंगिणंवृषरूपंचदैत्यं । व्यभि
नत् अहन् । अथोवा अध्यात्मं । विष्णुःकामंव्यभिनदित्यर्थः । कामातुराअपिशुष्यंतीतिसोपिशुष्णः । वृषइवादम्यइतिशृं
गीच । परोक्षतस्तुत्वाऽपरोक्षतःस्तौति । हेमघवन्यावत्तरः यावान्स्वस्यवेगोस्तितावतावेगेन । यावदोजःयावच्छक्तितोवा स्व
स्यविद्यमानाद्विक्रमाद्वा । ओजःशब्दस्योभयार्थत्वात् । पृतन्युंयुध्यंतं । अथोअन्यमपिशत्रुं वज्रेणावधीर्जघंथ । वज्रेणेत्यस्य
सुबोधतइतिवार्थः । अत्रहेमघवन्विष्णो । यावत्तरोयावांस्तेवेगोस्तितावतासमस्तेन । यावदोजोयावतीशक्तिरस्तितयासमस्त
या । यावद्वीर्यमस्तितेनसमस्तेन । शत्रुंक्रोधादिकं । अवधीरितिशत्रुवधेहरेःशक्त्यादिसामस्त्यप्रयोगोप्यर्थःप्रतीयते । यावदव
धारणइतिस्मरणात् । तांप्रतीतिंनिराकरोति ॥ नेति ॥ शक्तिसामस्त्यमितिवेगादेरप्युपलक्षणं । कुतोनेत्यतआह ॥ [२।१।१२] अनंतेति॥
हियस्मात्तत्तस्मात् । यस्मिन्समस्तंशक्त्यादिकंप्रयुंजीतेतिशेषः । यतएवमतः पूर्वोक्तएवार्थइत्युपसंहारव्याजेनोक्तंविवृणोति॥
[२।१।१२] अतइति ॥ महान्प्रमाणाविरुद्धस्तदनुसारीच । इंद्रेप्येवमेवयोजना ॥ १२ ॥ अभिसिध्मः ॥ [२।१।१३] संसर्वतः ॥ अभिसर्वतः
सर्वस्मिन्देशेसदैववा । सिद्धियुतःसिधेर्भावेक्विप् । ततोमत्वर्थेमः । सपरमेश्वरोस्यजीवजातस्यशत्रून्जीवारिगणान्कामादीनजि
गात् अजयत् जिगाय । अलाक्षणिकंछांदसं । किंच । विरोधिनःप्रति तिग्मेनक्रूरेण । वृषभेणवृषेणजीवश्रेष्ठेनप्राणेन । प्राणि
नांसंसाररूपाःपुरोव्यभेत् अभिनत् । संसाररूपंलिंगंहिप्राणिनांपुरमिव । तच्चप्राणोपदेशादिद्वारेश्वरोभिनत्ति । इंद्रस्त्वस्यलो
कस्यशत्रून्दैत्यानजयत् । वृषभेणवर्षणांगेनतिग्मेनतीक्ष्णेनवज्रेणशंबरस्यपुरोऽभिनदितिस्पष्टं । किंचेंद्रोवृत्रंवज्रेणसमसृजत् सं

योजयामास । अमुष्यवृत्रस्यहत्याइतिशेषः । नहिदारुसंयोगंविनाकुठारेणतच्छिद्यते । ईश्वरस्तुवृत्रमज्ञानंवज्रेणज्ञानेनसंयो जयामास । समानविषयंचकारेतिव्याख्येयं । अमुष्यहत्याइत्यत्रापिसमं । किंच । शाशदानः अतिशयितंशंशशं तस्याद नोभोक्ताशशादनः । व्यत्ययेनशाशदानः । सदैवसुसुखीसइंद्रः । स्वांस्वविषयांमतिंप्रातिरत् । अदिशत् दत्तवान् । स्व प्रजाभ्यइतिशेषः ॥ १३ ॥ आवःकुत्सं ॥ अत्रकुत्संदशद्युमितिपदद्वयाभिधेयमाह ॥ कुत्सामिति ॥ यथासंख्यं व्याख्यानं । यस्मिन्नित्येतत्साकांक्षमतआह ॥ यस्मिंस्थितइति ॥ इंद्रस्यसर्वत्रस्थितत्वाद्यर्थमेतदित्यतोभिप्रायमाह ॥ स्वात्मे ति ॥ यस्यसुभक्त्यातोषितस्त्वंस्वात्मरूपमदर्शयः । चाकन्नित्येतद्व्याख्याति ॥ यइति ॥ यःस्वतंत्रःसचाकन्नुक्तः कथ मित्यतआह ॥ कर्मेति ॥ करोतेःशत्रंतस्यचाकन्निति छंदसिरूपं । कुर्वन्नितिक्रियाश्रयउच्यते । कर्मापरपर्यायाक्रियाचकर्त रिवर्तते । कर्ताचस्वतंत्रः । यतएवमतोयुक्तमुक्तं । ततश्चायमर्थः । हेइंद्रचाकन्कुर्वंस्त्वंयस्मिन्कुत्सेस्थितस्तंकुत्संनाममुनिमान वः अक्षरः । युध्यंतंवृषभंवृषरूपंदशद्युंनामनृपंचप्रावःप्रकर्षेणारक्षइति । तस्यैवयुद्धमुत्तरार्धेप्रपंच्यते । तदपित्वदधीनमितिसूच यितुं । तत्रवृषरूपस्यास्ययुध्यतोनृपस्येति । युध्यंतंवृषभमित्युक्तानुवादःप्रागव्याख्याततत्वात्कृतः । शफच्युतःखुरोत्थितः । द्या मंतरिक्षंउन्नक्षत उदनक्षत उदगच्छत् । कदा श्वेतावाणीकथं । वायुभार्या वायुर्हिश्वा । तेनेताश्वेतेति । अस्याः श्वेतायाः सुतःश्वैत्रेयः । स्त्रीभ्योढक् । रेफार्थस्तुवक्ष्यते । अयंदशद्युर्यदानृषाह्याय नृणांप्रतिभटानांपुंसांसाह्यंसहनमभिभवःतस्मै । तयोरे वकृत्यक्तखलर्थाइतिभावेकृत्यः । यद्यपिऋहलोर्ण्यदितिप्राप्तस्यण्यतोपवादःशकिसहोश्चेतियद्विहितस्तथापिकृत्यल्युटोबहुलमिति



वचनाच्छंदसिण्यदपिभवति । युधतोयुद्ध्यतो ऽभिभवितुमितिशेषः । उत्तस्थौ उदस्थात् । अनेनोदित्युपसर्गस्योभयत्रापिसंबं धइत्युक्तंभवति । हीत्यस्येतिहासस्यप्रसिद्धतांद्योतयति । अथाध्यात्मे । तृतीयासप्तम्योर्बहुलमितिसप्तम्याअंभावाभावः । धर्मएव श्वैत्रेयोवृषःदशद्युश्चेत्यपिवक्तव्यं । कुत्सितोत्सारणात्कुत्सनामाचस्यात् । भिन्नाभिधेयताव्युदासायैवशब्दः । शफच्युतइत्यादे स्तात्पर्यंधर्मरेणुरित्यादि । अल्पोधर्मः । प्रवृत्तिलक्षणइतियावत् । स्वर्गमात्राभिगामी स्वर्गमात्रसाधनं । साक्षाद्धर्मोनिवृत्तिलक्ष णः । मोक्षफलोपगः परंपरयातत्साधनं तदंतर्भूतफलोवास्यात् । तथाचैवंयोजना । हेइंद्रपरमेश्वर । कुत्संकुदितिनिपातःकुत्सि तार्थः । सृगतौअंतर्णीतण्यर्थात्डः । कुत्सितंपापमुत्सारयतीतिक्रियारूपंभक्तानांधर्मंत्वमावः । चाकंस्त्वंयस्मिंस्त्वज्ज्ञानंयदधी नंतं । पापेनसहयुध्यंतं । दशसुदिक्षुद्यौःप्रकाशोयस्यतंदशद्युं वृषभंधर्मनामैवैतत् । अदृष्टरूपंधर्मंच । प्रावः । धर्मस्वरूपमेवप्रपंचय ति । शफच्युतइवतत्संबंधीतज्जातीयोरेणुर्द्यामुन्नक्षत । श्वैत्रेयोवाणीपुत्रोवेदप्रतिपाद्योमुख्योधर्मस्तु नृषाह्यायनृणांज्ञानिनांसाहा य्यायोत्तस्थाविति ॥ १४ ॥ आवःशमं ॥ शमात्मकं ॥ हेमघवन्नधीश शमंनकेवलंक्रियाऽदृष्टात्मकं । किंतुभक्तानांशमात्मकम पिवृषभंधर्ममेव । त्वमावोरक्षः । नकेवलंभक्तानां । किंनाम तुग्र्यास्वपि । कातुग्र्येत्यतआह ॥ तुग्र्याख्येति ॥ ततोभक्तानां संततिष्वपिधर्ममरक्षइत्यर्थः । कथंसंततिस्तुग्र्या । दीर्घकाला । अन्नाकाशयज्ञवरिष्ठेषुतुग्रशब्दइतिशाब्दाः । अत्रवरिष्ठार्थोगृह्य ते । वरिष्ठइतिचविशेष्यापेक्षः । तथाचकालोविवक्ष्यते । वरिष्ठोदीर्घःकालस्तुग्रः । साक्षाद्वादीर्घकालस्तुग्रः । तत्रभवार्थेतुग्रा द्घनितिघन् । विशेष्याकांक्षायांस्त्रीलिंगप्रयोगाद्योग्यतयाचसंततिर्लभ्यतइतिभावः । वृषभमित्युक्तत्वाद्गामितिपुनरुक्तिरित्यतो

नुवादोयमित्यभिप्रायेणक्षेत्रेत्यादिव्याख्याति । त्वं तं श्वित्र्यं श्वेतासुतं गांधर्मे यदरक्षस्तत्क्षेत्रजेषे मुक्तिक्षेत्रविजयायैव । नतु क्षुद्रविषयलाभार्थं । क्षियंत्यत्रेतिक्षेत्रमवस्थामुक्तिश्च । तत्क्षेत्रंच । जिजयेतुमर्थेसेइतिसे । ततःषष्ठीसमासः । श्वित्र्यमितिकथ मित्यतःकिंचिद्व्युत्पादयति ॥ रम्णाद्रेफ उक्तइति ॥ अकारशिरस्कइतिशेषः । शुनाइताश्विता । शकंध्वादित्वात्पररूपं । सा चसारमणाद्राचश्वित्रा । अत्रापिपररूपत्वं । तस्याअपत्यमित्यर्थेढ्यः । किंचअत्रत्वयियेपुरुषास्तस्थिवांसोज्ञाननिष्ठायुक्तास्तेचिदपि । ज्योक् दीप्तिवचनोयंनिपातः । ज्योगामयावीतियथा । ज्योतिरक्रन्चक्रुः । देदीप्यमानमकुर्वन्किंनिजरूपं । कथं । विमुक्त्या येत्वांतत्वतोजानंतितेमुक्ताःसंतोदीप्तस्वरूपाभवंति । किंसर्वेपि नेत्युच्यते । शत्रूयतांशत्रुवदाचरतां । नहिपरमेश्वरस्यसाक्षाच्छत्रु रस्ति । अरीणामयोग्यानां । वेदना वेदनानिज्ञानानि । अधरा धराणि । फलादपभ्रष्टान्येवाकरकरोः । इंद्रपक्षे दशद्युर्नृपएववृषभः शमोपेतत्वाच्छमः । क्षेत्रंतुभूमंडलं । शेषंसमानं ॥ १५ ॥ ३ ॥ १ ॥ त्रिश्चित् ॥ द्वादशर्चमाश्विनंसूक्तं ॥ आरभ्यच ॥ हेनवेदसा नवेदसौ अश्विनौ । अद्य आरभ्यैवचेतिशेषः । संकुचितप्रार्थनेकारणाभावादितिस्मशब्दः । त्रिश्चित् । त्रिरपिदि वानिशायां तंदतरेसंध्ययोश्चसर्वदेतियावत् । युवांनोस्माकमेवभवतं । सर्वतोप्यस्मासुकृपांकुरुतं । नवेदसावित्यस्यार्थमाह ॥ यतइति ॥ यतःकारणात्ताभ्यामन्योवेत्तान । इति तस्मात्तौनवेदसावित्युदितौ । विदेरसुन् । नविद्यतेवेदा याभ्यामितिविगृ ह्यसमासः । सर्वतोप्यधिकज्ञानिनावितितात्पर्यं । नभ्राण्नपान्नवेदाइतिनञःप्रकृतिभावः । किमेतद्व्याख्यानंदेवतांतरेहरौचस मानमित्यपेक्षयामाह ॥ गौणमिति ॥ कथंभूतौ ययोर्वायुवयोस्तु । यामोयांत्यनेनेतिमार्गोविभुर्व्यापी । रातिरुतदानंच



विभु । कथंमार्गदानयोर्विभुत्वमित्यतआह ॥ अशेषेति ॥ यथासंख्यंसंबंधः । देशेष्वित्यतःपरएवशब्दः । किंच । युवोर्युव योर्यैत्र्यंतेनियंम्यंतेऽनेनेतियंत्रं नियमनं । वाससोहिम्येवहि । वासोयंत्रंहिम्याख्यं यद्वदयत्नतो महाप्रयत्नेनविनावाससोनिष्पा दकंस्यात्तथेत्यर्थः । काहिम्येत्यतआह ॥ हिम्येति ॥ तंतवोविक्षिप्यंतेऽनयेतितंतुविक्षेपणी तुरी । हिनोतेस्तंतुषुगतेर्हिम्या । हिगतौ । ततोम्यक् । हीतिरूढोयंशब्दइत्याह । प्रागविवृतत्वाद्दार्ष्टांतिकंविवृणोति ॥ तद्वदिति ॥ प्रेरकाप्रेरकौ । एवंभूतौयु वांमनीषिभिर्ज्ञानिभिर्देवैःसहैवाभ्यायंसेन्यौ । अयगतौघञ् । अभ्यायोभ्यागमनं । सेनयायुक्तौसेन्यौ । अभ्यायायसेन्यौ । छां दसोमुम् । यद्वाऽभ्यायार्थासेनाऽभ्यायसेनातयायुक्तावभ्यायंसेन्यौ । आयार्थसेनौ । अस्मान्प्रत्यागंतुंस्वसेनोपेतौभवतं ॥ १ ॥ त्रयः ॥ पविशब्दोयद्यपिवज्रवाची तथापिसाहचर्यादायुधमात्रेप्रयुक्तइत्याह ॥ पवयश्चेति ॥ चस्त्वर्थः । आयुधान्येवेत्येव शब्दार्थेवा । सोमस्येत्येतदनुपपन्नतयाप्रतीतंघटयति ॥ सोमस्येति ॥ चेतनत्वाच्चेतनाधिष्ठितत्वात् । तेपवयःस्तंभाश्च । त्रयः पवयइत्युक्तं । कानितानित्रीण्यायुधानीत्यतआह ॥ वज्रइति ॥ अत्रवज्रइत्यादितोनिर्देशाद्वज्रसहचरितत्वात्त्रयाणामपिपवि त्वमित्यपिसूचितं ॥ त्रयस्कंभासइत्युच्यते । केतइतितत्राह ॥ त्रिवेणवइति ॥ त्रयश्चतेवेणवश्चेतिविशेषणसमासएवायंनद्वि गुः । कुंतादयस्त्रयोवेणवएव स्तंभनामानः । आरभइत्यादिव्याचष्टे ॥ दिवेति ॥ तथाचायमर्थः । हेअश्विनौ भवदीयेमधुवाह नेमधुसोमंप्रत्यूह्यतेभवंतौयेनतस्मिन्रथेत्रयःपवय स्त्रयःस्कंभासःस्कंभाःस्तंभाश्च स्कभितासः स्कभिताःस्तंभिताःस्थापिताःसंति । तेविश्वइत् सर्वएव । सोमस्यवेनां । वीगतिप्रजनकांत्यसनखादनेषु । अस्मान्नप्रत्ययः । खादनंचपानंपानक्रियांवा पीयतइतिर

संवाऽनुविदुः । एवंभूतेनरथेन । युवामारभे । संपदादित्वात्क्विप् । प्राणिनांयज्ञादिकर्मारंभार्थं कर्माणिकारयितुमितियावत् । यद्वांजोलोकसिद्ध्यर्थंकृतकर्मणांस्वर्गादिलोकप्राप्त्यारंभार्थं नक्तंनिशायांत्रिर्दिवाचत्रिरेवानुयाथः । बहिष्टेविष्णौआयुधान्याह ॥ चक्रमिति ॥ अध्यात्ममाह ॥ वेदाइति ॥ बहिरध्यात्मंचरथंक्रमेणाह ॥ रथइति ॥ स्वीयोवैष्णवः । त्रयःस्तंभाःबहिःप्रसिद्धाः । अध्यात्ममाह ॥ प्राणादयइति ॥ कस्यांचिद्धारणायां द्वयोर्विलोपेनत्रयएवप्राणादयःशिष्यंते । यथोक्तं । त्रित्वेहुत्वाथपंचत्वमिति ॥ यद्वासत्स्वपिवागादिषुप्राधान्यात्पंचानांमुक्तिर्यथा तथापंचस्वपित्रयाणामिति ॥ स्तंभाइतिवक्तव्ये तद्व्याख्यानायस्तंभनानीत्युक्तं। अस्यदेहस्य अपिशब्देनैवमन्यदपिव्याख्येयमितिसमुच्चिनोति । अध्यात्मंमधुशब्दोमोक्षार्थः । सोमस्य मनसो वेनांगतिमितिच ॥ २ ॥ समाने ॥ वैषम्य ॥ हेअश्विनौ समानेवैषम्यहीने सुखदुःखवत्त्वलक्षणेनवैचित्र्येणरहिते किंतुकेवलंसुखभाजने । अहन्नन्हि । विमुक्तिकालइतियावत् । त्रिःसर्वदा । अवद्यगोहनौ दोषाच्छादकौ अखिलदोषनाशकौ । युवां । प्रसिद्धाश्विपक्षेसमानमहर्यज्ञेप्रसिद्धं । तत्राखिलक्रियाभ्रेषनाशकावितिव्याख्येयं । अथस्वभक्तानां युवयोर्भक्तानांअस्माकं । यज्ञंत्रिस्त्रिवारं । मधुनामधुत्वहेतुनाहस्तेन । मिमिक्षतंस्पृशतं । हस्तस्पर्शेनशोधयतं । चशब्दोवक्ष्यमाणसमुच्चये । किंच युवंयुवामस्मभ्यं । नोदोषाःरात्रौउषसश्चउषसिचततःपरस्मिन्दिनेच अहोरात्रं । त्रिःसर्वदैव । वाजवतीर्युद्धवतीर्युद्धजिता । इषोन्नानि । यद्वा मोक्षगतानिसुखानि । तान्यपिद्याध्यात्मिकयुद्धलब्धानि । पिन्वतं दानकर्मायं अलंक्षरतं ॥ ३ ॥ त्रिर्वर्तिः ॥ यद्वर्तनं ॥ हेअश्विनाअश्विनौ । युवंयुवां । यद्वर्तिःसर्वलोकेषुवर्तनं । नकेवलंसामान्यं । किंतु । यच्चत्रिःत्रिकालगंतत्प्रतियातं



याथः । अतीतानागतवर्तमानंसकलंप्राणिनांकर्मप्रवर्तयितुंसर्वत्रसन्निहितौस्थः । तत्सर्वंयुवयोरेवेतियावत् । किंच अनुव्रतेभक्ते जनेविषये । त्रिःसर्वदाशिक्षतंशिक्षयथः । सुप्राव्ये सुष्टुरक्ष्ये सुभक्तेविषयइतियावत् । कथंभूते । त्रेधेवकालानुगते कालत्रयभाविनि । कालसंबंधनिमित्तमेवत्रैविध्यं नतुवस्तुतइतीवशब्दः । त्रिःसर्वदा । सुशिक्षतंअतिशयेनशिक्षयथः । एवंभूतौयुवामस्मेअस्मभ्यंनस्तु त्रिःसर्वदानांद्यंनंदतीतिनंदस्तस्यभावंसुखंचवहतंवहेतंप्रापयेतं । पृक्षः पुष्टिंच । त्रिस्त्रिकालगांनित्यांपिन्वतंक्षरतं। अक्षरेव अक्षराणीव वर्णवदेव । यथावैदिकामंत्राःसर्वमभिमतंददति तथैव ॥ ४ ॥ त्रिर्नोरयिं ॥ वित्तंच ॥ हेअश्विनौयुवांनोस्मभ्यं । त्रिर्नित्यं । रयिंवित्तंच । वहतंप्रापयतं । देवतातादेवतातिंच । त्रिर्नित्यंवहतं । देवाःसर्वदायथाऽस्मत्पूजास्वीकारायागच्छेयुस्तथाकुरुतं । उतअन्यच्च । धियोबुद्धीः । चेतनामात्रस्यबुद्धिःस्वाभाविकीकिंप्रार्थ्यतइत्यतउक्तं । शुभ्रांशुद्धांधियंच । त्रिर्नित्यमेवावतंरक्षतं । सुभगएवसौभगस्तस्यभावःसौभगत्वंसौभाग्यं । नोस्मभ्यं । त्रिःसदैवावतं । श्रवांस्युत कीर्तिंच । नस्त्रिः सदैवावतं । कथंभूतौ । सूरेःसूर्यस्यदुहितापुत्रीउषाः त्रिष्ठंकालत्रयेभवं । वांरथं युष्मदीयंरथमारुहत् । तथाभूतौ । अध्यात्मंतु वांभगवतोर्युवयोःप्रसादात् । सूरेर्विदुषोगुरोर्दुहिताबुद्धिस्त्रिकालेभवंरथमारुहत् । भक्तदेहेज्ञानोदयोभवतीति ॥ ५ ॥ त्रिर्नोअश्विना ॥ पूर्वार्धसंक्षेपतोव्याख्याति ॥ सर्वेष्विति ॥ अद्भ्यइत्येतत्दिव्यानिपार्थिवानीत्येतत्तुल्यंपुनस्त्रिशब्दश्रवणादितिप्रतीतिनिरासायोक्तं ॥ अद्भ्यःसुखायैवेति ॥ तथाचैवंयोजना । हेअश्विनौ अद्भ्यःउ सुखायैव । नोस्मभ्यं । त्रिःसर्वेष्विपकालेषु । दिव्यानिदिविभवानि । भेषजाभेषजानि दत्तं । त्रिःपार्थिवानि पृथिव्यांभवानिचदत्तं । तथात्रिरंतरिक्ष्याण्यपि दत्त

मितिशेषः । अपांलोकत्वाभावात्येदेवासइत्यत्रेवापृच्छब्दस्यांतरिक्षलोकोपलक्षणत्वेतुनविरोधः । तत्रपंचमीबहुवचनमेतत् ।
उत्तरार्धव्याख्यानंसुखमिति । अथान्यच्च । नकेवलंसुखसाधनानिभेषजानि । किंतुशुभस्पती पारस्करादित्वात्सुट् । युवांशंयोः
कंशंभ्यामितिमत्वर्थेयुस् । भेषजजनितैहिकसुखवतः । चतुर्थ्यर्थेषष्ठी । सूनवे युष्मत्पुत्रकस्य । ममकायस्वल्पस्यममैव । अस्मद
श्चतुर्थ्याममादेशःछांदसः । अल्पार्थेचाकजित्युक्तंभवति । ओमानं ओतामानेष्वित्युक्तप्रकारेणानुभवगोचरं । त्रिधातु त्रिष्वपि
कालेषुधीयतइतिनित्यं । शर्मसुखं मुक्तिगतं । वहतं प्रापयतंदत्तं । अथसुतस्येत्यादिनाप्रकारांतरेणव्याचष्टे । अथवेतिसंबंधः ।
पूर्वंममकायसूनवइतिसामानाधिकरण्येनव्याख्यातं । इदानींतुवैयधिकरण्येनेतिविशेषः । ममकाय मामकाय । अणिवृद्ध्यभा
वःछांदसः ॥ ६ ॥ ४ ॥ त्रिर्नोअश्विनायजता ॥ अयंवर्गःशिष्यमतिपरीक्षार्थंनव्याख्यातोभाष्यकृतेतिसंप्रदायविदः तथा
पियथाश्रुतंयथामतिव्याख्यास्यामः । हेअश्विनौ दिवेदिवे । त्रिः कालत्रये । युवांनोस्माकं । यजतौयाज्यौ । भवतमितिशेषः ।
यौत्रिधातु त्रिकालं । सितनिगमिइत्यादिनाधत्तइतिधातुःकालः । पृथिवींपर्यशायतं पर्यशाययतं । स्थापितवंतौस्थः । हेनास
त्यौ परावतोदूरतोप्यागंतुमितिशेषः । तिस्रोलोकत्रयसंबंधिन्योरथ्या रथ्याः । युवयोःसुगमाःसंति । तस्माज्जगतोंतरात्मा वात
इव । स्वसराणि सर्वेषुदिनेषु । गच्छतमागच्छतं ॥ ७ ॥ त्रिरश्विना ॥ हेअश्विनौ युवां । सिंधुभिर्नदीभिःसप्तमातृभिश्चसह ।
वेद्युत्तरेत्युक्तास्तिस्रःपृथिवीःप्रत्यागच्छतं । यतोयुवांप्रति त्रयःसवनत्रयसंबंधिनः । आहवाः आह्वानानिक्रियंते । तथात्रेधाहवि
श्चकृतं । यौदिवोप्युपरि । प्रवाप्रवौ । प्रकृष्टगतिमंतौ । वागतिगंधनयोःविच् । यौचनाकंस्वर्गंद्युभिर्दिनैःदिनेषुअक्तुभीरात्रिभिः



रात्रिषुच । हितंयथातथा । रक्षेथे रक्षथः ॥ ८ ॥ क्व ॥ हेनासत्यौ युवयोस्त्रिवृतस्त्रींल्लोकान्वृणोतीतित्रिवृत् तस्यरथस्य ।
त्री त्रीणि । चक्रा चक्राणि । क्व । दर्शनोत्कंठयैवंपृच्छति । तस्यचरथस्य । बंधुरोबंधुराउन्नतानतास्त्रयःप्रदेशाःक्व । कथंभूताः ।
येसनीळाः सनीडाः । तस्मिंश्चरथेरासभस्यवाजिनोयोगःकदानुभविष्यति । कथंभूते येनरथेनास्मदीयंयज्ञमुपयाथः ॥ ९ ॥
आनासत्या ॥ हेनासत्यावागच्छतं । युवांप्रत्यस्माभिर्हविर्हूयते । किंचमधुपेभिःसोमपैः आसभिरास्यैः । मध्वोमधुसोमं । पिब
तं । उषसोपिवक्ष्यमाणत्वाद्बहुवचनं । युवोर्युवयोश्चित्रंअद्भुतं । घृतवंतंदीप्तिमंतंरथं । सवितोषसइतिव्यत्ययेन । सवितुःसुतो
षाः । ऋताययज्ञाय । यज्ञंगंतुं । पूर्वंप्रथमतएवेष्यतिगच्छतिहि । तयासहागच्छतमितिभावः ॥ १० ॥ आनासत्यात्रिभिः ॥
हेनासत्यौ त्रिभिरेकादशैरेकादशानांवर्गैः त्रयस्त्रिंशद्भिर्देवेभिर्देवैःसहेहयज्ञे । पेयंपातव्यं । मधुसोमं । प्रत्यायातं । आगत्यचा
युरस्मभ्यंप्रतारिष्टंप्रयच्छतं । अस्मदीयानि रपांसिपापानिनिर्मृक्षतंशोधयतं । द्वेषोद्विषः । सेधतं प्रतिषेधतं । सचाभुवासहभुवा
स्माकंसखायौभवतं ॥ ११ ॥ आनः ॥ हेअश्विनौ नोस्मभ्यंदातुं । सुवीरंरयिं । त्रिवृतारथेनार्वाचंस्वर्गादर्वागितियावत् । व
हतं । किंच शृण्वंतावुक्तमवधारयंतौ । वांयुवां अहमवसेरक्षायै । जोहवीमि आह्वयामि । तस्मात् वाजसातौ युद्धे । नोरक्षा
यै । वृधे वृद्ध्यैच । भवतं ॥ १२ ॥ ५ ॥ २ ॥ ह्वयाम्यग्निं ॥ एकादशर्चमिदंसूक्तं । तत्राद्यालिंगोक्तदैवतपादा । शेषाःसा
वित्र्यः । प्रथमां प्रतीतदेवतासुविष्णौच क्रमेणसंक्षेपतोव्याचष्टे ॥ ह्वयामीति ॥ तैस्तैरग्न्यादिनामभिर्युक्तं । प्रागव्याख्यात
त्वाद्रात्रिशब्दंविष्णौनिर्वक्ति ॥ रातीति ॥ रातिददातियस्मात्तस्मात्सविष्णूरात्री । रातेःष्ट्रप्रत्ययः । रतित्वाद्रतिकर्तृ

त्वात् रमेःष्ट्रोडिच्च । रतिदत्वाद्वा रतंरातीतिरतशब्दाऽऽद्याकारस्यदीर्घोद्वितीयस्यलोपः । रातेश्चकःस्त्रियामीकारः । तथाचा यमर्थः । अहंस्वस्तयेसंततसौख्याय । प्रथमंवैश्वानराख्यमग्निंह्वयाम्याह्वयामि । मित्रावरुणौचावसे रक्षणायेहयज्ञे ह्वया मि । जगतोनिवेशनीं निविशंतेत्रेत्याश्रयभूतांरात्रीं ह्वयामि । सवितारंदेवंचोतयेरक्षायै ह्वयामीति ॥ १ ॥ **आकृष्णेन** ॥ अत्रकृष्णंरजोबहिरंतश्चव्याख्याति ॥ **कृष्णमिति** ॥ शार्वरंतमइतिसंबंधः । देवोऽमृतंमर्त्यंचनिवेशयन्नायातिइत्येतद्द्वेधाव्या चष्टे ॥ **देवानिति** ॥ अथवेतिपूर्वेणसंबंधः । मर्त्यानित्यनुवादेनसृतिगानितिव्याख्यानं । ततश्चायमर्थः । देवः सविता । कृष्णेनरजसाशार्वरेणतमसा । तत्प्रवर्तकतयेतियावत् । आवर्तमानः प्रवर्तमानोऽमृतंदेवजातं । मर्त्यंनृजातंच । उपलक्षण मेतत् । अन्यानपिप्राणिनोनिवेशय न्निशासुप्रस्वापयन्हिरण्ययेनहिरण्मयेन । रथेनभुवनानिपश्यन्नायातीति । यद्वासवि तादेवो रविगोजनार्दनः । कृष्णेनरजसाआवर्तमानइत्यादिपूर्ववत् । रविगतत्वंविनापिजगत्प्रसविताविष्णुः । कृष्णेनरजसा ऽविद्याख्येनहृत्तमसा । आवर्तमानोऽमृतंविमुक्तवर्गं । मर्त्यंचसृतिगजातंच । निवेशयंल्लयेषुस्वात्मनिसन्निवेशयन्वासय न्हिरण्य येनस्वीयेनरथेन भक्तानांशुद्धेनशरीरेणवा भुवनानिपश्यन्नायातीति ॥ २ ॥ **यातिदेवः** ॥ अत्रपूर्वपादार्थमाह ॥ **आयाती ति** ॥ एतत्पदंपूर्वत्रापिसंबध्यते । पूर्वंरथेनायातीत्युक्तं । अत्रशुभ्राभ्यांहरिभ्यामितितदविरोधेनव्याख्याति ॥ **शुभ्रेति** ॥ यजतइत्यस्यार्थोयाज्यइति । यजेरतप्रत्ययः । शुभ्रशब्दःश्वेतवाचीतिप्रतीतिनिवारणायाह ॥ **शुभौचेति** ॥ रमेर्डः पूर्वप दाकारलोपश्च । शुभौगत्यादिना । रमणीयौरूपेणेतिशुभ्राविव्यर्थः । ननुसूर्यस्यसप्ताश्वाः तत्रकथंद्वयोरेवग्रहणं प्राधान्यादि



त्याह ॥ **पुरोगेति** ॥ शुभ्रशब्दस्यप्रसिद्धार्थपरित्यागेकोहेतुरित्यतआह ॥ **हरिदिति** ॥ परावतइत्येतदनूद्यव्याचष्टे ॥ **परावत इति** ॥ तथाचायमर्थः । आयातीत्युक्तानुवादेनविशेषणान्युच्यंते । देवःसविता । प्रवताप्रवणेन । क्वचिन्नीचैःप्रदेशैरायाति । क्वचिदुद्वतोन्नतेनोच्चैःप्रदेशैरायाति । नित्यमितिशेषः । एतच्चक्रियासातत्येलडितिज्ञापनार्थं । किंचयजतोयाज्यः । शुभ्राभ्यां हरिभ्यांशुभ्राश्वयुक्तेनरथेनायाति । अपिच सवितादेवः । प्राणिनांविश्वानिदुरितान्यपबाधमानः । परावतोदूरतआयाती ति ॥ ३ ॥ **अभीवृतं** ॥ अत्ररथस्यकृशनैरभीवृतत्वंविशेषणमुक्तं । तद्व्याचष्टे ॥ **अभीवृतश्चेति** ॥ कृशनशब्दस्यहिरण्य नामसुपाठात् । तस्यसवितुः । शम्याशब्दंव्याख्याति ॥ **शम्येति** ॥ युगाणी युगकीलं । तदयमर्थः । यजतोयाज्यश्चित्रभा नुः । कृष्णानिरजांसितमांसि । तविषींतेजश्चदधानः । कृशनैरभीवृतमाच्छादितं । विश्वरूपंविचित्रं । हिरण्यशम्यंहिरण्मयश म्यं । बृहंतंरथमास्थात् अधिष्ठितवानिति । अत्रतमसःपरस्तात् नतत्रसूर्योभातिइत्युक्तेः परमेश्वरेकथंतमःप्रकाशौदधानइतिव चनमित्यतआह ॥ **तमइति** ॥ तमःप्रकाशौप्रवृत्तौयदधीनौ यतश्चोत्पन्नौ । सवासुदेवस्तौदधानइत्युच्यते । कृष्णेत्यादिपदार्था नन्यथाप्याह ॥ **कृष्णमिति** ॥ कृष्णारजांसीतिप्राक्समानाधिकरणतयाव्याख्यातमिदानींतुपृथक्वृत्त्यपेक्षयाबहुवचनमित्यभि प्रायेणकृष्णंरजइत्युक्तं । सत्वपूर्वास्त्रयोगुणाःकृष्णंरजस्तविषीतिपदत्रयेणोच्यंतेइत्युक्ते यथाक्रममितिप्रतीतिःस्यात् नचकृष्णत्वं सत्वे तविषीत्वंतमसि शक्यसमर्थनमतउक्तं ॥ **व्युत्क्रमादिति** ॥ कृष्णत्वंतमस्यजामेकामित्यादौप्रसिद्धं । प्रकाशहेतुत्वात्सत्वं तविषी ॥ ४ ॥ **विजनान्** ॥ **तत्तुरंगाः** ॥ श्यामत्वाच्छ्यावाः । शितिपादोनीलपादो हिरण्यप्रउगंरथं । जनान्प्रति वहंतः

सामर्थ्यात्ततुरंगा स्तस्यसवितुःतेप्रसिद्धास्तुरंगाः । शश्वत्सर्वदा । विशःप्रजाः जगदितियावत् । व्यख्यन् । अपश्यन्पश्यंति । यस्याश्वाअपिसर्वदर्शिनः किमुतासाविति । प्रउगंकिमुच्यतइत्यतआह ॥ [३०।२०] संधिरिति ॥ रथस्यरथावयवानां । ततश्चहिरण्योप निबद्धसंधिमित्यर्थः । किंच विश्वानिभुवनानि जगदितियावत् । दैव्यस्यदेवप्रियत्वाद्दैव्यनाम्नः सवितुर्हरेस्तुहरेरेवोपस्थेसमीपे तस्थुः समीपस्थंवर्तते । कथं सर्वगतत्वात् तच्च यच्चकिंचिदित्यादिश्रुतिसिद्धमिति ॥ ५ ॥ तिस्रोद्यावः ॥ इहतिस्रोद्यावइति अनूद्यव्याचष्टे ॥ [३०।२१] तिस्रइति ॥ प्रत्यक्षानुमानागमजन्यंप्रमात्रयं । द्युत्यर्थस्यदीव्यतेर्भावेरूपमेतत् । द्वावुपस्थावित्यनूद्याभिधे [३०।२१] यमाह ॥ [३०।२१] द्वाविति ॥ विराषाडित्यस्याभिधेयंनिमित्तंचाह ॥ [३०।२१] श्रीरिति ॥ यमशब्दस्यसनिमित्तमभिधेयमाह ॥ विश्वस्येति॥ अस्यपदस्यपूर्वत्रापिसंबंधः । यच्छतेःपचाद्यच् । पूर्वार्धपदानांसंक्षेपतोघटनांसूचयति ॥ [३०।२१] अस्येति ॥ गदितंसर्वद्युत्रयाश्रयत्वा दिकं सदैवास्यभगवतः । तदयमर्थः । तिस्रोद्यावोयमस्यसवितुरुपस्थाः समीपवर्तिन्यः । तथाद्वौजडाजडवर्गावुपस्थौ । एवंभु [३०।२१] वनेविषयेविराषाडेकाऽद्वितीयातस्योपस्थेति । ननुसर्वविश्वंजडाजडवर्गद्वयांतर्भूतंतत्किमर्थंपृथक्प्रमाग्रहणमित्यतआह ॥ जडे ति ॥ जडाजडशब्दाभ्यांहियत्केवलंजडंयच्चकेवलंचैतन्यंतल्लभ्यते । नतूभयसमाहारात्मकं । तथाविधंचमानंप्रमात्रयं अतःपृ थगुक्तं । नचजडभागोजडशब्देन चैतन्यंचाजडशब्देनग्रहीष्यतइतिवाच्यं । संसारेचैतन्यस्यमनोवृत्तेश्चसंवलनेनैवप्रवृत्त्यापृथ [३०।२२] क्करणायोगात् । तथात्वंचान्यत्रोदाहृतप्रमाणसिद्धमितिहिशब्दः । तर्हिकेवलचैतन्यरूपाश्रीर्नपृथग्वक्तव्येत्यतआह ॥ सर्वेति ॥



पृथगितिवर्तते सत्यं सामान्यतोलब्धापिश्रीःसर्वस्वाम्यंवक्तुंपृथगुदिता । तच्चसवितुरुत्कर्षायोपयोक्ष्यते । ननुच द्युत्रयादिकस्यस मीपस्थत्वोक्त्या सवितुःकास्तुतिःकृतास्यादित्यतआह॥ [३०।२२] अन्योन्येति॥ अन्योन्यसंबंधोनियम्यनियामकभावादिरिहविवक्षितः। [३०।२२] तृतीयपादंव्याख्याति॥ मुक्तेति ॥ नकेवलंसंसारिणामाश्रयोहरिः किन्नाम रथ्यंरथसंबंधिवस्तुजातं रथस्याणिंन यद्वत्सर्वदैवसंश्रि तं एवममृतानि मुक्तभूतानि यानितान्यब्जजेशपूर्वाण्यशेषतोप्यधितस्थुराश्रितानिवर्तंते।सवितारंहरिमितिप्रकरणाल्लभ्यते। एतत्प्रशं सामात्रं नपुनरत्रतात्पर्यमित्यद्वैतिनस्तन्निरासायाह॥ [३१।१] इत्येषइति ॥ वेदार्थसारोवेदतात्पर्यगोचरोर्थः कुतइत्याकांक्षानिरासार्थत्वेन [३१।१] चतुर्थपादार्थमाह॥ इहेति ॥ यउयएव तत् । उक्तंप्रमेयं चिकेतत् पंचमोलकारः। अभिपश्येदन्यथेतिशेषः। सइहममपुरतोब्रवीतु । चिकेतदित्यस्यार्थांतरं कुर्याद्वेति । अन्यथेत्यत्रापिसंबध्यते। बाधकाभावादितिभावः । कालांतरेविपरीतकरणाशंकानिरासायकु र्याद्वेत्युक्तं । चतुर्थपादंप्रकारांतरेणव्याचष्टे ॥ [३१।२] तद्यइति ॥ तत्सवितुःस्वरूपंममैतावत्ज्ञातं । यउयस्तु । चिकेतत् यथावदेवा तिशयेनेतियावत् । पश्येत् । सइहअस्मासुअस्मदर्थेशेषंज्ञानंअस्मदविदितंतत्स्वरूपं ब्रवीतु । प्रकारांतरेणव्याख्याति ॥ [३१।२] चकारोति ॥ यएवविष्णुस्तदेतद्विश्वंचिकेतचकार । सइह नःप्रति । स्वस्वरूपंब्रवीत्वितिवेति ॥ ६ ॥ ६ ॥ विसुपर्णः॥ [३१।३] गंभीर॥ परा नंदात्कारणात्सुपर्णः सुअतिशयेनपरःणआनंदोस्येति। गभीरवेपाः। वेपःशब्दोवेगवाची गंभीरवेगः। असौप्राणेरतिरस्येत्यसुरः। सुनीथः नीथोनीतिः । शुभनीतिश्च । सविताभगवान्विष्णुरंतरिक्षाणि स्वांत(रीक्ष्याणि)रिक्षाणि। ईक्षदर्शने कर्मण्यकारोह्रस्वता

च । व्यख्यदपश्यत् । उत्तरार्धतात्पर्यमाह ॥ इतीति ॥ इत्येवंभूतंपरमानंदमगाधवेगं । प्राणेरममाणं फलाव्यभिचारिनीतिं अंतर्भावितप्रपंचं सर्वज्ञंकएवापश्यत् नकोपि । कथं । दुर्लभत्वादाक्षेपः । ततश्चैवंयोजना । एवंभूतःसूर्यइदानींक्वतिष्ठति । अस्यरश्मिःकतमांद्यांकतमस्मिन्नंतरिक्षप्रदेशेआततान व्याप्तः । इतिकश्चिकेत कोददर्श । नकोपीति । यथान्यत्रदेवतांतरपरत्वमविहायैवभगवत्परत्वंव्याख्यायतेनतथात्र । किंतुकेवलंभगवत्परत्वमेवेत्याशयवानाह ॥ पश्यन्निति ॥ इहगगनेरवेःरश्मिगणानपिपश्यन्नपिलोकःसर्वव्याप्तान्विष्णोरश्मीस्तंचनपश्येदित्यभिप्रायेणैवकुत्राततानेत्याद्याक्षिप्यते । एतदुक्तंभवति । सूर्यस्तदीयारश्मयश्चगगनाधोभागव्यापिनोलोकेन दृश्यंतएव । अतोनतदपेक्षयाऽयमाक्षेपोयुक्तः । किंतुव्याप्तत्वेपिभगवांस्तदीयारश्मयश्चप्राकृतैर्नदृश्यंतइतितद्विषयएवेति । नन्वयमाक्षेपइतिकथमुच्यते । आक्षेपस्यविपर्ययेऽपर्यवसानात् । क्वेदानींसूर्यो नक्कापि । कतमांद्यांरश्मिरस्याततान नकतमामपीत्यापत्तेरित्यतआह ॥ व्यक्तिमिति ॥ आक्षिप्यतइतिसंबंधः । यथाचैतत्तथैवास्माभिर्योजितमिति ॥ ७ ॥ अष्टौ ॥ अत्रत्रीधन्वेतिव्याख्याति ॥ ऊर्ध्वमिति ॥ ऊर्ध्वमध्यमधरंचेतित्रिविधंतमो धन्वत्रयं । धन्वत्वंकथमित्यतआह ॥ सुखेति ॥ तत्तमोयतःसुखलीनंसुखरहितंतस्माद्धन्वशब्दं । निरुदकोहिदेशोधन्वशब्देनोच्यते । तेनसुखाभावोलक्ष्यते । योजनशब्दस्याभिधेयंनिर्वचनंचाह ॥ युक्तमिति ॥ तमएवयोजनंस्यात् कुतः दृढश्लेषात्कृत्यल्युटोबहुलमितिवचनाद्युज्यतेश्लिष्यतइतियोजनं । प्रकषगतिविज्ञानादृढेत्युक्तं । तस्यैवविवरणं युक्तंभवेत्तज्ज्ञैःसर्वदैवहीति । पृथिव्याअष्टौककुभइत्येतद्द्वेधाव्याचष्टे ॥ अष्टाविति ॥ पृथिव्याःप्रसिद्धायाअष्टौककुभोदिशःपूर्वाद्याःतदवच्छिन्नाःप्रदेशा

इत्येकोर्थः । यद्वापृथुत्वात्पृथिव्याः प्रकृतेःप्रदेशाअष्टौककुभोदिशइत्यपरः । सप्तसिंधवःसमुद्रास्तावत्प्रसिद्धाः अपरानप्याह ॥ महदाद्याइति ॥ महदहंकारभूतानि स्यंदनात्कार्यप्रवाहत्वात्सिंधवः । पूर्वार्धवाक्यार्थमाह ॥ तानीति ॥ तानिककुभादीनि वस्तूनि । हिरण्याक्षत्वंहरौघटयति ॥ हिरण्येति ॥ वार्याणीत्येतद्व्याचष्टे ॥ वार्याणीति ॥ यद्यस्मात्सुवित्तंशोभनानिवित्तानिवरणीयंवरणीयानि तस्माद्वार्याणि । ऋहलोर्ण्यत् । अनेनरत्नशब्दोवित्तार्थइत्युक्तंभवति । ततश्चायमर्थः । यःपृथिव्याअष्टौककुभ स्त्रीणियोजनानि धन्वानि सप्तसिंधूंश्च व्यख्यदपश्यत् । सहिरण्याक्षः । सवितादेवआगादस्मानागच्छत् । कथं । दाशुषेदातुंवार्याणिरत्नानिदधत् । वार्याणिरत्नानिदाशुषेदधत् ददिदितिवेति ॥ ८ ॥ हिरण्यपाणिः ॥ विविधाश्चर्षणयोयस्यासौविचर्षणिरितिसिद्धेऽर्थांतरमाह ॥ चर्षणिभ्यइति ॥ कुगतिप्रादयइतिसमासः । सूर्यवेतीत्यस्यार्थमाह ॥ सूर्यमिति ॥ वीगत्यादौ । धातूनामनेकार्थत्वाद्दणोतीत्येतत्संपूरयतीतिव्याख्यातं । यद्वाप्रापणार्थत्वाद्धातोःसंपूरयतीतितात्पर्यार्थकथनं । तदयमर्थः । वक्ष्यमाणप्रकारेणहिरण्यपाणिर्विचर्षणिःसविता । उभेद्यावापृथिवी उभयोर्द्यावापृथिव्योरंतर्मध्येईयतेप्रतीयते । अंतरांतरेणयोगइवांतर्योगेपिद्वितीयोपसंख्यातव्या । किंच । अमीवांप्राणिनांपापमपबाधते । सूर्यंप्रसिद्धंवेति । कृष्णेनरजसातमसा द्यामंतरिक्षमभिकृणोतीति ॥ ९ ॥ हिरण्यहस्तः ॥ स्वस्यस्वेनसंबंधाभावात्स्ववानित्ययुक्तमित्यतआह ॥ स्ववानिति ॥ सविष्णुः । परवान्स्ववानितिपरतंत्रस्वतंत्रयोर्हिनामनी । हिरण्यहस्तइत्येतद्व्याकुर्वन्पूर्वंहिरण्यपाणिरित्येतदपिव्याख्याति ॥ स्वर्णेति ॥ सुपूर्णं रत्नादिना । यतोसौदेवःसुपूर्णंस्वर्णपात्रंदधानोवर्तते तेनपूर्वस्यामृचि स्वर्णपाणिर्हिरण्यपाणिरिहचस्वर्णहस्तो

हिरण्यहस्तउक्तइत्येकंव्याख्यानं । हिरण्यंहिरण्यात्मकंपात्रंपाणौयस्येत्यादिनिर्वचनात् । यतःस्वर्णवर्णस्तेनचेत्यपरं। कथमेतदि त्यतआह ॥ [३१।६] पृथगिति ॥ स्वर्णवर्णःसस्वर्णपाणिरुक्तः हिरण्यवर्णौपाणीअस्येतिनिर्वचनादितिभावः । तथापिपाण्योरेवहिरण्य वर्णत्वंलभ्यतेनसर्वावयवानांइतिनवाच्यं । उपलक्षणार्थत्वात्पाणिशब्दस्येत्युक्तं । पृथक्पृथक्सर्वेषामितियावत् । पाणिपूर्वाणामं गानांहिरण्यवर्णत्वमित्याइति । उपलक्षणेकिंप्रयोजनमित्यतोप्युक्तं ॥ [३१।८] पृथक्पृथगिति ॥ प्रत्येकमेव नसमुदायेनेतिभावः । त थाचायमर्थः । योदेवोरक्षसो रक्षांसि । यातुधानांश्च । अवांतरजातिभेदात्पृथगुक्तिः । अपसेधन्निराकुर्वन्प्रतिदोषंसर्वासुरात्रि षु । दोषाशब्देनात्रतदुपक्रमोपसंहारौलक्ष्येते । गृणानस्तूयमानोस्थात्स्थितः सहिरण्यहस्तोऽसुरोऽसुसुरतः सुनीथःसुनीतियुक्तः सुमृळीकोऽधिकंरक्षकः स्ववानर्वाङ्नीचानस्मान्प्रतियात्विति । अन्यत्रदेवतांतरमविहायभगवत्परत्वव्याख्यानादत्रापितथेतिप्र तीतिंवारयति ॥ [३१।१०] एतैरिति ॥ अत्रसवितासूर्यादन्यएव सचवासुदेवएव । अन्यत्वंतावत्कुतः । एतैः क्वेदानींसूर्यइत्यादिनोक्तै र्लिंगैः । यतोवेतिसूर्यमित्युक्तमतश्च कर्मकर्त्रोर्भेदावश्यंभावात् । तथापिवासुदेवःकुतःएतैराणिंनरथ्यमित्यादिनोक्तैर्लिंगैः । किंच । प्रतिदोषंगृणानइतिगायत्रीप्रतिपाद्योयंप्रतीयते । गायत्र्याचोक्तोवासुदेवएव । ध्येयःसदेतिपुराणवाक्यात् । अपि चात्रहिरण्यवर्णःकथितः । हिरण्यवर्णश्चारणैरुपनिषद्भिस्तत्रतत्रहिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएवसुवर्णइत्यादौवासुदेव एवोक्तः । नचतत्रापिसूर्यः । सूर्येकथितत्वात् । नचान्यः । यतस्तस्ययथाकप्यासंपुंडरीकमेवमक्षिणी । इतिकप्यासपद्माक्षइ त्युक्तः । कंपिबन्नालसंबंधिकमलायतलोचनेतिब्रह्मांडे । किंच । तस्योदितिनामेत्यसावुदाख्यउक्तः । नचसूर्यादीनामिदंनाम



संभवति । सएषसर्वेभ्यःपाप्मभ्यउदितइतितन्निर्वचनात् । तस्यसंसारिण्यसंभवादिति ॥ १० ॥ येते ॥ [३१।११] येपंथानः ॥ हेसवित र्देव येते प्रसिद्धादेवयानाःपूर्वभवाःपूर्व्याः । येतेचांतरिक्षेअमुत्रलोकेसाध्याइतिशेषः । अरागतोवा अथवारजोहानादरेणवः रेणुशब्देनरजःशब्दोलक्ष्यते । तस्यचरागोवारजोगुणोवार्थः । तद्रहितपुरुषसंबंधद्वारकंचेदंविशेषणं । सुकृताः निवृत्तसुकृतप्रा प्याःपंथाःपंथानः । तेभिस्तैः । सुगेभिःसुगमैः । कंटकादिरहितैःपथिभिः । तान्प्रदायेतियावत् । अद्यनोस्मान्रक्षचसंसारात् । अथोअन्यच्चनः । अस्मानधिअधिकांश्चब्रूहि । त्वद्वचनमात्रेणाधिकाभविष्यामः । हीनेभ्योधिकत्वस्यसिद्धत्वादधिकेभ्यस्त्वप्रा प्यत्वात्समेभ्यइत्युक्तं । एतद्घटनंचान्यत्रद्रष्टव्यं । पथां बहुत्वंचावांतरभेदेनेति ॥ ११ ॥ ७ ॥ ३ ॥ ७ ॥ एवंहिरण्यस्तूपदृष्टा ऋचोव्याख्यायोत्तरासांऋषिमाह ॥ [३१।१२] कण्वस्त्विति ॥ विष्णोरनुग्रहमवाप्नुवन्ज्ञानविततिमिच्छन्निति अध्यापनेहेतुद्वयं । अथ चशब्दावितरेतरसमुच्चये । तुशब्दएवार्थः । तेनजीवनार्थत्वंवारयति । देवान्विष्णुप्रधानकानग्न्यादीन् । ऋक्शतावशिष्टंचस एवददर्शेतिसंबंधः । तर्हिकथमस्यशतर्चित्वमित्यतउक्तं ॥ [३१।१३] जप्यस्येति ॥ भावेकृत्यः कालतइतिकालांतरत्वमुक्तं । जप्यस्यांत इत्यवस्थांतरत्वं । एतदर्थमेवाध्यापयन्नित्युक्तं अवशिष्टमित्युक्तस्यैवविवरणं ॥ [३१।१३] श्रृण्वंत्विति ॥ इत्यंताऋचइतितद्गुणसंविज्ञा नोबहुव्रीहिः । अनेनत्वमग्नइत्यतःप्राक्तनीनांकण्वदृष्टत्ववचनेनाग्नेषळ्नाप्रस्कण्वइतिकण्वदृष्टास्वेवचतुर्दशानांयत्प्रस्कण्वदृष्टत्वव चनंतदसदित्युक्तंभवति । प्रमाणंतुप्रागेवोक्तमिति ॥ ७॥ [३१।१४] प्रवः ॥ विंशत्यृचमिदमाग्नेयंसूक्तं । ऊर्ध्वऊष्वितिद्वयौप्याविंत्येके । बहु वइतिश्रवणात् । हेप्रजाःज्ञानकर्माधिकृताः । देवयतीनांदेवज्ञानाद्देवानांयजनाद्वादेवयत्यःतासां । द्वितीयांतस्यदेवशब्दस्येणःश

त्रंतात्स्त्रियांङीपिकृतेसिद्धेन यतीशब्देनश्रितादिषुगमिगम्यादीनामुपसंख्यानात्समासः । गतिश्चज्ञानंवायजनंवेति । पुरूणांबहूनांविशांप्रजानांवोयुष्माकं । यह्वंयहुं । छंदस्यमिपूर्वरूपमकृत्वायणादेशएवकृतः । पुत्रमग्निंहुताशनंविष्णुंवा । हुताशनस्यबहुपुत्रत्वघटकंबह्वाधेयत्वइति । विष्णोस्तुबहुज्ञेयत्वतइति । अतएवदेवयतीशब्दोद्वेधाव्याख्यातः । वयंसूक्तेभिःसम्यक्प्रयुक्तैर्वचोभिः । प्रः सदेमहे । याच्ञाकर्मसुपाठात् । कथंभूतं अन्येचसंतोजना यंसीमित् सम्यगेव । ईळते स्तुवंति ॥ १ ॥ जनासः ॥ पूर्वार्धंव्याख्याति ॥ सहसेति ॥ यंसहोवृधं सहसावायुनैधितं । वर्धतेःकर्मणिक्विप् । अग्निंत्वां । जनासः सज्जनाः । दधिरेधारयंति । वयंचतेतस्यहविष्मंतःसंतो विधेम । कर्मकुर्मः । परिचरणकर्मसुपाठात् । उत्तरार्धगतंसंत्येतिपदं व्याख्याति ॥ संत्यइति ॥ संपूर्वात्तनोतेर्ड्यः । धार्याग्नेस्तद्गतस्यविष्णोश्चसंततत्वंप्रसिद्धमेव । विष्णुःकथंसहोवृधित्यतआह ॥ विष्णुरिति ॥ सहःशब्देकर्मण्युपपदेंतर्णीतण्यर्थात्क्विप् । उभयत्रेगुपधलक्षणःकोवा । हेसंत्य सएवमस्माभिःपूजितःसुमनास्त्वमिहलोकेऽद्य । वाजेष्वन्नेषुविषयेषु । नोस्माक मविताररक्षकोभवेति ॥ २ ॥ प्रत्वा ॥ हेअग्ने वयंदूतंहोतारंविश्ववेदसंत्वां प्रवृणीमहे । यस्यमहोमहतःसतस्तेऽर्चयोर्चिषोविचरंति भानवोरश्मयश्चदिविदिवंस्पृशंति ॥ ३ ॥ देवासः ॥ अत्रप्रत्नशब्दार्थमाह ॥ प्रततेरिति ॥ प्रपूर्वात्तनोतेरकारउपधालोपश्चपुरातनत्वात्प्रत्नइतिप्रसिद्धं । हेअग्ने वरुणोमित्रोअर्यमाइत्यादयो देवाः । दूतंप्रत्नंत्वांसमिंधतेसंदीपयंति । किंच । योमर्त्य स्तेतुभ्यंददाश । दाशृदाने ददौ । सत्वयाप्रसन्नेनसता विश्वंसंपूर्णधनं जयतिप्राप्नोति ॥ ४ ॥ मंद्रः ॥ अत्रमंद्रशब्दार्थमाह ॥ मंद्रइति ॥ महान्मखोयस्मिन्विषयेसमहामखः । मदंत्यनेनदेवाइतिमंदोमखः सोअस्यास्तीत्यूषशुषिमुष्कमधोरइत्यत्रयोगविभागाद्रः । अन्येनमहत्त्वं । भूमनिंदेत्यादिनावा । हेअग्ने मंद्रस्त्वं । विशांप्रजानां । होता गृहपति दूतश्चासि । किंच । देवाः यानिध्रुवाण्यव्यभिचरितानि । व्रतानिकर्माण्यकृण्वतअकुर्वत । तानिविश्वानिसर्वाणि । त्वे त्वयि । संगतानित्वद्विषयाण्येव ॥ ५ ॥ ८ ॥ त्वेइत् ॥ अत्रचतुर्थपादंव्याचष्टे ॥ देवानिति ॥ सुवीर्येतिपंचम्येकवचनस्यसुपांसुलुगित्यादिनाकारादेशः । यजेर्लेटिबहुलंछंदसीतिशपोलुगितिभावः । हेयविष्ठ्यव्याख्यास्यते । अग्नेविश्वंहविःसुभगेमहैश्वर्ये । त्वेइत् त्वय्येव । आसम्यक् । हूयतेऽस्माभिरितिशेषः । सएवमस्माभिर्दत्तहविः सुमनास्त्वमद्यनोस्मदर्थे । सुवीर्यासुवीर्यात्कारणाद्देवान्यक्षियजसि । अपरमुत आगामिन्यपिकाले । यजेतिशेषः । सुवीर्यकार्यंह्येतत् । यदेकस्यैवानेकान्देवान्प्रतियुगपदनेकप्रत्तहविःप्रापणं ॥ ६ ॥ तंघ ॥ तंहि ॥ हेअग्ने येमनुषःसंतोमनुष्याः । स्वराजं तमुक्तगुणमग्निंत्वामीं एव । इत्था निर्विकारतया । सर्वदेतियावत् । नमस्विनोनमस्यंतः । उपासते । होत्राभिराह्वानरूपाभिर्ऋग्भिःसमिंधते प्रकाशयंतिच । तेतुस्त्रिधोबंधनात्अतितितिर्वासोघ संसृतेस्तीर्णाहि । प्रकारांतरेणव्याचष्टे ॥ स्त्रिधइति ॥ येमनुषइत्थातंत्वामीमेव । नमस्विनस्तेस्वराजंस्वराष्ट्रं उत्तमंब्राह्मण्यमितियावत् । उपासतेप्राप्नुवंति । प्राप्यचहोत्राभिःसमिंधते दीप्ताविद्वांसोभवंति । ततस्त्वत्प्रसादेनस्त्रिधोऽतितितिर्वासोहि । कोर्थः । इहैवजन्मनितीर्णदुःखाःजीवन्मुक्ताजाताहीति ॥ ७ ॥ घ्नंतः ॥ तमः ॥ येउत्तमाःपुरुषाः अपःकर्माणि । उपलक्षणमेतत् । मनःप्रभृतिच । उरुक्षयाय उरुःपूर्ण

स्त्वमेवक्षयआश्रयस्तस्मै । उरुब्रह्मक्षितित्वेन । तत्रत्वय्येवसंस्थितेर्निष्ठयेतियावत् । चक्रिरेचक्रुः । तेवृत्रंतमोऽज्ञानंवा । घ्नंतो रोदसीद्यावापृथिव्यौ तद्गतांल्लोकान्जनानतरन् अत्यशेरत । सएवंस्वाराधकानतिशयितान्कुर्वन् वृषाश्रेष्ठो द्युम्नीभगवान्वि ष्णुः । ऋदद्श्वः ऋदद्श्वस्वरूपएव । सर्वदावेदानुच्चारयद्धयग्रीवरूपं तेनेतियावत् । कण्वेमुनौमयि । आहुतःआहितःस्थितो भुवदभवत् । किंनिमित्तं गविष्टिषु गोर्ज्ञानस्येष्टिष्वन्वेषणेषुप्रार्थनेषुकृतेषु कण्वेनेतिशेषः । सिद्धंचैतत्तस्यप्रयोजनमित्याहभाष्य कारः ॥ ततइति ॥ हयशिरसःसन्निधानात् । शुद्धाइत्यस्यैवविवरणं ॥ वेदानुगाइति ॥ पूर्वाभ्यस्तवेदात्यंतसादृश्यवत्यः । यद्वागोशब्दोगिरांवाचकइतिभावेनगविष्टिष्वित्यस्यतात्पर्यमिदं । द्युम्नीकुतइत्यतआह ॥ द्युतीति ॥ द्युम्नंद्युतिः ॥ ८ ॥ सं सीदस्व ॥ देवेषु ॥ हेमियेध्यमेध्यप्रशास्तस्तुताग्ने । यस्त्वंदेववीतमः वीगतौ ततःक्विप् गतिश्चज्ञानं अतिशयेनवीर्वीतमः । दे वेषुवीतमोदेववीतमः । देवेषुज्ञानवत्तमोऽसि । अन्यैश्चगुणैर्महानसि । सत्वमिहयज्ञे । संसीदस्व सन्निहितोभव । शोचस्वदी प्यस्वच । अनेकार्थत्वात् । विष्णुपक्षे धूममरुषंदर्शतंत्वत्साक्षात्कारमस्माकंविशेषेणसृजेतियोजना । तत्रदर्शनस्यकथंधूमत्वादि कमित्यतआह ॥ धूमइति ॥ दर्शतशब्दोक्तेश्वरसाक्षात्कारःसंसारस्यधूतकृतिर्यतस्तस्माद्धूमः धुनोतीति । घञर्थेकविधानमिति रुषोरोषः । तद्धीनत्वंचतत्सामानाधिकरण्याभावः । अग्निपक्षेतु दर्शतंदृष्टिगोचरं । अरुषंधूमंविसृजेति । तत्रधूमस्यारुषत्वंक थमित्यतआह ॥ धूमश्चेदिति ॥ प्रसिद्धधूमश्चेदत्रविशेष्योविवक्षितस्तदाशुभगंधनादाज्याद्युद्भूतशुभगंधवत्त्वादरुषः । अरुष त्वेननिर्दोषत्वं तेनशुभगंधनंलभ्यतइति ॥ ९ ॥ यंत्वा ॥ हेहव्यवाहन यंयजिष्ठंत्वामिहलोकेदेवामनवेमनोरर्थेदधुराहितवंतः । यं



चत्वांधनस्पृतंधनस्पृशंधनिकं । कण्वःकण्वपुत्रोमेध्यातिथिर्मेधातिथिश्चदधौ । यंत्वां । वृषादधौ । यंचोपस्तुतोदधौ सइतिपूर्व त्रान्वयः ॥ १० ॥ ९ ॥ यमग्निं ॥ यंसुतः ॥ यमग्निं । कण्वः पितापुत्रयोरभेदोपचारात् कण्वस्यमेसुतोमेध्यातिथिर्मेधाति थिः । ऋतात् यथार्थाद्वेदात् । ल्यब्लोपनिमित्तापंचमी । सत्यांवेदवाचमुक्त्वाअनूच्य(व्याख्याय)अधिईधे समीधे दीपितवान् । तस्यतस्माअग्नये । इषोन्नानि । प्रदीदियुः अस्माभिरपिप्रदेयानिहि । ददातेःकर्मणिलिङ् । अलाक्षणिकंछांदसंद्रष्टव्यं । किंच । तमग्निंप्रत्येवेमाःसर्वाऋचःप्रवर्तनीयाः । ततश्च तमग्निंवयंवर्धयामसि वर्धयाम । कथंवर्धनं प्रकाशात् । तथाचतदीयांपूर्णतांप्र काशयामेति । ईधइत्यनेनदीप्तिरहितस्यतदुत्पादनमुच्यतेइत्यन्यथाप्रतीतिनिरासायाह ॥ इंधनंत्विति ॥ प्रकाशनात् । प्रज्ञा पनात् ॥ ११ ॥ रायः ॥ वित्तानि । हेअग्ने यस्यतेतव । देवेष्वप्याप्यं प्राप्यमस्ति । कुतइत्यतउक्तस्यहीत्यस्यार्थोयज्ञेति । यश्चत्वं । स्वधावःसुखवर्धकः । सुखवाचिनिद्वितीयांतेस्वधाशब्देउपपदेंतर्णीतण्यर्थाद्वर्धतेर्डः । सत्वमस्माकं रायोवित्तानि । पूर्धिपूरय पूर्णानिकुरु । सुखवर्धकःस्वधावरितिसंबोध्यतइतिवा । तथात्वेविच् । यश्चत्वंश्रुत्यस्यवाजस्यराजसिराजाभवसि । अस्यतात्पर्यंश्रुत्येति । श्रुतिसंबंधित्वाच्छ्रुत्यंवाजोन्नंयज्ञभागइतियावत् । तस्मादग्निरेवमुच्यतइतिशेषः । महांश्चासि । सत्वंनोस्मा न्मृळ मृळय सुखयरक्षवा ॥ १२ ॥ ऊर्ध्वः ॥ अस्मत् । यस्त्वं । वाजस्यान्नस्य । सनितासनयिता । नोस्मभ्यमन्नदाता । तथोर्ध्वउत्थितउद्यमीसन् । ऊतयेअस्मद्रक्षाकृते । सवितादेवोन विष्णुवत् सुऊर्ध्वस्तिष्ठ सूद्यतोभव । ऊशब्दार्थोनित्यमिति । नन्वत्र यदाप्रार्थ्योविष्णुस्तदाकथंसवितानेतिव्याख्येयमित्यतआह ॥ विष्णुश्चेदिति ॥ कुतः यद्यस्माद्वाघद्भिःवदद्भिस्तुवद्भि

द्भिर्जैः ऋत्विग्भिर्युक्तावयं त्वामंजिभिः अंजसंगेभावेइकारः संगैःस्नेहैर्भक्तिभिर्विह्वयामहे । तस्मात् ॥ १३ ॥ ऊर्ध्वोनः ॥ ज्ञानेन । ऊर्ध्वउद्यमी उच्चगुणोपित्वं । नोस्मान्केतुनाज्ञानेन ज्ञानंदत्वेतियावत् । अंहसःपापात् नि नितरांपाहि । तदर्थंच वि श्वमत्रिणंसंदह । अत्रिशब्दार्थमाह ॥ असुराइति ॥ अर्थांतरंचाह ॥ अदंतीति ॥ अथवारक्षांस्यत्रयः कस्मात् अदंतीति । अदनंसर्वसाधारणमित्यतउक्तं ॥ अधिकेति ॥ अदभक्षणे अस्मादिनिप्रत्ययोरुगागमश्चत्वेच । इकारोप्येवंप्रत्ययोभवतीत्यत्रय इत्युक्तं । तथाचश्रुतिरत्रिर्हवैनामैतद्यददत्तिरितीति । किंच नोअस्मां श्चरथायचरणाय । चरगतिभक्षणयोः । भक्षणायभोगाय गतयेच । स्वलोकंत्वदीयलोकंप्रति चरणायच । जीवसेजीवनायापि । ऊर्ध्वानुत्तमान्कृधि नित्यंकुरु । भोगादिविषयेस्मानुत्तमा न्कुर्विति । किंच । देवेषुदेवेभ्यः । दुवोदोहनानिच । नोस्मान्विदाः पंचमोलकारः । सदालंभय । दोहनानिदर्शयति । अति महांत्येवाखिलकाम्यानीति ॥ १४ ॥ पाहि ॥ अरं ॥ हेबृहद्भानो यविष्ठ्याग्ने । नोस्मान्रक्षसोराक्षसात्पाहि । अरंछिद्रंदुःखादिदो षमन्यान्प्रापयतीत्यरावा पापपूरुषः । अरशब्दोपपदादाङ्पूर्वादंतर्णीतण्यर्थाद्वातेरन्प्रत्ययः । तस्याराव्णो । धूर्तेर्धूर्त्कृतेर्हिंसारूपा द्वचनान्नःपाहि रक्ष । तथा रिषतोनश्यतः हिंसार्थत्वात् दुष्टात्पाहि । उतवाऽन्यच्चजिघांसतः अस्मद्वधायअस्मद्धननायप्रवर्त मानाच्च नःपाहीति । यविष्ठ्यशब्दंविष्णावग्नौचक्रमेणव्याचष्टे ॥ यवीयःस्विति ॥ यविष्ठशब्दाद्भवार्थेभवेछंदसीतियत् । अग्नि श्च ब्रह्माद्यपेक्षयानित्यंयविष्ठतमएवेत्यतोयविष्ठ्यइत्युक्तः । कथमेतल्लभ्यतइत्यतआह ॥ यदिति ॥ यस्मादाधिक्यार्थेधिकश



ब्दरूपंभवति आधिक्येधिकमितिस्मरणात् । अतोयविष्ठशब्दात्परोयशब्दस्तमबर्थइति ॥ १५ ॥ १० ॥ घनेव ॥ वायुः ॥ यद्यस्मात्तपुषा तापेनैव । जंभति अत्तिसंहरति । ततस्तपुर्जंभस्तस्यसंबुद्धिः । हेतपुर्जंभाग्ने त्वमराव्णः । उक्तरीत्यापापपुरुषा न्विष्वक्सर्वतोविजहि । कथं । घना घनान्मेघानिव । वायुरितिशेषः । यश्चास्मद्ध्रुक् अस्मद्द्रोहीतंचविजहि । किंच योमर्त्योऽत्य क्तुभिः । अतिरतिक्रमणार्थः । अक्तुःसंगः । स्नेहाभावैःस्नेहमात्रंपरित्यज्येतियावत् । निस्नेहैःपुरुषैःसहेतिवा । शिशीते शोतनू करणइत्यस्येदंरूपं । सर्वदातीक्ष्णोभवति । निशितःकुठारइव सरिपुर्दुरात्मा पापपुरुषः नोस्माकं । माईशत ईशोनभवतु ॥१६॥ अग्निर्वव्ने ॥ सुवीर्यं ॥ अग्निरीशः कण्वाय कण्वस्यमममां । सुवीर्यंवव्ने अंतर्णीतण्यर्थस्यवनेरूपं । समभाजयत् । अग्निरेव कण्वंसौभगंवव्ने । किंच अग्निरेव मेध्यातिथिंमेसुतंमेधातिथिंच । उतमित्रा मेमित्राणिच । प्रावत् ररक्ष । नकेवलमेवंममैवोपकारकः किंतु । अग्निरेवोपस्तुतंमुनिंच । सातौलाभेविषये । प्रावत् ररक्ष । हेतीतिहासमत्रसूचयति ॥ १७ ॥ अग्निना ॥ अग्निविषयेपू वार्धतात्पर्यमाह ॥ तुर्वशादीनिति ॥ तथाशब्दःसमुच्चये । नकेवलमेतावत् । किंतुवयं तुर्वशंयदुमुग्रदेवंचेत्येतांस्तुर्वशादीन्त्रा ज्ञो । यत्सत्कारार्थंपरवतोदूरतोहवामहेतच्च । तेनाग्निना तद्बलेनैव । विष्णौव्याख्यातुंतुर्वशादिशब्दांस्तावन्निर्वक्ति॥ तुरोपीति॥ तुरोवायुरपि । सविष्णुश्च । नकेवलंराजा । तुरोवशोयस्यासौतुर्वशः । यदस्तिततउच्चत्वाद्यदुरितिमयूरव्यंसकादित्वात्साधुः विष्णुरितिसर्वत्रसंबध्यते । उग्रोसुरान्प्रतिदेवश्चेत्युग्रदेवः । इदानींवाक्यार्थमाह ॥ तमेवेति ॥ तं तुर्वशादिनामकंविष्णुं तत्प्रसा

देनैवेतिसंबंधः । अनयदेवेत्यादिनोत्तरार्धंव्याख्याति । सोग्निरेव । नववास्त्वं बृहद्रथं तुर्वीति मित्येतान्नववास्त्वादिकान्राज्ञो । दस्यवे लक्षणयातत्संबंधिने । विनिग्रहाय दस्युविनिग्रहेविषये। सहोबलं । नयत् अनयत् । अजांग्राममनयदितियथा। तान्दस्युवधौपयिकबलवतोकार्षीत् ॥१८॥ नित्वां ॥ [३२।१५] मनुष्यः ॥ हे अग्ने । मनुर्मनुष्यःसन्नहं । शश्वतेशाश्वताय । जनायमुक्तजनायापि । ज्योतिर्ज्ञानप्रदं । त्वांतुहृदिनिदधे । अहोमदीयंधाष्र्ण्यं । यदल्पोप्यहंमहांतंत्वांद्रष्टुंचिंतयामीतिभावः । त्वदीयंचकृपालुत्वमाश्चर्यं । कथमिति । यंत्वां । कृष्टयःसर्वाःप्रजाः । नमस्यंति । यश्चत्वं ऋतजातः । अग्निश्चेद्ब्रह्मजः । ऋतात्परब्रह्मणोजातइति । हरिर्ऋतादर्थाव्यभिचारिणः वेदवाचइतियावत् । अभिव्यज्यतइत्यृतजातः । उक्षितःसिक्तः । संबन्धः । सर्वैःस्वगुणैर्युक्तइतियावत् । सएवंगुणकश्चत्वं । कण्वेमयि । दीदेथ । सर्वदादीप्यसेप्रतीयसे । व्यत्ययात् ॥ १९ ॥ त्वेषासः ॥ [३२।१६] अमेयाश्च ॥ अग्नेस्तस्योक्तगुणस्यहरे स्त्वेषासःत्वेषाइत्युदिताःशक्तयश्च । यद्यपित्विषदीप्तावितिपठ्यते तथाप्यर्चयइतिपृथगुक्तत्वाच्छक्तयोत्रग्राह्याः । अर्चयोरश्मयश्चामवंतः अमावतः अमेयाएव । भीमासोभीमाभयंकराश्च । कथं । सदमित् सर्वेषुस्थानेषु । यातुमावतोरक्षस्विनः । रक्षांस्यस्यसंतीतिराक्षसपक्षिणःपुरुषस्य । प्रतीतयेप्रतिगंतुंआभिमुख्येनगंतुमपि । नशक्याइतिशेषः । एवंभूतस्त्वंविश्वंसमस्तमत्रिणंसंदह । रक्षस्वीयातुमावान्कस्मादुक्तइत्यतआह ॥ [३२।१७] यातवइति ॥ यातेस्तुन् । तेषांयातूनांहिंसना यातुमा । स्वार्थेणिजितिहिंसैवहिंसना । मीङ्हिंसायां । मानंज्ञानंलयश्चैवमर्यादाचापिकथ्यतइत्यभिधानं । तद्वान्यतस्तस्माद्राक्षसोरक्षस्वी यातुमावानितिप्रोक्तः । यातनानुभवाच्चयातुमावानितिप्रोक्तः । यातुर्यातना तस्यमाऽनुभवोयातुमा । तद्वानिति ।



प्रसंगाच्छिष्यशिक्षार्थमाह ॥ [३२।१८] क्वचिदिति ॥ उलूकयातुमित्यादौ । तत्रापियातनैवनिमित्तमितिभावः । यात्यतइतियातुः । रक्षस्विनोनप्रतीयतइतिविशेषणंकिमर्थमित्यतआह ॥ [३२।१८] संतमिति ॥ ताविष्णोःशक्तयःरश्मयश्चसंतंपुरुषंप्रत्यनुकूलतःस्थिताःआभिमुख्येनगंतुंशक्याः । यथाप्रल्हादादेः । अतोरक्षस्विनइतिसार्थकंविशेषणं ॥ २० ॥ ११ ॥ ४ ॥ क्रीळं ॥ पंचदशर्चमिदंमारुतंसूक्तं । तत्राद्याप्रधानमरुद्विषया । एवमेकवचनादन्यत्रापिज्ञेयं । शेषाःसाधारणाः ॥ [३२।१९] क्रीडा ॥ हेकण्वाः काण्वामदीयाः । क्रीळं । क्रीडंक्रीडाशीलं । यद्यपिपचाद्यच् इगुपधलक्षणःकोवा कर्तृमात्रेविहितः । तथापि जगत्पालनादिक्रीडयाऽस्यनकिमपिप्रयोजनमितिज्ञाप(यितुमेवमुक्तं)नायैवमुक्तं । शर्धः सुखाढ्यं । बलाढ्यमपिवेतियोज्यं । अनर्वाणमनिंद्रियं । इंद्रियाणिहयानाहुरितिश्रुतेः । यःस रथेप्राणिनांदेहे शरीरंरथमेवचेतिश्रुतेः । शुभःशोभावांश्चतं । वोयुष्माकंस्वामिनमितिशेषः । मारुतंचगुणैस्तादृशंक्रीडाशीलत्वादिगुणैःक्रीडादिशब्दवाच्यंविष्णुंवाविष्णुंचाभिप्रगायत स्तुत । विष्णोःप्राकृतविग्रहविधुरत्वाद्युक्तानिंद्रियता । वायोस्तुकथमित्यतआह ॥ [३२।२०] नेति ॥ इंद्रियशब्देनतदभिमानिनोत्रविवक्षिताइतिभावः ॥ १ ॥ येपृषतीभिः ॥ अत्रपृषत्यादिशब्दार्थमाह ॥ [३२।२१] पृषत्यइति ॥ एषांमरुतां । अन्यदृष्ट्यादित्रयं आयुधमायुधविशेषः ये स्वभानवोऽनागंतुकतेजस्काः पृषतीभिर्ऋष्टिभिर्वाशीभिरंजिभिश्चसाकमजायंत आजन्मनएवमाद्युपेताः । उत्तरत्रसंबंधः । विष्णावेतद्धटयितुमाह ॥ [३२।२२] स्वप्रकाशइति ॥ स्वःस्वविषयोभानुःप्रकाशोज्ञानंयस्यासौस्वर्भानुरित्यर्थः । बहुरूपत्वाद्बहुवचनमित्युक्तमेव । तैःपृषत्यादिभिर्लिंगैःसह व्यज्यतइत्यनेनजन्मसमर्थितं

तल्लिंगसाहित्यंकथमित्यतआह ॥ [३२।२२]तत्तादिति ॥ विष्णोरपीतिसंबंधः । तच्चतदेव ॥ २ ॥ इहेव ॥ [३२।२२]यत्ते ॥ तेमरुतः । यद्वच नं । वदान्वदंति । लेव्याटीकारसंयोगांतलोपयोःकृतयोरूपमेतत् । तदिहापिपृथिव्यांस्थितैरपिश्रृण्वइव श्रूयतइव । इवेतिक स्मादुक्तमित्यतआह ॥ [३३।१]वर्णेति ॥ तदपिकुतइत्यतआह ॥ [३३।१]मेघेति ॥ तैःकृतामेघनादाःश्रूयंतइत्यर्थः । कथंतेमेघनादान्जनयं ति । एषांमरुतांहस्तेषुमेघताडनार्थाःकशाःसंति । किंच । एषांमरुतांयामन् याम्नि । यांत्यस्मिन्नित्यतोमनिन् । मार्गे । चित्रं आश्चर्यं । निऋंजते ऋज्यतेअधिगम्यते अनेकार्थत्वात् । कथंमार्गेचित्रतेत्यतआह ॥ [३३।१]रेण्वादीति ॥ मरुत्सुगच्छत्स्वितिशेषः । वस्तूनांतन्मार्गस्थितानां । विष्णावुत्तरार्धमन्यथाव्याचष्टे ॥ [३३।२]विष्णोरिति ॥ विवक्षायामेवंव्याख्येयमितिशेषः । चित्रंनानावि धं । सर्वजगद्यामन्मार्गेस्वीये निऋंजतेऋज्यतेसंप्रेर्यतेऽमुनामरुद्गतेनेति । षष्ठ्यंतंप्रकृतंअर्थवशात्तृतीयांतमनुवर्तते॥ ३ ॥ प्रवः ॥ [३३।३]शोधकाय ॥ हेकण्वा वोयुष्माकं । शर्धायबलाय । बलप्रदायसुखप्रदायच । घृष्वयेघर्षतेःक्विः । जागृविरितियथा । घर्षणेन शुद्धिर्लक्ष्यते । शोधकायशुद्धायवा । त्वेषद्युम्नायसुप्रकाशज्ञानायाप्रतिबद्धज्ञानाय । शुष्मिणेवीर्यवते । अतिबलायच । प्रधाना यवायवइतिप्रकरणादितोलभ्यते । देवत्तंदेवेषुततं । तनोतेस्तोडित् । ब्रह्मईश्वरं । प्रगायत प्रकर्षेणस्तुत । वाय्वर्थेविष्णुंस्तुतेति कथंसंगच्छतइत्यतआह ॥ [३३।३]प्रीतिरिति ॥ ततश्चविष्णुगानेनवायुंप्रीणयतेत्यर्थः । विष्णौव्याख्याति ॥ [३३।३]वेदाख्यमिति ॥ शर्धा दिपदोदितायविष्णवेवेदाख्यंब्रह्मगायतेतियोज्यमिति । देवत्तमितिविशेषणंवेदेकथमित्यतआह ॥ [३३।४]देवैरिति ॥ वैष्णवंब्रह्म वि ष्णुविषयोवेदः । निर्वचनंतुपूर्वकृतमेव । इदंतुतदुपपादनं ॥ ४ ॥ प्रशंस ॥ [३३।४]अर्हंतव्यत्वतः ॥ आत्मानंप्रत्येवेदमुच्यते । हेकण्व । योसौ । रसस्यसोमस्यजंभे । तादर्थ्येसप्तमी । भक्षणार्थे । ववृधे प्रकटोबभूव । यच्चवस्तुशर्धःसुखाढ्यंबलाढ्यंवा । तमहं तव्यत्वतःकारणादह्न्यं । वेदरूपासुगोषुवेदाभिमानिनीषुधेनुषु क्रीळं क्रीडंतं । अर्थाद्वृषभरूपिणंमारुतंवायुं । प्रशंस स्तुहि । मारु तशब्दार्थोवायुरित्युक्तंविष्णुरेववामारुतः कथंमाभिःप्रमाणैःवेदैरितियावत् रुतत्वेनशब्दितत्वेनस्तुतत्वेन । रुशब्दे । यद्वामरुताम यंमारुतःसंबंधश्चपितापुत्रत्वरूपइत्याह ॥ [३३।५]मरुतांपितेति ॥ ५ ॥ १२ ॥ कोवः ॥ अत्राद्यंपदचतुष्टयंमरुद्विषयेतावद्व्याख्या ति ॥ [३३।६]आसमंतादिति ॥ कःप्रजापतिरुद्दिष्टःकोवायुरितिशब्दितइतिवचनात्कःप्रधानोवायुः । वोमध्ये । सर्वोत्तमेविष्णौकथ मिदंव्याख्येयमित्यतआह ॥ [३३।६]विष्णोरिति ॥ विवक्षायामितिशेषः । आक्षेपएवस्यात्कइतिशब्दइत्यर्थः । तंप्रकारमेवस्फुटय ति ॥ [३३।६]कोनामेति ॥ वःसकाशादितिशेषः । नकेवलमुत्तमस्याक्षेपोनेनक्रियते । किंनामसमस्यापीतिभावेनप्रकारांतरेणव्याचष्टे ॥ [३३।७]त्वदिति ॥ त्वंयावान्वर्षिष्ठस्तावदपीतिभावः । नन्वेवंवःसकाशादासम्यक्समंताद्वावरिष्ठः कोभवेदित्याक्षेपेव्याख्यायमानेईष द्वरिष्ठादिसद्भावप्रसंगः । अन्यथाविशेषणवैयर्थ्यादित्याशंक्यनपूर्ववदाशब्दोत्रवर्षिष्ठशब्देनसंबध्यते किंत्वन्यत्रेतिदर्शयन्ग्मश्चे तिपदार्थमप्याह ॥ [३३।७]आधूतयइति ॥ उत्तरार्धंव्याख्याति ॥ [३३।७]तस्मादिति ॥ यच्छब्दश्रवणात्तस्मादित्ययमध्याहारः । ततश्चा यमर्थः । हेनरोमरुतोवोमध्ये । कः प्रधानोवायुरावर्षिष्ठः उत्तमइतियावत् । कालज्यैष्ठ्यस्यसर्वज्यैष्ठ्योपलक्षणत्वात् । एवंभूत

स्वामिसंपत्त्यायूयमपिमहांतइतिभावः । किंच । यूयंदिवःस्वर्गस्यच । ग्मःपृथिव्याश्च । धूतयःकंपयितारः स्थ । कथं यद्यस्मादेत दखिलंजगदंतंन अंतप्रतीव प्रलयंकर्तुमिव । सींसम्यक् । धूनुथसंधूनुथ कंपयथतस्मादिति । विष्णौतुस्पष्टं ॥ ६ ॥ निवः ॥ [३३।८] नीचैः ॥ हेमरुतो वोयुष्माकं । यामाय यांत्यस्मिन्निति मार्गायोग्रायमन्यवेच मानुषोनिदध्रेनीचैर्धृतः । किमुक्तंभवतीत्यतआह ॥ [३३।८] नेति ॥ पूर्यतेशक्तोभवतिकोपायकोपस्याभिमुखीभवितुं । चशब्दान्मार्गेस्थातुंच । कथं पर्वतःपर्ववान् । बहुवर्षावच्छेदयुत स्तेन लभ्यतेऽत्युच्चइति । एवंभूतोपिगिरिर्वोमार्गेस्थितोजिहीतात्यजद्धि मूलमितिशेषः । उन्मूलोभवदित्यर्थः ॥ ७ ॥ येषां ॥ तथा ऽन्यच्च । येषांमरुतामज्मेषुज्मापृथिवीतदसंबंधिष्वंतरिक्षाश्रितेषुयामेषुमार्गेषुसत्सु । तैर्मार्गैर्मरुत्सुगच्छत्स्वितियावत् । पृथिवीधरा ऽतिभियारेजतेकंपते । किमिव जुजुर्वान्जीर्णः । जीर्यतेःक्वसौरूपं । विश्पतिःराजेव । यथादुर्बलोराजापरेभ्योभीतःकंपतेतथेति । उत्तरत्रसंबंधः ॥ ८ ॥ स्थिरंहि ॥ [३३।१०] स्थिरंवः ॥ हेमरुतः एषामुक्तगुणानांवो । जानंजननंस्थिरंहि । स्थिरत्वेनोत्तमतांलक्षयति । कथमित्यतआहभाष्यकारः ॥ [३३।१०] यतंइति ॥ यस्मान्मरुतोवायोःप्रधानाद्विविभारत्यांजातास्तस्माद्विशिष्टमातापितृसंबंधादेषांजनन मुत्तमं । अनेनहिशब्दोव्याख्यातोभवति किंचतेमरुतोनिरेतवेनिर्गंतुंतत्क्षणेनैव जन्मोत्तरक्षणएव । सर्वलोकाटनायेतियावत् । मातुर्भारत्याःप्रसादेनेतिशेषः । वयो वयोविशेषंयौवनंह्विप्राप्ताइतिशेषः । यौवनप्राप्तिःसर्वसाधारण्यान्नवर्ण्येत्यतस्तात्पर्यार्थमाह ॥ [३३।११] तईति ॥ मातुःप्रसादेन । निसर्गादित्यस्यैवविवरणंआजनेरिति । किंच । यत्यस्मादेषां मरुतां । अनुमातुःप्रसादमितिशेषः ।



हेतौकर्मप्रवचनीयः । मातुःप्रसादेनैव । सींसम्यक् । द्विताशवः द्वितयाद्वित्वेनोपेतंद्विविधमितियावत् । शवस्तत्प्रसिद्धंबलम स्ति । किंतत् । प्रज्ञाबलंबाहुबलंच । तस्मादित्युत्तरत्रसाध्यनिर्देशोद्रष्टव्यः ॥ ९ ॥ उदु ॥ [३३।१२] दिशः ॥ गिरोदेव्याभारत्याः । सूनवो वाश्राःवचनशीलिनः । वचनंशास्त्रव्याख्यानंतदेवशीलंतदेषामस्तीति । शब्दमात्रेवाशतिमंगीकृत्यताच्छीलिकोरोविहितः । त्येते । मरुतोऽज्मेषुउ अज्मेष्वेवमार्गेषुखेचराएवभूत्वा । काष्ठादिशउदत्नत अततेर्लङिरूपमेतत् उदापिरे । किमर्थं । यद्दिशउदापिरेतद भिज्ञु अभिपूर्वाज्जनेरुङ्प्रत्ययोभावे गमहनेत्यादिनोपधालोपः । अभिजन्म अनुसृत्येतिशेषः । अभिजन्मानुसारेणेतियावत् । यातवे यातुंप्राप्तुं गुणानितिशेषः । भारतीपुत्राःव्याख्यानसामर्थ्योपेताश्चयदिनामलोकोद्धारणायनदिग्विजयंकुर्युः । कथंतर्हितदभिजन्मस फलंस्यात् कथंचगुणिनःस्युरितिभावः । तत्रसामर्थ्यसद्भावरूपोहेतुःपूर्वत्रोक्तः ॥ १० ॥ १३ ॥ त्यंचिद्धादीर्घंपृथुं ॥ अत्रकोमिद्रु कश्च तस्यनपात् कथंचेत्यतआह ॥ [३३।१३] पद्रुयामिति । अत्रमिडितिविष्णुवाचीत्युक्तं । तत्कथमित्यतआह ॥ [३३।१४] सेचनांडीति ॥ मिहसेचनेअस्मा त्क्विप् । इदानीमृचंव्याख्याति ॥ [३३।१४] तमपीति ॥ मरुतो । दीर्घमायामवंतं । पृथुंविस्तारवंतं । अप्रधृष्यत्वादमृध्रं । मृधेःक्लेदनार्थात्कर्म णिरः । तत्राक्लेद्यत्वेनाप्रधृष्यत्वमुपलक्ष्यते । मिहोनपातं पर्वतं । त्यंचित् तमपि प्रसिद्धमेवादिकमपि । यामभिः भावेमः । गमनैः । प्रच्यावयंतिस्वस्थानाच्च्युतंकारयंति । घहि ॥ ११ ॥ [३३।१५] मरुतः ॥ बलं ॥ हेमरुतो । यद्यस्माद्वोयुष्माकंबलंह । अखिलमपिबलमस्ति । तस्माद्यूयंजनान् अचुच्यवीतन । गिरींश्चाचुच्यवीतन । च्यवतेर्ण्यंतात्परस्यलुङोमध्यमपुरुषबहुवचनस्य तप्तनप्तनथनांश्चेतितनः । स्वस्थानात्च्युतानचीकरत । एतत्प्रमाणविरुद्धं । पर्वतादीनांस्वस्थानएवस्थितत्वदर्शनादित्यतस्तात्पर्यमाह ॥ जनान्गिरीनपिस्था

नाच्यावयितुंशक्तास्थेति । द्विःक्रियाभिधानस्यप्रयोजनमाह ॥ सम्यगिति ॥ १२॥ यद्ध ॥ कुर्वंति ॥ मरुतोयद्यदायांति तदैषां तेषांमरुतांमध्ये । केचनाध्वन्नध्वनिमार्गे । संब्रुवतेह शास्त्रविषयंसंवादंकुर्वंतिहि । कश्चित्केचित् । आसम्यक् । शृणो तिहशृण्वंतिहि । सर्वदापिशास्त्राभ्यासतत्पराइति ॥ १३ ॥ प्रयात ॥ शीभं ॥ हेमरुतोयूयं । आशुभिर्वाहनैः । शीभंशीघ्रं । नोस्मान्प्रति । प्रयातआगच्छत । आगत्यच । तत्रउ तत्रैवास्मद्गृहेष्वेव । सुसम्यङ्मादयाध्वै मदंकुरुत सुखिनोभवत । कथं । अत्र कण्वेषुकण्वगृहेषु । वोयुष्माकमर्थे । दुवो दोहनानिसंतिहि ॥ १४ ॥ अस्ति ॥ अत्रोत्तरार्धमपूर्णशेषपूरणेनव्याख्याति ॥ सर्वमिति ॥ हेमरुतोवोयुष्माकं । मदायसुखाय । अस्मद्गृहेषुहविरादिसाधनमस्तिहिस्म सुप्रसिद्धमेतत् । किंच । वयमेषांम रुतांसंबंधिनः । स्मसिस्म भवामोहि । कथं । नोस्माकंमरुतांप्रसादाज्जीवसे जीवनाय । विश्वंचित् सर्वं संपूर्णमप्यायुरस्तिहि । तत्प्रसादलब्धायुराद्या वयं कथंतदीयानभवामः । तस्मादस्मानागच्छतेति ॥ १५ ॥ १४ ॥ ५ ॥ कद्ध ॥ एतदपिपंचदशर्चमारु तंसूक्तं ॥ कदा ॥ हेदेवामरुतोयूयं । मांकत्कदा । अनयोर्नतुजन्मांतरभाविनोः । हस्तयोर्नूनंनिश्चितं । दधिध्वे धध्वे । देत्यास्वा दने । क(कइव)मिव । कधप्रियःपिता । पुत्रंन पुत्रंप्रियततातवत् । कथमेतल्लभ्यतइत्यतआह ॥ कदापीति ॥ यद्यस्मात्तस्मात् कधेतिनिपातःकदापिसदापीत्यर्थेवर्तमानः । प्रियशब्देनसमस्तइत्यर्थः । वृक्तबर्हिषइतिमरुतांसंबोधनं । तद्धटयन्व्याख्याति ॥ स्तृतमिति ॥ सप्तम्यर्थेबहुव्रीहिः ॥ १ ॥ क्वनूनं ॥ दिवः ॥ हेमरुतः । तेयूयं । नूनमिदानीं । दिवःस्वर्गात्पृथिव्याश्च ।



क्वगंत क्वगच्छथ । गमनेचवोयुष्माकं । कत्अर्थं । कोर्थः । किंफलं । नक्वापिगच्छथ । किमपिफलंनास्तिवा । एतन्मरुतःप्रतिकिमि तिपृच्छ्यतइत्यतआह ॥ एतदिति ॥ ज्ञातव्यंखल्वेतत् । पुरुषार्थहेतुत्वात् । तत्प्रसादतएवचज्ञायतेनान्यथा । अन्यस्यतथावि धस्यवक्तुरभावात् । अतोयुक्तमेतत् । एवमुत्तरत्रापि । किंच । वोयुष्मान्क्वरण्यंति रणंतिआह्वयंतीतियावत् । गावोनेतिदृष्टांतं विवृण्वन्दार्ष्टांतिकेकर्तुरनिर्देशात्तमपिविवृणोति ॥ यथैवेति ॥ यथैवयवसार्थिनोगावोयवसदातॄनाह्वयंति । तथैव मोक्षादिफ लार्थिनः स्तुवंतःसाधकाः वःक्वाह्वयंति । दुर्लभंह्येतदितिचशब्दः ॥ २ ॥ क्ववः ॥ अत्राद्यपादंव्याचष्टे ॥ स्तुत्यानीति ॥ चशब्दः क्वेत्यस्यानुकर्षणार्थः । अनुपपन्नोयंप्रश्नः । तदीयसुखादेस्तद्गतत्वस्यनिश्चितत्वादित्यतआह ॥ कथमिति ॥ अनेनक्वेत्यस्य कथंभूतानि । केनोपायेनवेत्यर्थांतरसंचारेण । ज्ञेयानीतिपदाध्याहारेणप्रश्नःसमर्थितः । इदानींतुक्वेत्यस्यस्वार्थापरित्यागेनप्रश्नंसम र्थयते ॥ कस्मिन्निति ॥ कस्मिन्नाचार्येनिमित्तेसति । ज्ञापकइत्येकवचनंभगवदपेक्षया । तुशब्दश्चार्थः । इतिचप्रश्नः । सुवितसौभग शब्दार्थमाह ॥ सुवितानीति ॥ परंलक्षणमिति ॥ द्वात्रिंशत्स्वेकमित्यर्थः । यस्मिन्सतिजनावशाभवंतितत्सौभाग्यमित्यु च्यते । ततश्चैवंयोजना । हेमरुतोवोयुष्माकं । नव्यांसिनव्यानिस्तुत्यानिसुम्नानिसुखानि । क्वसुविता सुवितानिसुभद्राणि । चरि तानिक्व । विश्वानि संपूर्णानिसौभगा सौभगानि । सौभाग्यानिचक्वेति ॥ ३ ॥ यत् ॥ अत्रपृश्निमातृशब्दंहरौतावद्व्याख्याति ॥ पृश्नि रिति ॥ वेदःपृश्निः । कथंप्रश्नयोग्यः । पृच्छतेःकर्मणिनिङ् यतोहरिस्तस्यवेदस्यज्ञेयः । तस्यविज्ञातापि । ततःप्रकारद्वयेनपृश्नि माता । पृश्निर्माताज्ञातायस्येतिकरणेकर्तृत्वोपचारः । समासांताभावःछांदसः । पृश्नेर्माताज्ञातेतिच । उभयत्रदीर्घाभावःछांद

सः । मरुत्सुव्याख्याति ॥ मरुतइति[३४।१] ॥ मरुतोविवक्षिताश्चेत्तदापृश्निमातरइत्यस्यगिरःसुताइत्यर्थः । पृश्निर्गौर्भारतीतिवाङ्नाम सुपाठात् । सामातायेषामिति । इदानीमृचंव्याचष्टे ॥ मानुषाइति[३४।१] ॥ हेपृश्निमातरोमरुतोयूयं । यद्यदि । मर्तासोमानुषाः स्यातन स्यात । तदापिवःस्तोताऽमृतोदेवः । स्याद्भवेत् । मानुषावतारेपिभक्तेभ्योदेवत्वादिदातुंसमर्थायूयमिति ॥ ४ ॥ मावः ॥ नस्यात्[३४।१] ॥ हेमरुतो । वोजरितास्तोता । कथंचित्कृतपातकोपि । अत्रजन्मन्यजोष्योसेव्योसंव्यवहार्यः । माभूत् न स्यात् । यवसेमृगोनेतितत्रदृष्टांतः । सोनुगुणोनभवतीत्यतोव्यतिरेकदृष्टांतोऽयमितिभावेनव्याचष्टे ॥ यथेति[३४।२] ॥ यथागोप्राप्ये यज्ञे । धेनुभिर्भक्षणीये । यवसगोचरे यवसेविषये । मृगोव्याघ्रादिरसेव्योऽनुपादेयोभवति । तथानायंपूजादावसेव्योभवती ति । नकेवलमिहासंव्यवहार्योनभवति । किंतु । अमुत्रच यमस्यपथामोपगात् यममार्गेचनव्रजेत् । नन्वसेव्यत्वाभावेसेव्यःक श्चिद्दृष्टांतोवक्तव्यः । व्यतिरेकमुखेनासेव्योव्याघ्रादिःकथमुच्यतइत्यतआह ॥ योचेति[३४।२] ॥ तस्मादस्मानपियुष्मत्स्तोतॄन्कुरुतेति याच्ञायांह्यत्रतात्पर्यं । याच्ञाचैवमेवभवति । यत्परनिंदैतत्स्तुतिलक्षणैकदेशयुक् । अतोयुक्तमुक्तं ॥ ५ ॥ १५ ॥ मोषुणः ॥ मावधीत्[३४।३] ॥ हेमरुतो । भवतांप्रसादाद्दुःखदाहंत्रीचेतिदुर्हणा । निर्ऋतिर्नामकाचिद्देवता मृत्युरितियावत् । नोस्मान्परापरा । परतः परस्मिन्काले । परतोपिच ततोपि परस्मिन्काले । सुक्वचित् । मावधीत् उ । नैवहन्यात् । किंतुसानिर्ऋति स्तृष्णयासहपदीष्ट पदगतौ । यातु यत्रक्वच नगच्छतु ॥ ६ ॥ सत्यं ॥ अप्रमेयाः[३४।४] ॥ त्वेषादीप्तिमंतो ऽमवंतः मा प्रमा परिच्छेदः । तद्वंतोमावंतः । नमावंतोऽमावंतः । तएवामवं तः । नविद्यतेमा यस्यसामर्थ्यस्य तदमं । तद्वंतइतिवा । अप्रमेया अपरिमितसामर्थ्याः । यस्माद्रुजांविद्रावकत्वाद्रुद्रस्य वायोरेवपु



त्राः । तस्माद्रुद्रियासोरुद्रियाः । रुद्रशब्दादपत्येघः । मरुतः । सत्यं क्रियाविशेषणमेतत् । सत्यंयथातथा । नतुमायया । धन्वंचित् धन्व न्नपि धन्वदेशेपि । अवातां वातरहितां । अचेतनंवातंविनापीतियावत् । मिहं सेचनं । संपदादित्वात्क्विप् । वृष्टिमिति यावत् । आसम्यक् । इच्छयैव । कृण्वंतिकुर्वंतिहि । विशेषणसद्भावप्रसिद्धौप्रथमोहिशब्दः । वातशब्दोमरुत्सुदेवेष्वपि वर्ततइत्यचेतनमित्युक्तं ॥ ७ ॥ वाश्रेव ॥ एषां[३४।५] ॥ यद्यदैषांमरुतांसकाशाद्वृष्टिरसर्जिसृष्टा । यदैतेवृष्टिंसृजंतीतियावत् । तदाविद्युन्मिमातिप्रकाशार्थोयं भूमिंप्रकाशयेत् । कथं । वाश्रेव वत्सलामाता यथाअपत्यंपश्येत्तथा । किंच । मातागौर्वत्संन वत्समिव । भूम्यांस्थितान्सिषक्ति । आलिंगति । चशब्दौमिथःसमुच्चये । एतद्विद्युत्कर्माण्येषांसकाशादेवेति ॥ ८ ॥ दिवाचि त् ॥ अत्रपृथिवींव्युंदंतीत्येतावद्व्याचष्टे ॥ लोकमिति[३४।६] ॥ मरुतो यद्यदापृथिवींलोकंव्युंदंति । उंदीक्लेदने । मातृवत्सिंचंति । यथामातागौर्वत्संपयसासिंचतितथा । पृथिवीयदावृष्ट्यासिंचंतितदोदवाहेन पर्जन्येन । सजलेनमेघमंडलेन दिवाचिद्दिवापि । तमःकृण्वंति कुर्वंति ॥ ९ ॥ अध ॥ मानुषादित्वं[३४।६] ॥ अध अथ । अन्यच्चब्रूमः । किंतत् । एषांमरुतांस्वनादपि ध्वनिमात्रे ण । आसमंताद्वर्तमानं विश्वं समस्तं । पार्थिवंपृथिव्यांभवं । सद्म गृहजातं । तत्रस्थामानुषाश्च । प्रारेजंत । मानुषादित्वंसर्वं मबिभेत् । मानुषादिकमितिवक्तव्येत्वप्रत्ययोजातिव्यत्त्यभेदज्ञापनार्थः । तथैवचक्वचित्पाठः । यद्वापरमेश्वरविषयात्स्तुतिरू पात्स्वनात्कर्मफलरूपंयन्मानुषत्वं यश्चगृहाद्यभिमान स्तत्सर्वं । भीतमिवपलायतइत्यर्थसूचनार्थंभावप्राधान्येनव्याख्यातं । ननुगृहाणामचेतनानांकथंभयमित्यतआह ॥ गृहमानिनइति[३४।७] ॥ अत्रसद्मशब्देनविवक्षिताइतिशेषः । यद्वाप्रारेजंतेतिनभ

यार्थं किंतुचलनार्थं । तथाचसह्मशब्दस्यप्रसिद्धार्थत्वेपिनविरोधइतिभावेनाह ॥ गृहादयंवे(चे)ति ॥ १० ॥ १६ ॥ मरुतः ॥ अखिन्नैः ॥ हेमरुतोयूयं । वीळुपाणिभिर्दृढस्वीयैःपाणिभिश्च । दृढाश्वतेस्वीयाश्च । बहुलवचनाद्विशेषणयोरेवसमासः । अखिद्रयामभिरीं अखिन्नैरेवगमनैश्च । खिददैन्येअस्माद्रः । चित्राविचित्राः । रोधस्वतीर्नदीरनुयात चालनेप्यश्रमान्हस्तांश्चालयंते वेगवद्भिर्गमनै यद्रोधःसुवयंतपस्यंतःस्मः तानदीःप्रति यातेति । यद्वायामगमनशब्दौकरणार्थौ । ततोहस्तपादोपेतायूयं नत्वचेतनवायुरूपाइत्यर्थः ॥ ११ ॥ स्थिरावः ॥ स्थिराःसंति ॥ हेमरुतो । वोयुष्माक मिहागमनाय । स्थिराद्दृढाः । सुसंस्कृताःसम्यक्संस्कारवंतोऽभीशवोऽभीशुवंतस्तेजस्विनोरथाः । अश्वासोश्वाश्च । संतुसंति । एषांरथानांनेमयश्चस्थिराःसंति । तैरागच्छतेतिभावः ॥ १२ ॥ अच्छ ॥ ब्रह्मणश्च ॥ ब्रह्मणस्पतिंब्रह्मणोहिरण्यगर्भस्यपतिंविष्णुं । चशब्दात्ब्रह्मणोवाचःपतिंवायुंच । तनाव्याप्तया । तनोतेःपचाद्यच् ततःस्त्रीलिंगात्तृतीयायायाडापइतिनाश्रितं । बहुविषयया गिरा । जरायैसंस्तुतित्वेन जराशब्दःस्तुतिवाचीभावप्रधानः । सुपांसुपोभवंतीतिचतुर्थीतृतीयार्थे । अच्छवद यथावद्वद । तृतीयाकस्मिन्नर्थइत्यतआह ॥ तृतीयेति ॥ भावरूपिणी इत्थंभूतलक्षणार्था । माभूद्वाविभक्तिव्यत्ययः चतुर्थ्येवेत्थंभूतलक्षणार्थाव्याख्येया । कथमित्यतआह॥ सर्वाइति ॥ आद्यश्चशब्दोभिविधौ द्वितीयःपक्षांतरे । इत्थंभावइत्थंभूतलक्षणं । तृतीयैवेत्थंभूतलक्षणेस्मर्यते । नचतुर्थ्याद्याः । तत्कुतएतदित्यतआह ॥ महान्व्याकरणइति ॥ इत्यस्यार्थस्य



प्रतिपादकमस्ति । ततःकोर्थःसंपद्यतइत्यतआह ॥ संस्तुतीति ॥ संस्तुतिरूपेणोपेतयागिरेत्यर्थः । उत्तरार्धव्याख्यानंविष्णुमित्यादि । अग्निंन अग्निवत् । मित्रंन तथासूर्यवद्दर्शतं स्वप्रकाशं स्वाधीनःप्रकाशोस्येति । यद्यपिदर्शतशब्दोदृश्यमात्रवाची तथाप्यग्न्यादिदृष्टांतोपादानसामर्थ्यात्स्वप्रकाशमित्युक्तं । यथाऽग्निसूर्यावालोकांतरानपेक्षयास्वमहिम्नादृश्येते । तथास्वप्रसादेनैवदृश्यमिति । मित्रंनदर्शतमग्निमित्यन्यथाप्रतीतिनिरासायपुनर्विष्णुमित्युक्तं । ब्रह्मणस्पतिशब्दोक्तंविष्णुमेव । अन्यथामारुतत्वव्याकोपात् । नन्वत्रकंप्रतिवदेत्युच्यतइत्यतआह॥ आहचेति ॥ युष्मद्युपपदेमध्यमस्यविधानादात्मनश्चयुष्मदर्थत्वादभावात्कुतएतदित्यतआह ॥ दार्ढ्यइति ॥ स्वस्यप्रतियोगिता युष्मदर्थता ॥ १३ ॥ मिमीहि ॥ कीर्ति ॥ अत्राप्यात्मानमेवाहकण्वः । त्वमस्यप्रकृतस्य ब्रह्मणस्पतेर्विष्णोः । श्लोकंकीर्तिं । आस्येमुखे । मिमीहि निर्मिमीष्व सदाकुरु । तथाअन्यच्च । पर्जन्यइव पर्जन्योमेघोयद्वद्यथा वृष्टिंविस्तारयतिच । नकेवलंस्वस्मिन् जलंकुरुतेतथैव । त्वमीशस्य । तथा तथाभूतां । सत्यांकीर्तिं । जगत्यपि। ततनः। तनोतेर्लोडर्थेलुङिगुपेःछंदसीत्यत्रछंदसीतियोगविभागाच्चङ् विस्तृणीहि । शिष्येभ्योप्युपदिश। किंच । उक्थ्यंप्राणोवाउक्थमितिश्रुतेरुक्थंब्रह्मणस्पतिः । तद्विषयं गायत्रंसाम गाय ॥१४॥ वंदस्व ॥ पनस्युं ॥ त्वेषंप्रकाशवंतं । पनस्युंपनतिरिहज्ञानार्थः । ततस्ताच्छीलि(कःस्युः)कोस्युः । ज्ञानशीलं । चोविशेषणसमुच्चये । अर्किणंविज्ञेयमृग्भिरितिशेषः । अर्काः ऋचः । ताअस्यसंतिज्ञापिकाइत्यर्की तं । यद्वाऋगतौ । अस्मात्कर्मणीन्तस्यकागमः । मरुतामयंमारुतस्तंमारुतंगणं । वंदस्व स्तुहि । नचस्तोतुंनजानामीतिवाच्यं यतोस्मे अस्माकं । इह निमित्तसप्तम्येषा। एतेषुमरुत्सुनिमित्तेषु । तदनुग्रहाद्वृद्धाअसन् आसन्

अभवन् । ज्ञापकाइतिशेषः ॥ १५ ॥ १७ ॥ ६ ॥ प्रयत् ॥ एतदपि दशर्चं मारुतं सूक्तं ॥ [३४।१४] परावतः ॥ हेमरुतो यूयं । परावतो दूरतः । हरेःस्थानात्स्वलोकेस्थित्वैव । जंतुषुशोचिर्न शोचिरिव प्रकाशमिव । मानंज्ञानंप्रकर्षेणास्यथक्षिपथ । एतदेवस्पष्टयति ॥ [३४।१४] सूर्योदयइति ॥ एवेतिमुख्यार्थतांद्योतयति। किंच यदित्था यद्यत्सर्वंदृश्यंप्रमितमितियावत् । इत्थंएवंप्रकारं । तत्तथामरुतां युष्माकंकृतमितिशेषः । सप्रकारंकार्यजातंयुष्माभिरेवनिर्मितमित्यर्थः । एवमन्यच्च । यद्यूयंज्ञानाद्यत्रक्कवागच्छथ । यत्किंचिज्ज्ञानाविषयंकुरुथ जानीथ। तत्कस्यकिमधीनेन। क्रत्वा क्रतुना ज्ञानेन । यच्चबलात्कचिद्गच्छथ बलविषयंकुरुथ । तत्कस्य किमधीनेनवर्पसाबलेन । आक्षेपस्यतात्पर्यमाह ॥ [३४।१५] स्वतंत्रत्वादिति ॥ क्वचित् । ज्ञानेबलेच । किंतु । यत्कंचिद्याथ जानीथ । तत्स्वाधीनादेवज्ञानादितिशेषः । यच्चबलात्कंह कस्यचित् धूतयोयूयंकंचिद्धूनुथेतियावत् । तत्स्वबलाद्धीतिशेषः ॥ १ ॥ स्थिरावः ॥ [३४।१६] शत्रूणां ॥ हेमरुतो वोयुष्माकं । पराणुदे संपदादित्वात्क्विप् । इहजगतिशत्रूणामपनोदाय । उतप्रतिष्कभे शत्रूणांस्तंभनायवा। ऽऽयुधाआयुधानिहेतयः । संतु संति। नकेवलमायुधमात्रं किंतु ।तास्तान्यायुधानि । स्थिरा स्थिराणि । वीळुवीळूनि। सदासुदृढान्येव । स्थिरत्ववीळुत्वयोःकोभेदइत्यतआह ॥ [३४।१७] स्थिरत्वमिति ॥ हेतुहेतुमद्भावएवैतयोर्नत्वैक्यमिति भावः । तथा अन्यच्च । युष्माकंतविषीतेजोबलंवाऽस्तुअस्ति । कथंभूतंपनीयसी पनतेःस्तुत्यर्थात्कर्मणिईयसुन् । स्तुत्या सदोत्तमं । मायिनोमर्त्यस्य। छद्मिनांदैत्यादीनां। पनीयसीतविषी उत्तमंबलं अथवातेजः। मा नास्तिहि। अतोस्मत्तपोविघ्नान्दैत्यादीन् हतेति ॥ २॥ परा॥ [३४।१९] स्थिरंच ॥ हेमरुतोयूयं यत्स्थिरं दीर्घकालमनाद्यज्ञानपापादितच्च। भक्ताय युष्मद्भक्तस्य। पराहथह विनाशयथ।



किंच । गुरु गुरूनुत्तमानपि । नरोनरान्पुरुषान्नित्यमंजसागुणैर्गुणानदत्वा । वर्तयथ । किंच । यूयं वनिनोवनसंबंधिनस्तरून्वियार्नथ विशेषेणयाथ । पर्वतानांपृथिव्याश्चाशादिशःपर्यंतान्नित्यंवियाथन । युष्माकमगम्यंनास्तीति । विष्णुपक्षेवनिनइत्यस्यार्थांतरमाह ॥ [३४।२०] सम्यगिति ॥ हरिर्वियाति । वनतेःकर्मणीन् । पृथिवीपर्वतशब्दौतुप्रागेवव्याख्यातौ ॥ ३ ॥ नहिवः ॥ भूमौ ॥ हेरिशादसःसुसुखिनः । कुतएतल्लभ्यते । यद्यस्मात्सुखेनधनार्जनाद्यायासेनविना शंसुखमदंत्यनुभवंतितस्मात् । वोयुष्माकं । द्यवि दिवि स्वर्गे । शत्रुःशातयिता । नाधिविविदे नैवलभ्यते । भूम्यांभूमौच नाधिविविदे । उपलक्षणमेतत् । क्वचिच्च नैवलभ्यते । कुतः । हेरुद्रासोरुद्रारुजांद्रावकामरुतोयुष्माकंवोनूचित् । अद्यापिसदेतियावत् । आधृषे निखिलाशुभसंततेराधर्षणायैव । सकलदैत्यनिबर्हणाय । तना व्याप्ता । कथंनित्यतया । युजायोगेनसहिता । तविषीबलंतेजोपिऽवास्तुअस्तिहि ॥४॥ प्रवेपयंति ॥ मरुतोदेवाः । पर्वतान्प्रवेपयंतिकंपयंति । वनस्पतींश्च विविंचंति मूलतःपृथक्कुर्वंति । विष्णौपूर्वार्धंव्याख्याति ॥ [३४।२२] जनीति ॥ तारतम्येनफलदानतः । किंच मरुतः । सर्वया विशा ताभिःसर्वाभिःप्रजाभिःसहैव । आरतप्राप्ताःसंगताः । सर्वप्रजास्वतिष्ठंतेतियावत् । किंच । दुर्मदाइवमत्ताइव स्वप्रयोजनानुसंधानहीनाएव । नरान् । शुभाशुभकृतौप्रेरयंतीतिशेषः॥५॥ ॥ १८॥ उपो॥ [३४।२३] अयुग्ध्वं॥ हेमरुतो यूयंरथेषुपृषतीरुपायुग्ध्वं उपयोजितवंतएव । रोहितश्च प्रष्टिः पृष्ठंवहति। रोहितंरथेपृष्टतोयोजितवंतइतियावत् । तदावोयुष्माकं । यामाय यामंगमनंप्रति। तत्सोढुमितियावत् । पृथिवीचित् धरापि। दार्ढ्याऽऽश्रोत् पुनरतिशयेनाऽऽश्रेत् शेषमितिशेषः । श्रिञउकारोगुणोविकरणलोपश्चछांदसः । आश्रयत् । नञानिर्दिष्टमनित्यमित्यतोनपादादावि

तिप्रतिषेधोनभवति । किंच । मानुषामनुष्याश्चाबीभयंत अबिभयुः भीतिमापुः ॥६॥ आवः ॥ क्षिप्रं ॥ हेरुद्राः । मरुतोवयं । वोयुष्माकंसकाशात् । कंसुखंसुखस्य । तनाय तनोतिरत्रप्राप्त्यर्थः प्राप्तये । मक्षुक्षिप्रं । युष्मद्युष्माकं । अवोरक्षां । वृणीमहे प्रार्थयामहे । तस्माद्यथापुरा बिभ्युषेभीतियुक्तायकण्वाय । मह्यमितियावत् । गतवंतः । गत्यर्थकर्मणीतिचतुर्थी । इत्था तथैव । नूनमद्यापिच । नोस्मान्प्रत्यवसारक्षणेन । रक्षणंकुर्वंतएव । गंतआगच्छत ॥७॥ युष्मेषितः ॥ युष्माभिः ॥ हेमरुतो योदुरात्मायुष्मेषितः युष्माकंसर्वस्यनियंतृत्वान्मुख्योयुष्माभिरेवचेषितः प्रेरितः । अथवामर्त्येषितःबाह्यदृष्ट्यामर्त्येनमानुषेणराजादिनाप्रेरितःसन् नोस्माकमभ्वः अभ्वशब्दोयंद्वितीयाबहुवचनांतः । अभूतीरैश्वर्याभावमाईषते सम्यगिच्छति । तंयूयं शवसासुखेन । वियुयोत द्रावयत वियोजयत । ओजसाबलेनच वियुयोत । तथायुष्माकाभिरूतिभिर्युष्मदीयोतिभिर्वियुयोत । युयुवियोगे ॥८॥ ओजइत्यादिनोत्तरमृग्द्वयंसंकीर्णव्याचष्टे । तत्रायंविवेकः ॥ असामिहि ॥ हेप्रयज्यवः यजतेःकर्मणियुः । प्रकर्षेणेज्याःमखेज्याः । प्रचेतसः प्रकृष्टचित्ता मरुतोयूयं । कण्वंकण्वायासामि असममनुत्तमं । अभीप्सितमितिशेषः । दद दत्त । असमशब्दःसमाभावस्यवाचकः । उत्तमाभावस्तुकथंलभ्यतइत्यतउक्तं ॥ सममुत्तममिति ॥ समशब्दउत्तमस्याप्युपलक्षकइत्यर्थः । किंच । असामिभिरसमैरूतिभिरभिप्रायैः । अस्मद्रक्षाविषयानुत्तमाभिप्रायवंतोयूयं । विद्युतोवृष्टिमिव । क्षिप्रंनोस्मानागंतागच्छत ॥ ९ ॥ असाम्योजः ॥ हेसुदानवः सुदानशीलाः । धूतयोरिपूणांकंपकामरुतोयूयं । असाम्यसममोजोबलंबिभृथ । असामिशवःसुखंचबिभृथ । अतःपरिमन्यवे प्राप्तकोपाय । ऋषिद्विषेदैत्याय । तंहंतुं । इषुंन शरमिव । प्रतिद्विषंसृजत । अत्रसुदानवइत्यादेर्ददेत्यत्रसंबंधयोग्यतेति



ज्ञापनायसंकरेणव्याख्यातं ॥ १० ॥ १९ ॥ ७॥ उत्तिष्ठ ॥ अष्टर्चमिदंब्रह्मणस्पत्यादिदेवताकंसूक्तं । अत्रदेवयंतःप्राशूरितिपदद्वयंव्याख्याति ॥ देवयंतइति ॥ दीव्यतेर्घञ् देवःपूजास्तुतिर्वा । ततस्तत्करोतीतिणिच् । अतिशयेनकृतमशनंभोजनमनेनेत्यतिकृतान्नः प्राशूरुच्यते प्राश्नातीति । हेब्रह्मणस्पतेविष्णोवायोवा । अस्मान्प्रत्यागंतुमुत्तिष्ठ । यतोदेवयंतोवयंत्वामीमहे शरणं । सुदानवोमरुतश्चास्मातुपप्रयंतु । हेइंद्रत्वंच । सचासुखेनैवास्मद्यज्ञस्यप्राशूर्भव ॥ १ ॥ त्वामित् ॥ सहसस्पुत्रेत्येतत्सामान्यतोविशेषतश्चव्याचष्टे ॥ वायोरिति ॥ सहसस्पुत्रेत्यस्यवायोःसुतेत्येवार्थः । विवक्षितस्तुसंधिर्भवतीतिपुत्रइतीत्यसंहितोनिर्देशः । अत्रव्युत्पादनापेक्षातीवनास्तीत्येवशब्दः । अथतत्रापिहरिर्वायुनाव्यंग्यत्वात्तत्पुत्रःप्रोक्तः । शक्रस्तुतत्सुतएव नतुतत्रोपचारबीजंचिंत्यं । धनेहितइत्यस्यार्थमाह ॥ युद्धमिति ॥ प्रोक्तं इत्यनेननिघंटुसिद्धतामाह ॥ निहितंनिधिरूपंधनमेववाहितधनं । स्वश्व्यमितिव्याचष्टे ॥ स्वश्व्यंत्विति ॥ शोभनाअश्वाइंद्रियाणिस्वश्वाःतेषामिदंस्वश्व्यं । तच्चज्ञानादि । आचकइत्यस्यार्थमाह ॥ आचकइति ॥ अनेकार्थत्वाद्धातूनांचकतृप्तावित्ययंदर्शनेपिवर्तते । अपीतिक्रियाद्वयसमुच्चयसूचनार्थं । हेसहसस्पुत्र । योमर्त्यःत्वामेव हेमरुतोवोयुष्मांश्च । हितेधनेविषये । उपब्रूतेस्तौति । आचके अपश्यच्च । ससुवीर्यस्वश्व्यंच । आसम्यक्रुदधीतधृतवान्प्राप्तवान्हि ॥ २ ॥ प्रैतु ॥ अत्रब्रह्मणस्पतिशब्दार्थंस्मारयति ॥ पतिस्त्विति ॥ तस्माद्ब्रह्मणस्पतिरितिशेषः । इदानीमृचंव्याख्याति ॥ अग्रंतइति ॥ असौब्रह्मणस्पतिःप्रैतु अस्मत्कार्येष्वग्रतोयातु मुख्यसाधकोभवतु । एवंसूनृता सूनृतवागभिमानिनीदेवीसरस्वती । वैष्णवी विष्णोःसंबंधिनीवा । वागाज्ञारूपा प्रैतु । अन्येपिसर्वेदेवा नो

स्मदीयंयज्ञं । वीरंनर्यस्वार्थेप्रत्ययः । नरपंक्तिराधसं अच्छप्रतिनयंतु । कःपंक्तिराधाः । कथंचेत्यतआह ॥ यदिति ॥ पङ्क्तिशब्दः पंचपर्यायः । पङ्क्तिविंशतीतिनिपातनात् । पङ्क्तिपंचविधान्जनान्राधयतीतिपङ्क्तिराधाः । अंतर्णीतण्यर्थाद्राध्यतेरसुन् । वर्धनंस जनादि । वीरोनर्यश्चकिंसएवोतान्यइत्यपेक्षायामाह ॥ वीरइति ॥ शब्दार्थौतुस्फुटौ । पंचजनाःकइत्यतआह ॥ देवेति ॥ ३ ॥ यः ॥ वाघते ॥ योब्रह्मणस्पतिर्विष्णुः । वाघतेस्तुवतेभक्ताय । स्तुतिकर्मसुपाठात् । सूनरंवसुददाति । किंतत्सूनरं कथंचेत्यतआह ॥ सुष्ठ्विति ॥ भूयाद्भवेत् । तज्ज्ञानं । किंचयःसविष्णुर्वाघते । अक्षितिश्रवोऽक्षयांकीर्तिंच । धत्तेदत्ते । तस्मैविष्णवे । सुवीरांसुप्रतूर्तिमनेहसमिलामन्नंहविः । वयमायजामहे दद्मः । अन्नेसुवीरादिशब्दान्व्याख्याति ॥ सुवीर्यत्वादिति ॥ सुवीर्यहेतुत्वात् । शोभनंवीरंवीर्ययस्मादिति । सुपेशकृत्सुरूपकृत् । प्रतूर्तिशब्दोरूपपर्यायः । पेशोवेगोवा । इलापेक्षयाभाष्येस्त्रीलिंगं । अनानामीहायस्मादितिसमासांतोसिच् ॥ ४ ॥ प्रनूनं ॥ सएव ॥ ब्रह्मणस्पतिः । सभगवान् विष्णुरेवोक्थंतद्विषयमुक्थविषयं मंत्रं । नूनंनिश्चितंप्रवदेत् । कथंभूतंमंत्रं । इंद्रोवरुणोमित्रोअर्यमाअन्येचदेवाः । यस्मिन्मंत्रेओकांसिगृहाणि । चक्रिरेयस्यवाच्याः । किमुक्थंकथंचेत्यतआह ॥ उक्थमिति ॥ उत्थापकत्वेनोत्पादकत्वेन । सुपिस्थः । उदःकः । तर्ह्युत्तरार्धविरोध इत्यतआह ॥ तदिति ॥ देवाश्चभगवद्विषयस्यापिमंत्रस्यामुख्यतोवाच्याभवंति । अतोनविरोधः । सर्ववेदानांप्रवर्तकोवाच्यश्च सएवेति ॥ ५ ॥ २० ॥ तमित् ॥ यद्वाच्याः ॥ हेदेवाः वयं इंद्राद्यास्तादेवता यस्यमंत्रस्यवाच्याउक्तास्तमित् तमेवशंभुवं सुखकारणं । अनेहसमिंद्रियप्रवृत्तिहेतुं मंत्रं । विदथेषुविदेरथक्प्रत्ययः । ज्ञानेषुज्ञानार्थं । वोचेम जपामहे । नरोयुष्मन्मंत्रजप्ता



रोवयमितीमांचास्मद्वाचंप्रतिहर्यथ स्वीकुरुत । सत्यतयेतिशेषः । तेनचवःसकाशाद्युष्मत्प्रसादाद्विश्वाविश्वानि । इत्एव । वामावामानिभद्राणि । अखिलंशुभमश्नवदश्नवान्यहं ॥ ६ ॥ कः ॥ अतिदौर्लभ्यात् ॥ हेदेवादेवयंतंदेवान्यातिभजतइतिदेवयन् तं । देवभक्तंयुष्मद्भक्तंजनं । कोश्नवत् अश्नुवीत आप्नुयात् । किंच । युष्मानुद्दिश्य वृक्तबर्हिषं । सम्यक्ज्ञानादिपूर्वं । स्तृतबर्हिषंयजमानंवा । कोन्वश्नवद्गच्छेत् । कुतोदेवभक्तयजमानावप्राप्यौ । अतिदौर्लभ्यात् । नकेवलंदुर्लभः । किंतु । असौदाश्वान्यजमानः । स्वयंपरानपेक्षया । पस्त्याभिःसुखैर्युक्तएव । प्रप्रास्थित प्रास्थित । वीप्सायांद्विर्वचनं । तत्रतत्रस्वेष्टस्थानेष्वेव प्रकर्षेणास्थितोभवति । किंचस दाश्वान् ज्ञानतोयजन्नंतर्वावत्क्षयं । अंतर्वाविष्णुः । कुतः । यतःसर्वस्यांतर्गतः । वातेर्विच् । तद्वत्वेनतत्साद्दश्येन । मतुब्वाऽयं । तत्स्वामिकत्वेन क्षयंस्थानं । असमर्थसमासोयं । दधेधत्ते प्राप्नोति । सर्वव्यापीभवति ॥ ७ ॥ उपक्षत्रं ॥ उपपृक्तः ॥ सइंद्रोजनार्दनः । क्षत्रमुपपृंचीत । क्षत्रियैर्मन्वादिभिरुपपृक्तोभवति । कथं । अरिसैन्यआविष्टश्चासौ । देवस्तैराजभिःशत्रून्हंति । भक्तानांभयेचप्राप्ते । सुक्षितिंस्वाश्रयं शोभनमाश्रयं भयनिवारणं । दधे ददौ ददाति । किंचास्यवज्रिणोवर्ता अभिगंता प्रतियोद्धा । क्वचिन्नास्तिहि । तरुताजेतावा नास्ति । योऽभिवर्ततेसवर्ता । यस्तुतरतिअतिक्रामति सततर्ता । कुत्र । महाधनेचार्भेचनास्ति । किंतन्महाधनमर्भंचेत्यतआह ॥ युद्धमिति ॥ प्रधनशब्दपर्यायोहिमहाधनशब्दः । अर्भशब्दोऽल्पवाची । क्षत्रियाणांप्रसिद्धधनंयुद्धापेक्षयाऽल्पधनमेवेतिहेरर्थः । यद्वानेनमार्गेणोत्तरस्यापिमंत्रजातस्यव्याख्यानंसिद्धमेवात उपरम्यतइतिहिशब्देनाचष्टेभगवान्मुनिः ॥ ८ ॥ २१ ॥ ८ ॥ देवताःकंचुकायंतेवेदोबंदिजनायते । यस्यतस्मिन्रमानाथेसुदृढा

प्रीतिरस्तुमे ॥ १ ॥ येभवंतिजनाःसंतःप्रज्ञासौजन्यशालिनः । तोषंतेमत्कृतौयांतिकिमन्यैःपशुसन्निभैः ॥ २ ॥ शब्दानांसाधनं सम्यक्तत्प्रयोजनकीर्तनं । नाकार्षविस्तरभयादिहतत्क्षम्यतांबुधैः ॥ ३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादविरचितस्यश्री मदृग्भाष्यस्यटीकाजयतीर्थभिक्षुविरचितासमाप्ता ॥ समाप्तोयंतृतीयोऽध्यायः ॥ ३ ॥ समाप्तश्चायंग्रंथः ॥ ७ ॥

अयं ग्रंथः कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागर-
मुद्रणालये मुद्रयित्वा प्रकाशितः शके १८२३.

